॥ श्रीः ॥




# सद्धर्म्ममकरन्दः

दीपङ्करादीनां चतुर्विंशतिसम्बुद्धानां सकाशेभ्यो

व्याकरणलाभादिपूर्व्वकम्

## भगवतः श्रीशाक्यमुनेः सज्जीवनचरितम् ।

तत्प्रकाशितैः परमोत्कृष्टधर्म्मजातैश्च प्रतिमाण्डितः ॥

---

लङ्कायां दोडन्दुवग्रामे

शैलबिम्बारामविहारे सरस्वतीमण्डपमधिवसता

बौद्धसिद्धान्ताचार्य्यचन्द्रकीर्त्त्युपाधिधारिणा

पूज्याचार्य्यश्रीशीलस्कन्धयतिवरेण

विरचितः ।

---

लङ्कायां

कालतीर्थमण्डलान्तवर्तिपञ्चयोजनविभागस्य शासनकर्त्रा

मुदलियारइत्युपाधिधारिणा मन्त्रिवर्य्येण

श्रीमता साइमोन्तियदोर्गुणवर्द्धनाख्येन महोदयेन

मुद्रापितः प्रकाशितश्च ।

---


भारतवर्षान्तःपातिनि कोल्हापुरे श्रीसमर्थश्रीसिद्धेश्वरमुद्रणयन्त्रालययोः

समुद्रितः ।





शकाब्दाः १८३२.

THE

# SADDHARMA-MAKARANDA.

A Treatise

ON

THE LIFE AND TEACHINGS

OF

# ÇÂKYA MUNÎNDRA.




BY

THE VERY REV: C. A. SEELAKKHANDHA

MAHA THERA

Bauddha Siddhantacharya Chandrakirti

*Author of Sanskrit Commentaries on "Bhakti Sataka Tikà", "Anuddha Sataka Tìkà", "Sárártha Chandrikà of Thrikàndasesà Tìkà" &c.*

*Principal of "Saraswatîmandapa" Sailabimbàrâma, Dodanduwa, Ceylon.*

*And Member of committee on Oriental Studies Colombo.*

PRINTED AND PUBLISHED

BY

S. T. GUNAWARDHANA,

Mudaliyar, Pastun Korele Kalutara, Ceylon.

PRINTED AT

SHRI SAMARTH & SHRI SIDDHESHWARA, PRESS

KOLHAPUR.

INDIA.

1911.

॥ श्रीः ॥

# सद्धर्ममकरन्दः ।

## अवश्यमिदं पठनीयम् ।

यः श्रोत्राभरणं करोति न सुने सद्धर्मवाणीमपि
यस्याऽसीत् सफलं न लोचनयुगं सौन्दर्यसन्दर्शनैः ।
नोपश्लोकयते यदीयरसना चित्रं चाऽऽस्वामृत
न श्रोत्रं न च लोचनं न रसना तस्याह्निनः साधर ॥ ·

## विज्ञप्तिः ।

इह खलु जगति साधनीयेषु धर्मार्थकाममोक्षाख्येषु चतुर्षु पुरुषार्थेषु नितान्तपरमसुखसाधनं सर्वोत्तमं निर्वाणमेव प्रधानम् । तत्तु निर्वाणं सर्वकाल एवाविनश्वरसुखतया नित्यसुखस्वरूपतया च समग्रविभवेभ्यः परमोत्कृष्टविभवत्वेनैव समाद्रियते नितरां धर्माभिषक्तैः प्रशस्तशेमुषीप्रभावशालिभिः समस्तसुधीवर्यैः । तदिदं मोक्षः निरोध इत्यादिभिः पर्यायनामभिः समभिलक्षितम् । निर्वाणं हि सर्वथा धर्मप्रतिपाद्यमिति धर्म एव तस्य मूलस्तम्भतया परमं स्वं नाम निर्वाणपर्येषणधुरन्धराणां सर्वेषां सहृदयानाम् ।

अस्मिंस्तु जगति तस्य धर्मस्यातीव दुर्लभतया संसारजलधौ निमग्नां वाग्विषयातिक्रान्तान्यनेकानि दुःखान्यनुभवन्तीं प्रमाणपर्यन्तरहितां जनतां समुद्वीक्ष्य कम्पितहृदयो जगदानन्दकरो जनहितकारी ज्ञानपयोनिधिर्विशदगुणरत्नमन्दिरायमाणः परमकारुणिको भगवान् शाक्यमुनिः कल्पशतसहस्राधिकं चतुरसङ्ख्येयपरिमितं कालं दानशीलादीनि समत्रिंशत्पारमीधर्माणि सम्परिपूरयन् सन्नभ्यतीतानाममितगुणसमुदायानां चतुर्विंशतिसम्यक्सम्बुद्धानां सकाशात्तो लब्धव्याकरणः समधिगतविविधगुणसमुदयः संवर्द्धितविशदतरपरमोत्कृष्टवीर्यातिशयः इतश्चतुस्त्रिंशदधिकपञ्चशतोत्तरद्विसहस्रादूर्द्ध्वं संवत्सरे वैशाखमासस्य शुक्लपक्षे पौर्णमास्यामुत्तराषाढनक्षत्रे वर्त्तमाने नद्या नैरञ्जरायास्तीरे अश्वत्थबोधिद्रुममूले अपराजितपर्य्यङ्कवरे संनिषण्णः सकलां मेदिनीमेकमहार्णव निनादिनीं कुर्व्वन् परमाभिसम्बोधिं साक्षात्कृतवान् । स तु भगवान् गौतमः सर्व्वज्ञताज्ञानाधिगमात् सर्व्वान्धर्मान्याथार्थ्यतः सर्व्वाकारेण सम्प्रतिबुध्य सदेवकानां लोकानां हिताय सुखाय च तत्र तत्र परमया करुणया देशयामास । पवित्रितजगत्त्रयेण तेन भगवता जानताऽर्हता सम्यक्सम्बुद्धेन परार्थं देशिताः

सर्व्वे धर्म्मा अतीव सूक्ष्मा गम्भीरा निपुणा पण्डितवेदनीया परममधुरा कर्णरसायनाश्च भवन्ति । ते च सर्व्वे धर्म्मा सूत्राभिधर्म्मविनयवशात्त्रिधा विभक्ता आसन् । तेषा खलु धर्म्माणा दुरूहार्थतामनधार्य्य प्राप्तमान सविद्भिर्विदितशास्तृशासनैरधिगतपरमार्थधर्म्मैर्वशीकृतेन्द्रियैर्भगवत शाक्यमुने शिष्यभूतैस्तत्तत्ये कुशाग्रधीभि क्षीणाश्रवैर्भिक्षुगणैश्च शेषाणा मर्वाग्दर्शीना याथार्थ्येनार्थावगमनार्थमर्थपरिदीपनवशादेव तदर्थसंवर्णना टीकादीना करणेनापि ते भूयिष्ठ विशदीकृता ।

साम्प्रत यत्किञ्चिल्लोकहित धर्म्मसाद्येव कर्त्तुकामेन मया भगवत शाक्यमुने प्रवचनभूतेषु सूत्राभिधर्म्मविनयसङ्ख्यातेषु त्रिषु पिटकेषु तदर्थसंवर्णनादिषु चान्तर्भूतानि बहूनि पुस्तकानि समवलोक्य तेषा तु प्रायशो महावर्ग-दार्घनिकाय-बुद्धवश-अर्थशालिनी-समन्तात्प्रासादिका-सुमङ्गलविलासिनी-मधुरार्थविलासिनी-विशुद्धिमार्ग-जातकार्थकथा महावश सम्बुद्धधर्म्मविलासिनीत्यादीनि पुस्तकानि च पुन पुन समवलोक्य तेभ्य पुस्तकेभ्यस्तांस्तान् धर्म्मभागान् समुद्धृत्य यथाविधि सम्यक्क्रमेण नाति सक्षेपतो नातिविस्तरतो भगवत शाक्यमुने शेषाणामतीताना चतुर्विंशतिसम्बुद्धानाञ्च विचित्रचरितप्रतिमण्डितम् अन्यैश्चावगमनार्यैर्विशिष्टधर्म्मभागै समलङ्कृत सस्कृतभाषामयमेक पुस्तक निर्मातु समुद्योगो विधायते ।

अस्य च पुस्तकस्य मया सद्धर्ममकरन्द इति सज्ञा कृता । तस्यार्थो हि तावत् सत्य पूजित प्रशस्तो वा धर्म सद्धर्म इति निर्व्वचनादस्मादस्य धर्म्मस्य सत्यता श्रेष्ठता च सम्यक् प्रतायते । मकरन्द इति पुष्परसस्तस्य मध्विति स्फुटोऽर्थ । अनयार्थावगमतया एव सद्धर्ममकरन्द सकलाना सद्धर्म्यानामाह्लादमावहतीत्ययमर्थोऽपि स्पष्ट । यस्मिंस्तु

पुस्तके तानि सद्धर्ममधूनि ईषदप्यन्तर्गतानि परिदीपितानि वा तदपि पुस्तकं तदुपचारेणैव सद्धर्ममकरन्द इति नाम्ना प्रतिभाति । यथा जगति रसान्वेषणतत्परा रसगृद्धा रसास्वादेषु निरता जना मधुररसं मधु यत्र कुत्रचिल्लब्ध्वा तन्मध्वेव परमया प्रीत्याऽऽस्वादयन्त एव । एवमेव भगवतः शाक्यमुनेः परमामृतधर्मरसो भवसागरं समुत्तर्तुकामैः साधुजनैर्यत्रकुत्राचिदृष्ट्वा श्रुत्वा वा सादरं सगौरवं भूयिष्ठं परिशीलनीयः सम्भावनीयश्च भवति । यथा लोके सकलेषु रसेषु मधु परमं श्रेष्ठमतिप्रियमित्युच्यते । एवमपि जगद्विख्यातेषु सर्व्वेषु सच्चरित्रेषु भगवतः शाक्यमुनेराश्चर्य्यविशेषावहः श्रोतव्यः प्रियतरो मधुरः श्रुतिसुखावहोऽन्यः कश्चिच्चर्य्याविशेषः कुत्रचिन्नास्त्येव । तथाचोक्तं श्रीमता पूज्यपादेन आचार्यबुद्धदत्तेन महास्वामिना यतिवरेण ।

> * सोतब्बरूपं पन बुद्धवंस
> कथाय अञ्ञं इध नत्थि यस्मा ।
> पसादिकं बुद्धगुणे रतानं
> पवाहनं पापमलस्स मय्हं ॥

* " अस्य संक्षिप्तभावोऽत्र संस्कृतभाषया लिख्यते—" यस्मादिह जगति बुद्धगुणेष्वभिरतानां साधुजनानां बुद्धवंशकथासदृशी श्रोतव्या प्रसादमावहन्ती चित्तसम्भूतपापमलापगमकारिणी अपरा कथा नाम न विद्यते । तस्मान्मनसो विक्षेपाकुलतां चञ्चलताञ्चापहत्य एकाग्रमनसा अनन्यविहितेन चित्तेन च मया भाषितेयं मधुरा परिशुद्धा बुद्धवंशकथा युष्माभिः सम्यक् श्रोतव्या तद्वत् प्रमादस्य हेतुभूतं सर्व्वं कार्यञ्च परिवर्ज्य साधुभिर्नितान्तश्रवणकथनादर्हा इयमिति दुर्लभा बुद्धवंशकथा साधुजनैः सततं सादरं परिशीलनीयेति " ॥

अथवा तदेवं सर्वथा स्वभावपरभावभावाभावेष्वनुपपद्यमानेष्वविद्यातिमिरोपहतमतिनयनतया विपरीतम्भवति । तथाह आचार्यचन्द्रकीर्तिपादः,—

> " स्वभावं परभावञ्च भावञ्चाभावमेव च ।
> ये पश्यन्ति न पश्यन्ते तत्त्वं हि बुद्धशासने " ॥ इति च ।

मपि संविद्यते । तदप्यत्र संक्षेपेण प्रख्याप्यते । तद्यथा -लोकाशिवङ्करणे जगत्पावनेन भगवता शाक्यमुनिना तच्छ्रावकभूतैः क्षीणाश्रवैर्यतिवरगणैश्च तत्र तत्र सनिमित्तकं सहेतुकं यानि यानि धर्मजातानि परिदीपितानि विभूतानि प्रकाशितानि । तानि सर्व्वाणि च ततः पश्चात् तदर्थपरिदीपनाय विहितानि अर्थवर्णनाटीकादीनि च पालीत्यपरनामिकया शुद्धमागधीभाषयैव कथितानि । सेयं शुद्धमागधीभाषा तु काव्यादर्शादिष्वलङ्कारशास्त्रग्रन्थेषु आचार्य्यश्रीदण्डिप्रभृतिभिः कविवरैर्निर्दिष्टा मागधीभाषेव देशीयभाषा न स्यात् । अपि तु देवीभाषेव संस्कृता मनोहरा भाषा । सा तु सम्यक्सम्बुद्धादिभिर्विगतरागादिपापमलैः सुविमलबुद्धिशालिभिः आर्य्यवर्य्यैर्यथार्ह संस्कृत्यादावेव तन्त्रनयं समानीता नितान्तपरिशुद्धा मधुरा कोमला भाषा । सा किल भाषा लोके सर्व्वासु भाषासु श्रेष्ठतया प्रधानतया च मूलभाषेति प्राचीनैः प्रशस्तबुद्धिशालिभिर्विपश्चिद्वरैः सुनिश्चिता । सा न निश्चना अपि तु प्रकृतैव तस्या मूलभाषात्वकथने यद्वक्तव्यं तदत्र ग्रन्थविस्तरभिया न लिख्यतेऽस्माभिः ।

एषा तु शुद्धमागधीभाषा सम्प्रति लङ्का–स्याम–ब्रह्मविषयेषु (ब्रह्मदेशे च) प्रायशो व्यवहृता । एङ्ग्लण्ड-रषिया-फ्रंच जेर्माणि-अमरिकादिषु पराविषयेष्वपि विद्वद्भिरत्यल्पशो व्यवहृता च श्रूयते ज्ञायते च । नात्र समये भारतवर्षान्तर्गतेषु केष्वपि नगरेषु यत्र कुत्राचित्स्थाने येन केनचित्तत्रत्येन विदुषा एषा शुद्धमागधीभाषा व्यवहृता श्रुता ज्ञाता च। यदि व्यवहृता भवेत् सा गुप्ता । पुरा किल एषा शुद्धमागधी भाषा भारतवर्षे ग्रामनिगमनगरादिषु सर्व्वत्र भूयो व्याप्ता विस्तृता विशदीकृतेति आख्यायिकादिषु दृश्यते । कालातिक्रमेण तत्रत्यानां

म ्ष्याणां केनचिदपकर्मणा एषा शुद्धमागधीभाषा तस्मिन् लुप्तप्राया जाता । इदानीन्तु तत्रत्या विचारसिका धर्मपरायणा केचिद्  बुद्धास्तस्या भाषाया अध्ययनेऽध्यापने च पुन समुद्योगमापन्ना इति मया प्रत्यक्षतोऽवगतम् तच्चितान्त साधिति तान् गभ्दतर प्रशंसाम ।

परन्त्वेतस्मिन् काले भारतदेशीया सम्कृतादिषु तद्देशीयभाषासु विशारदा केचित् केचित पण्डितप्रवरा परिशुद्धबौद्धधर्माध्ययनेऽपि समुद्युता प्रयता हृष्टमनसो वसन्तीति मया भूयिष्ठ ज्ञातम् । अथापि तेषा विपश्चिता शुद्धमागधीभाषाया आविदितत्वात्तावदात्मनोऽभिलषित साधयितु न शक्तिरिति श्रूयते । तथा तत्रत्या केचिदपि सम्कृतवेदिनो धार्मिका मानवा परिशुद्धबौद्धधर्माध्ययने सतत समुद्योगवन्तो जिज्ञासव इति च श्रूयते । तेषाञ्च परेषा बौद्धधर्माभिरतानाञ्च हिताय भगवत शाक्यमुने परिपूतचर्य्याविशेष यथासामभिज्ञातु प्राग्वैतत् सद्धर्ममकरन्दनामक पुस्तक सम्पादितम । किन्तु शुद्धमागधीभाषया देशितानां परमगम्भाराणा निपुणार्थाना धर्माणा सम्कृतभाषया परिवर्तने नितरा दुरवबोधानि सूक्ष्मतमानि स्थानानि प्रायशो निरन्तरमुपरम्यान भवन्ति । अपि तु तानि स्थानानि तदर्थस्य तदभिप्रायस्य चा[illegible]सम्पादनेन पुन पुन परिचिन्त्य सम्यक्प्रयुक्तानि । ईदृशु स्थानेषु निरन्तर सम्भात नायायाम्तादृश्या दुष्करताया स्वभाव तादृशु कृतिषु परिचितहृदय पण्डितप्रवरा कृतिन एव साधु जानन्ति नान्य इति निदर्शमम्मतमेतत् ।

तस्य च सद्धर्ममकरन्दस्य सम्पादने भाषासौगम्यकरणे च मया भूयिष्ठ समुत्सोऽस्मि । भाषासौगम्यकरणन्तु तदर्थमुगमतयानदभिप्राये चामोदतया सरतते । इदानीन्तना केचित्तथाकरण न स्वीकुर्वन्ति ।

अपरे तु तत्यज्ञा बहवो विद्वत्प्रकाण्डाः साध्विति प्रीतिपुरःसरं प्रत्यनुमोदन्त इति मन्येहम् । अस्य च पुस्तकस्य यावता प्रयत्नेन सुगमता भवेत् तथा मया भूयसा प्रयत्नः कृतः । तथापिदर्शीनां कृर्तीनां सकृदेव संस्करणात्सर्वस्खलितान्यपाकर्तुं सर्व्वथा परिशोधयितुं च के वा जगति समर्था भवन्ति । तादृक् समर्थो भुवि दुर्लभ एव ।

किन्त्वपरे विद्वांसो विदाङ्कुर्व्वन्तु । भवन्तः! आर्य्यजातीयाः सैंहला मनुष्याः पूर्वस्मिन्काले भारतदेशादेव लङ्काद्वीपमागताः । ततस्ते भारतदेशीयानां पूर्व्वज्ञातयो भवन्तीति । अत एव यदा ते चिराद्विप्रवासिता ज्ञातिं दूरादागच्छन्तीं दृष्ट्वा ज्ञातिमित्रसुहृदादयो दर्शनमात्रेणैवाभिनन्दन्ति आगतां च तां सादरं प्रतिगृह्णन्ति। तथैवेतां मत्कृतिं दृष्ट्वास्माकं पूर्वज्ञातिपरम्परानुयासेनैव विहितेयमिति मत्वा भारतदेशीयाः सन्तुष्टिपुरःसरमेतत् परिशीलयन्तु सम्भावयन्तु च । महता प्रयत्नेनेदं पुस्तकं सम्पादितं तथापि यदत्र मम भ्रमात्प्रमादाद्वा किञ्चित्स्खलितं सुधीभिर्लक्ष्येत तत्तु कृपया परिशोधनीयम् । एतस्य पुस्तकस्य दर्शने परिशीलने च सुधियः सुकुमारमतयः सततं प्रवर्त्तन्तामित्येवं मम विनयतः प्रार्थना । तेनैव ह्यस्याः कृतेर्मम श्रमसाफल्यं सर्व्वथा भवेदिति । अलं पल्लवितेन । शिवमस्तु ।

एतस्य ग्रन्थस्य मुद्रणे लिखितपत्रसमालोकनेन मुद्रितपत्रसंशोधनेन च मत्साहाय्यं कृतवतः पण्डितवरेण्यस्य संस्कृतचन्द्रिकासम्पादकस्य मत्सुहृद्वरस्य शिवडेकरोपाह्वस्य विद्यावाचस्पतिविद्यालङ्कारादिविरुदसमलङ्कृतस्य अप्पाशास्त्रिशर्मणो महोदयस्य सत्कार्यं धन्यवादपुरस्सरं बहुशोऽनुस्मरामः ।

किं चैतद्ग्रन्थमुद्रणकार्ये धनवितरणेन यैः कैश्चित्साहाय्यं कृतं तेभ्यः सर्वेभ्यः सुजनेभ्योऽपि कृतज्ञताविनिवेदनेनात्मानं धन्यं कर्तुमुत्सहे।

२४५४ सौगते फाल्गुणे मासि
लङ्कायां देवन्दुव ग्रामे शैलबिम्बारामात्। } श्रीशीलस्कन्धयतिवरः ।

# PREFACE

THE "Saddharma Makaranda" contains the life of Cākya Muni and the holy doctrines which the Blessed One preached to enlighten the world and bring happiness to the sorrowing man. It is called Saddharma because it is the highest and the holiest of all the doctrines taught by the various sages of the world. The excessive satisfaction and delight which it affords the reader, makes us call it "Makaranda," which implies Nectar. These few words are alone sufficient to create in the reader of this preface an insuppressible desire to peruse its pages, and taste the cup of sweetness which Tathgata has reserved for those who follow his doctrine.

An eminent pandit of old has sung —

" Sotabba rūpam pana Buddha Vamsa *
Kathaya aññam idha natthi yasma,
Pasādikam Buddhagune ratānam
Pavahanam pāpa malassi massa
" Tasmā hi sakkacca sam idhiyuttā
Vihaya vikkhepa'manaññacitta,
Samvannanam vannayato sucittam
Nidhaya kammam madhuram sunatha

* There is nothing upon earth more worthy to be read than the life of Lord Buddha. This shall make you happy and emancipate you from sin and sorrow; therefore attend and be you delighted while I sing this to you.—*True translation*

> " Sabbampi hitwāna pamāda kiccaṁ
> Sakkacca maccé'ndda niccakālaṁ.
> Sotum kathetumpi badhena yutta
> Kathā panā'yaṁ atidullabhāti."

It is to enable the Indian mind to appreciate the beauties, and make it taste the incomparable sweetness of the Holy Doctrine of Tathāgata that we undertook this work. As all the various books in which the doctrines of the Blessed One and particulars regarding his life are contained in books written in the Pāli language, which is the pure Māgadhi tongue, and as we are aware that this noble and the most ancient language of the world is known only to a very few in India we have written this in the simplest possible Sanskrit language, so that one with a little knowledge even may be able to find out the happiest state of existence.

It was India which gave birth to the great Câkya Muni, and it was there that He laboured to free man from misery. His life and doctrine will therefore, we hope be received with delight in the scene of his labours, and by his own contrymen.

The books consulted in the preparation of this book are the Three Pitakas, Vinaya, Abhidharma, and Sûtra of which Mahâvaggā, Samantaprasadika, Dirgha nikaya, Sumangala vilàsini, Vishuddhi-Magga, Jâtakârthakathâ, Mahāvamsa and Sambuddhadharma vilāsini have been much used. There-

fore the amount of information which is condensed and published in this book should enhance its value in the eyes of the inquiring reader.

Besides the life and doctrine of Cākya Muni, we have spoken of the twenty four Buddhas who preceeded him. Further we have clearly, and we presume, satisfactorily dealt with the various objections raised against the validity of the truth of our Lord Buddha's struggle with Māra, and his invitation by Bramha. A glance into the table of contents will enable the reader to form just a estimate of the usefulness and importance of this work.

The task has been an onerous one, and for one whose mother tongue is not Sanskrit, it is no doubt very difficult to put things into foreign and intricate language like the Sanskrit, therefore we hope the errors which may be found in this humble effort to propagate the doctrine of the Lord Buddha, in the land of His birth, will be overlooked.

In conclusion I must tender my sincerest thanks to my esteemed friend Mr. Appásástrí Ráshivadekar, Vidyàvàchaspati, Vidyālankār, who kindly undertook to see the book through the press.

*'Sailabimbàràm Vihàra'*
*Dodanduwa, Ceylon*
*20th March 1911.*

C. A. Seelakkhandha.

# CONTENTS.

# अनुक्रमणिका।

अध्यायाङ्कः



अध्यायाङ्कः





# मङ्गलाचरणम् ।

विकाशवत्यां गति यस्य दीप्तौ
रेजे क्षमा चित्रितपट्टकल्पा ।
निरस्तपङ्को जगदन्तवर्ती
मुनिः सदा मद्धृदि वासमेतु ॥ १ ॥

मुनेर्मुखाम्भोजसमाश्रिता या
निरोधसौरभ्यविभाविताङ्गी ।
समस्तकालुष्यविदूरगात्री
सरस्वती भूषयतान्मदास्यम् ॥ २ ॥

संलब्धमार्गफलमुक्तिरसः प्रशान्तः
रागाद्यनन्तदहनोऽग्निमदक्षिणार्हः
सौशील्यमण्डितवपुः सुरवृन्दवन्द्यः
सोऽप्यार्यसंघनिवहो मम हृद्धिनोतु ॥ ३ ॥

इति त्रिलोकप्रणतं त्रिरत्नं
समर्च्य कामं परिशुद्धभक्त्या ।
मुनीन्द्रवंशस्य विभावनार्थं
प्रबन्धमेनं वितनोमि यत्नात् ॥ ४ ॥

क्व सूर्यवन्धोः परिपूतचर्या
क्व चाल्पधीर्मन्दविदो ममेयम् ।
तद्भक्तिभाजस्तु ममोद्यमोऽयं
भूयात्परं बुद्धिविवृद्धिकारी ॥ ५ ॥

सन्ध्याय चेतसि गुरुं गुरुवर्यवर्गं
शिक्षाविधानकुशलं कुशलं गणीशम्
ग्रन्थो जिनस्य स मया समयावबोध-
श्लाघ्यो महद्भिरधुना क्रियते यथार्थम् ॥ ६ ॥

# सद्धर्ममकरन्दः ।

नमस्तस्मै
भगवतेऽर्हते सम्यक्सम्बुद्धाय ।

## अथाविष्करणम् ।

### प्रथमोऽध्यायः ॥

आसीत् पुरा समस्तनगराङ्गलक्ष्मीभारधारिणी मण्डनमिव महीमण्डलस्य हसन्तीव सुधाधवलैर्विचित्रचित्रकर्म्मसमुज्ज्वलैर्विविधसौधनिकरैर्देवानाममरावतीम् अमरावती नाम नगरी । तत्र च नगर्य्यां प्रतिवसति स्म अतः कल्पशतसहस्राधिकानां चतुर्णामसङ्ख्येयानामुपरि महामेधाः सुमेधो नाम द्विजोत्तमः । स हि द्विजवरो मातृतश्च पितृतश्चेति उभतः सुजातः परिशुद्धग्रहणी यावत् सप्तमात् कुलपारम्पर्य्यादक्षिप्तः अनपकृष्टो जातिवादाच्च ।

अभवच्चाऽसौ सुरूपो दर्शनीयः प्रासादिकः । परमेण च शरीरलावण्येन अनुपमेन च सौभाग्येन समुपलक्षितः । स खलु द्विजन्मा कार्य्यमन्यदकृत्वा ब्राह्मणकुलाऽऽयातं स्वं शिल्पं तद्धर्म्मञ्चाऽशिक्षिष्ट । तत्रापि निरन्तरमेव व्यापृतः । स च अचिरादेव महत्या धिषणया अध्यापकः मन्त्रधरस्त्रिपु वेदेपु पारङ्गतः लक्षणेतिहासपञ्चमकेपु साक्षरविशेषेपु सनिघण्टुकल्पादिषु च परमां कोटिं प्राप्तः । केनापि विदुषा वेदविदाऽनभिभवनीयो निखिलबुधजनसम्मानितश्च बभूव ।

अथाऽस्य महामते जगन्नयनानन्दजननस्य शैशव एव माता पितरौ कालालय गतौ । स महात्मा बुद्धिप्रभावात् तच्छोकजाल क्षणमपि विसस्मार । ततश्चाऽमात्य धनाध्यक्ष कोशागाराधिप समग्राणा स्वर्णरजतमाणिक्यमुक्तादिपूर्णाना गर्भाणा द्वाराणि व्यवृणुत । स चाऽमात्य आयपुस्तकानि समादाय तान्युपदर्श्य च व्यजिज्ञपत् । कुमार! तवैषा मातृकी सम्पत्ति । एषा पैतृकी सम्पत्ति । एषा पैतामहिकी सम्पत्ति । एषा प्रपैतामहिकी सम्पत्तिरिति यावत् सप्तमा द्दशपारम्पर्य्यादक्षयमच्छिन सर्व्वस्वमुपदर्श्य भवान् साम्प्रतमेतत् सर्व्व प्रतिगृह्णात्विति ।

अथैकदा स महामति सुमेधो नाम सुधी प्रासादस्य उपरितले रहसि गतो भूत्वा पर्य्यङ्कवरमासेव्य निषण्ण सन्नेवमचिन्तयत् । पण्डित! असारे खलु ससारे पुन पुन प्रतिसन्धिग्रहण नाम दु खम् । तथा उत्पन्नोत्पन्नासु जातिषु शरीरस्य च भेदनम् । अहमपि ताव जातिधर्म्म व्याधिधर्म्म मरणधर्म्म च नातिक्रान्त । तादृशापि मया अजातिं निर्जर निर्व्याधिं शीतलम् अमृतमहानिर्व्वाण नून पर्य्येषितुम-र्हम् । अवश्य हि समुद्योगवता सर्व्वेषा प्राणिना भवत परिमुक्त्यै निर्व्वाणगामिनैकेन सन्मार्गेण भवितव्यमिति । यतोऽह प्रयास्यामि चातुर्महाभौतिकेऽस्मिन् काये निरपेक्षोऽनार्थिकश्च ।

अह हि इद नानादुर्गन्धपूर्ण शरीर त्यक्त्वा निरोध प्रयास्यामि । तादृक् अपि सन्मार्ग अस्त्येव । न किल नास्ति । न च न भवितु शक्नोति । यन्नूनमह भवमुक्त्यै तन्मार्ग पर्य्येषिष्यामीति । ततश्चोऽप र्य्यपि स महासुधीर्विविधाभिरुपमाभिर्भवस्य क्षणभङ्गुरत्व निर्वाणस्य च परमशान्तित्व चिन्तयामास । यथा हि लोके दु खस्य प्रतिपक्ष

सुखं नाम विद्यते । तथा च सति भवे तद्विरोधिना विभवेनापि भवितव्यम् । सत्यपि महाधर्म्मे तदुपशमहेतुभूतं शीतलमपि अस्ति । तथा रागाद्यग्नीनामुपशमकारणेन निर्वाणेन भवितव्यम् । यथा हि पापस्याकुशलस्य प्रतिपक्षभूतं निरवद्यं कुशलमपि अस्त्येव । तथा सत्यां जात्यां जातितो विगतेन अजातिसङ्ख्यातेन निर्वाणेनापि भवितव्यमेवेति ।

स महामतिः अपरमपि अचिन्तयत् । यथा हि पुरुषः अशुचिपरिकीर्णगात्रः परिशुद्धिकामी दूरतोपि पञ्चवर्णैः पद्मैः संछन्नं निर्म्मलाम्बुपरिपूर्णं स्वच्छं महातटाकं पश्यति तद्दृष्ट्वा कतमेनात्र मार्गेण गन्तव्यमिति क्षिप्रं तेन पुरुषेण तत्तटाकं पर्य्येषितुं युक्तम् । यदपि तस्य तटाकस्य अपर्य्येषणं तत्तु न तटाकस्य दोषाय । पुरुषस्यैव तस्य स दोषः । तथा रागादिक्लेशमलसंशोधनार्थम् अमृतमहानिर्वाणतटाके विद्यमाने यदस्य अगवेषणं तदपि न निर्वाणतटाकस्य दोषाय स हि तस्यैव पुरुषस्य दोषः । यथा हि पुरुषश्चौरैः सम्परिवृतो विद्यमाने पलायनपथे यदि न पलायते न स तन्मार्गस्य दोषः । पुरुषस्यैव तु तस्य दोषः । तथैव पुरुषस्य क्लेशपरिरुद्धस्य विद्यमाने एवनिर्वाणगामिनि क्षेमे पथि तस्यैव पथो यदपर्य्येषणं तदपि न पथो दोषाय । पुरुषस्यैव तु तस्य दोषाय । यथा हि पुरुषो व्याधिपरिपीडितो विद्यमाने चिकित्साविदि कुशले महाभिषजि यदि तं भिषजमन्विष्य तं व्याधिं न चिकित्सयति । न स तस्य भिषजो दोषः । तस्यैव तु रोगिणो दोषः । तथा क्लेशव्याधिपरिपीडितो योपि पुरुषः क्लेशोपशममार्गविदं सन्तमेव कृतहस्तं परमाचार्य्यं न पर्येषयति । स तस्यैव पुरुषस्य दोषः न पुनः क्लेशपरिशोधनकुशलस्य आचार्य्यस्य ।

अथाऽस्य महामते जगन्नयनानन्दजननस्य शैशव एव माता पितरौ कालालय गतौ । स महात्मा बुद्धिप्रभावात् तच्छोकजाल क्षणमपि विसस्मार । ततश्चाऽमात्य धनाध्यक्ष कोशागाराधिप समग्राणा स्वर्णरजतमाणिक्यमुक्तादिपूर्णाना गर्भाणा द्वाराणि व्यवृणुत । स चाऽमात्य आयपुस्तकानि समादाय तान्युपदर्श्य च व्यजिज्ञपत् । कुमार! तवैषा मातृकी सम्पत्ति । एषा पैतृकी सम्पत्ति । एषा पैतामहिकी सम्पत्ति । एषा प्रपैतामहिकी सम्पत्तिरिति यावत् सप्तमा द्वशपारम्पर्य्यादक्षयमच्छिन्न सर्व्वस्वमुपदर्श्य भवान् साम्प्रतमेतत् सर्व्वं प्रतिगृह्णात्विति ।

अथैकदा स महामति सुमेधो नाम सुधी प्रासादस्य उपरितले रहसि गतो भूत्वा पर्य्यङ्कवरमासेव्य निषण्ण सन्नेवमचिन्तयत् । पण्डित! असारे खलु ससारे पुन पुन प्रतिसन्धिग्रहण नाम दु खम् । तथा उत्पन्नोत्पन्नासु जातिषु शरीरस्य च भेदनम् । अहमपि ताव ज्ञातिधर्म्मं व्याधिधर्म्मं मरणधर्म्म च नातिक्रान्त । तादृशापि मया अजाति निर्जर निर्व्याधिं शीतलम् अमृतमहानिर्व्वाण नून पर्येषितुम र्हम् । अवश्य हि समुद्योगवता सर्व्वेषा प्राणिना भवत परिमुक्त्यै निर्व्वाणगामिनैकेन सन्मार्गेण भवितव्यमिति । यतोऽह प्रयास्यामि चातुर्महाभौतिकेऽस्मिन् काये निरपेक्षोऽनार्थिकश्च ।

अह हि इद नानादुर्गन्धपूर्णं शरीर त्यक्त्वा निरोध प्रयास्यामि । तादृक् अपि सन्मार्ग अस्त्येव । न खिल नास्ति । न च न भवितु शक्नोति । यन्नूनमह भवमुक्त्यै तन्मार्ग पर्येषिष्यामीति । ततश्चोऽप र्यपि स महासुधीर्विविधाभिरुपमाभिर्भवस्य क्षणभङ्गुरत्व निर्वाणस्य च परमशान्तित्व चिन्तयामास । यथा हि लोके दु खस्य प्रतिपक्ष

सुखं नाम विद्यते। तथा च सति भवे तद्विरोधिना विभवेनापि भवितव्यम्। सत्यपि महाधर्म्मे तदुपशमहेतुभूतं शीतलमपि अस्ति। तथा रागाद्यग्नीनामुपशमकारणेन निर्वाणेन भवितव्यम्। यथा हि पापस्याकुशलस्य प्रतिपक्षभूतं निरवद्यं कुशलमपि अस्त्येव। तथा सत्यां जात्यां जातितो विगतेन अजातिसङ्ख्यातेन निर्वाणेनापि भवितव्यमेवेति।

स महामतिः अपरमपि अचिन्तयत्। यथा हि पुरुषः अशुचिपरिकीर्णगात्रः परिशुद्धिकामी दूरतोपि पञ्चवर्णैः पद्मैः संछन्नं निर्म्मलाम्बुपरिपूर्णं स्वच्छं महातटाकं पश्यति तद्दृष्ट्वा कतमेनात्र मार्गेण गन्तव्यमिति क्षिप्रं तेन पुरुषेण तत्तटाकं पर्य्येषितुं युक्तम्। यदपि तस्य तटाकस्य अपर्य्येषणं तत्तु न तटाकस्य दोषाय। पुरुषस्यैव तस्य स दोषः। तथा रागादिक्लेशमलसंशोधनार्थम् अमृतमहानिर्वाणतटाके विद्यमाने यदस्य अगवेषणं तदपि न निर्वाणतटाकस्य दोषाय स हि तस्यैव पुरुषस्य दोषः। यथा हि पुरुषश्चौरैः सम्परिवृतो विद्यमाने पलायनपथे यदि न पलायते न स तन्मार्गस्य दोषः। पुरुषस्यैव तु तस्य दोषः। तथैव पुरुषस्य क्लेशपरिरुद्धस्य विद्यमान एवनिर्वाणगामिनि क्षेमे पथि तस्यैव पथो यदपर्य्येषणं तदपि न पथो दोषाय। पुरुषस्यैव तु तस्य दोषाय। यथा हि पुरुषो व्याधिपरिपीडितो विद्यमाने चिकित्साविदि कुशले महाभिषजि यदि तं भिषजमन्विष्य तं व्याधिं न चिकित्सयति। न स तस्य भिषजो दोषः। तस्यैव तु रोगिणो दोषः। तथा क्लेशव्याधिपरिपीडितो योपि पुरुषः क्लेशोपशममार्गविदं सन्तमेव कृतहस्तं परमाचार्य्यं न पर्य्येषयति। स तस्यैव पुरुषस्य दोषः न पुनः क्लेशपरिशोधनकुशलस्य आचार्य्यस्य।

ये केचित् प्रव्रजितुकामा भवन्ति ते इमान् परिष्कारान् गृहीत्वा प्रव्रजन्त्विति अक्षराण्यपि विलिख्य स्वलोकमेव जगाम ।

अथ गते च विश्वकर्मणि देवपुत्रे स्वर्लोकम् प्रव्रजितुकामो महा मति सुमेधो नाम पण्डित एकक एव अमरावत्या नगर्या निष्क्रम्य हिमालयप्रदेशे पर्व्वतकन्दरनिर्झरानुसारेण निवासानुरूप सुख स्थान समवलोकयश्चचार । स खलु पण्डितवरो गङ्गानिवर्त्तने विश्वकर्म्मणा दिव्यपुत्रेण निर्मित शतक्रतुना दत्त रमणीयमाश्रम दृष्ट्वा चङ्क्रमणाग्र गत्वा पादवल्नमपश्यन् ध्रुव प्रव्रजिता विदूरे ग्रामे भिक्षा पर्य्येष्य क्लान्तकाया समागत्य पर्णशाला प्रविश्य निषण्णा भविष्यन्तीति मत्वा स्तोकमागमयित्वा अतीव चिरायन्त इति पुनस्तज्ज्ञास्यामीति पर्णशालाकुटीद्वार विवृत्य तत्रान्त प्रविश्य इतश्चेतश्चावालोकयत् । तद्भित्तावक्षराणि चावाचयदेवमचिन्तयच्च । एते परिष्कारा ममायत्ता । इमान् गृहीत्वा प्रव्रजामीति । ततश्च स पण्डित स्वय निवसित माद्व तच्च शाटकयुग्म माजहात् ।

स महासत्त्व शाटके नवदोषान् दृष्ट्वा चीवररज्जौ लग्न बृहद्दला कुसुमदामसदृश रक्त वाकचीर प्रतिगृह्य एकमाच्छादयत् । तस्योपारि अन्यत् स्वर्णवर्ण वाकचीरञ्च परिदधे । ततस्तु पुन्नागपुष्पसस्तरसदृश सक्षुर चमरुचर्म्म एकांशीकृत्य जटामण्डल ववन्ध । निश्चलभावकर णार्थ सार्द्ध चूडया सारसूचिं प्रवेश्य मुक्ताजालसदृश्या शिक्याया मवा लवर्णसदृश कुण्डिकामवधृत्य त्रिपु वक्रा विभङ्गिका समादाय एकस्या विभङ्गिकाकोट्या कुण्डिकाञ्च अपरस्या समूटपेटा त्रिदण्डार्द्धश्चावाल म्बयत् । निरक्रामच्च खारिभारमसकूटेन चापाद्द दक्षिणेन च हस्तेन गृहीत्वा पर्णशालाया । स महामति यष्टिहस्ते महाचङ्क्रमणे अपरापर

चङ्क्रम्यमाणः स्वीयमाकल्पमवलोक्य मन्मनोरथो मस्तकप्राप्तोऽभवदिति तुतोप ।

ममैपा प्रव्रज्या अतीव शोभते । एकान्तेन इयं प्रव्रज्या बुद्धप्रत्येकबुद्धादिभिः सर्व्वैः श्रेष्ठपुरुषैर्वर्णिता प्रशंसिता च । प्रहीर्न मे गिहीबन्धनम् । निष्क्रान्तोस्मि नैष्कर्म्यम् । लब्धा मया उत्तमप्रव्रज्या । करिष्यामि श्रमणधर्म्मम् । लप्स्ये मार्गफलसुखमिति जातोत्साहः खारिंविभङ्गिकां भूमावतारयत् । चङ्क्रमणस्य च मध्ये मुद्गवर्णशिलातले स्वर्णप्रतिबिम्बवन्निषण्णे दिवाभागमाक्षिपत् । स तु सायं पर्णशालां प्रविश्य विदलमञ्चकपार्श्वे काष्ठास्तरिकायाञ्च शिश्ये । जग्राह च स तु शरीरस्यर्तुम् । अतीव प्रत्यूषे प्रबुध्य स्वागमनञ्चावर्जयामास । अहं हि गृहवासे बहून् आदीनवान् दृष्ट्वैव अपरिमितञ्च भोगस्कन्धं अनन्तञ्च यशस्त्यक्त्वा महारण्यं प्रविश्य नैष्कर्म्यगवेषको भूत्वा प्रव्रजेयम् । तत्रेदानीं प्रमादविहारेण कालं क्षेप्तुं नार्हामि । भक्षयन्ति हृतविवेकं नरं प्रमादचारिणं मिथ्यासङ्कल्पमक्षिकाः । ततश्चेदानीं मया विवेकसुखमेव वर्धयितुमर्हमिति ।

अहं हि गृहवासं दोपवशात् सम्प्रतश्च निष्क्रान्तः । इयञ्च मनोहरा पर्णशाला । पक्वमालूरवर्णवत् परिभाण्डीकृता भूमिः । रजतवर्णाः धवलभित्तयः । कपोतानां पादप्रभासदृशःपर्णशालाच्छदिः । विचित्रवर्णास्तरणो विदलमञ्चः । निवाससुखं वासस्थानम् । मद्गृहसम्पदायाः अतिरिक्तैव एषा सम्पदृश्यत इति । स च पर्णशालायां दोपांश्च विचिन्वन् अष्टावादीनवान् ददर्श ॥

जहार च स महासत्व उटजमष्टदोपसमाकीर्णम् । स खलु छन्नां कुटीं सन्त्यज्य दशभिर्गुणैः समुपेतं वृक्षमूलमुपसमक्रामत् । अथ स

महासत्त्वो द्वितीयेऽह्नि ग्राममेकं भिक्षार्थं प्रविवेश । तस्मै भिक्षार्थमटते ग्रामिकास्ते मर्त्या महता चाध्यवसायेन सौमनस्येन च चेतसा भिक्षां प्रददुः । तत्र स महासत्त्वो भोजनं कृत्वा स्वमाश्रममागम्य निपद्य एवमचिन्तयत् । अहं तु आहारलौल्यान्न प्रव्रजेयम् । एतद्धि स्निग्धं भोजनं मानमदं पुरुषमदञ्च वर्द्धयति । अत्याहारमूलकस्य दुःखस्य नास्त्यन्तः । स महासत्त्वो यन्नूनमहं यैः कैश्चिद्वापितैः रोपितैर्वा धान्यैः सम्पादितमाहारविशेषं मुक्त्वा स्वयंपतितानां फलानां भोजको भवेयमिति निश्चयमकार्षीत् । स महासत्वः सुमेधः ततः प्रभृति फलभोजनः सन् दिवानिशं नितरां महोद्योगं व्यायामं कुर्वन् सप्ताहाभ्यन्तर एव अष्ट समापत्तीः पञ्चाभिज्ञाश्च समुत्पादयामास ।

एवं हि महासत्त्वे सुमेधनाम्नि तपस्विनि समापत्तिसुखेन प्रीतिसुखेन च सुखीभूय कालं व्यतिक्रामयति भगवान् लोकशिवकरो दीपङ्करो नाम महामुनिर्लोके उदपद्यत । तस्य भगवतः प्रतिसन्धिग्रहणसमये प्रसवसमये सम्बोधिसमये धर्म्मचक्रप्रवर्तनसमये च इयं सकलापि दशसाहस्री च लोकधातुः प्राकम्पत । समकम्पत । सम्प्राकम्पत । सम्प्राचिक्षिप्त महान्तं रावमकरोत् । द्वात्रिंशच्च पूर्व्वनिमित्तानि प्रादुर्बभूवुः । तस्मिंस्तु समये स सुमेधपण्डितो ध्यानरतो समर्पितसमापत्तिसुखेनैव कालं क्षेपयामास । ततः स नैतन्महाशब्दमशृणोत । तानि च पूर्व्वनिमित्तानि न ददर्श ।

तस्मिंश्च काले भगवान् दीपङ्करो नाम महामुनिश्चतुर्भिः क्षीणाश्रवशतसहस्रैः परिवृतः सन् आनुपूर्व्येण चारिकायां चरन् रम्यकं नाम महानगरं सम्प्राप्तः । तत्र सुदर्शननाम्नि महाविहारे प्रतिवसति स्म । तदा रम्यनगरवासिनोऽपि मनुष्या एवं शुश्रुवुः । दीपङ्करः स्थि-

जिनवरः परमाभिसम्बोधिं प्रतिपद्य प्रवर्त्तितवरधर्म्मचक्रः अनुक्रमेण चारिकायां चरन् रम्यपुरं सम्प्रापत् । प्राप्य चेदानीं सुदर्शननाम्नि महाविहारे प्रतिवसतीति । तेऽपि महाजनास्तच्छ्रुत्वा सर्पिर्नवनीतादीनि पञ्च भैषज्यानि च परिधानप्रावरणादीनि वस्त्राणि च ग्राहयित्वा गृहीतगन्धमालादिहस्ता यत्र बुद्धो यत्र धर्म्मो यत्र सङ्घस्तन्निम्नास्तत्प्रवणास्तत्प्राग्भारा भूत्वा शास्तारं सत्वरमुसंचक्रमुः ।

तेऽप्युपसङ्क्रम्य सक्षीणाश्रवं भगवन्तं दीपङ्करमभिवन्द्य गन्धमालादिभिः सम्पूज्य एकमन्ते निषण्णास्तस्य भगवतो धर्म्मदेशनां शुश्रुवुः । श्रुत्वा च ते धर्म्मदेशनां परेद्युः भोजनार्थं तं भगवन्तं निमन्त्र्य स्वं स्वं गृहं जग्मुः । परेद्युः तेपि सर्व्वे महादानं विसर्ज्जयामासुः । नगरञ्च अलङ्कृत्य तस्य भगवतः सम्यक् सम्बुद्धस्य आगमनार्थं तन्मार्गमपि सज्जीचक्रुः । अत्र पथि वारिभिर्भिन्नेषु तेषु तेषु स्थानेषु पांशून् प्रक्षिप्य भूमितलं समं कृत्वा रजतवर्णानि च पुलिनानि आचक्रुः । तत्र तत्र लाजांश्च पुष्पाणि च विकारयामासुः । नानाविरागैर्वस्त्रैर्ध्वजपताकांश्च समन्तादुच्छ्राययामासुः । कदलीपूर्णकुम्भांश्च प्रतिष्ठापयामासुः ।

तदानीं महामेधाः सुमेधो नाम तपस्वी स्वाश्रमपदं विहाय विहायसा समाजगाम । स तु तेषां मनुष्याणामुपरि आकाशमार्गेण गच्छंस्तान् प्रहृष्टमनसो मनुष्यान् ददर्श । तद्दृष्ट्वा किमत्र कारणमिति विचिन्तयन्नेव आकाशादवरुरोह । एकमन्ते च स्थितः सन् तान् मनुष्यान् पप्रच्छ । भवन्तः! यूयमिदानीं कस्येमं मार्गं संमृशथ । अथ ते मनुष्यास्तस्मै विज्ञापयामासुः भो! सुमेधपण्डित! त्वं न जानासि? भगवान् दीपङ्करः परमाभिसम्बोधिं समभिगम्य प्रवर्तित-

परधर्मचक्र सन् चारिकाया चरन् अस्माकं नगर प्राप्य सुदर्शन नाम्नि महाविहारे प्रतिवसतीति । वय त भगवन्त श्वो भोजनार्थ निमन्त्रयामहे । तस्य भगवत आगमनार्थ मार्गमिममलङ्कुर्म्म इति । तत सुमेधस्तपस्वी अचिन्तयत् । लोकेऽत्र बुद्ध इति घोषमात्रमपि दुर्लभम् । पर बुद्धोत्पादकाल । तस्मान्मयापि एभिर्मनुष्ये सार्द्ध भगवतो दीपङ्करस्य मार्गमलङ्कर्तुमर्हमिति । आह स्म चैव ■ महा मति सुमेधस्तेभ्यो मनुष्येभ्य भवन्त ! यदि यूयमेतन्मार्ग बुद्धस्य दीपङ्करस्यालङ्कुरुथ मह्यमपि एक भाग दत्त । अहमपि युष्माभि स्सह मार्गमलङ्करिष्यामीति । ते साध्विति सम्प्रतीष्य सुमेधस्तपस्वी वशी प्रासर्द्धिरिति जानन्तो वारिभिन्नमेक स्थान समवलोक्य त्वमिद स्थानमलङ्कुर्विति तस्मै तत् स्थान ददु । स च सुमेधो महातपस्वी तद्गृहीत्वा बुद्धालम्बनप्रीत्या एवमचिन्तयत् ।

अह त्विद स्थानम् ऋद्धिबलादलङ्कर्तु शक्नोमि । एवं कृतोपि मा न परितोषयिष्यति । मयाद्य शरीरवैय्यावृतिक कर्तुमनुरूपमिति । तदानीं स पासूनाहृत्य तस्मिन् प्रदेशे अक्षिपत् । तेन तत्प्रदेशे ऽनलङ्कृत एव भगवान् दीपङ्करो महानुभावाना षड्भिज्ञालाभिना क्षीणाश्रवाणा चतुर्भि शतसहस्रै परिवृत आगच्छति स्म । तदा देवा दिव्यमाल्यगन्धादिभिर्दिव्यसङ्गीतिभिश्च पूजा चक्रु । मनुष्याश्च मानुष्य गन्धैर्माल्यादिभिश्च नितरा पूजा प्रवर्तयामासु अपश्यन्महामति सुमे धस्तापस अपरिमाणेन बुद्धविलासेन मन शिलातले विजृम्भमाण मृगेन्द्रमिव प्रतियत्ते वरमार्गे आगच्छन्त मुनिश्रेष्ठ दीपङ्करम् ।

अथ पण्डिताग्रणी सुमेधो नाम तपस्वी द्वे चाक्षिणी समुन्मील्य अलङ्कृतमार्गेणागच्छन्त दीपङ्कर दशबलधारिणमपश्यन् । स च

तस्य भगवतः शरीरे द्वात्रिंशद्वरमहापुरुषलक्षणानि च अशीत्यनुव्यञ्जनानि च व्योमप्रभा केतुमालादींश्च समवालोकयत्। स हि सुमेधस्तपस्वी माणिक्यप्रभासमुज्वले गगनतले विविधा विद्युल्लता इव आवेलावेलीभूतांश्च युग्मयुग्मीभूतांश्च षड् वर्णघनबुद्धरश्मीन् विसृजन्तमग्रप्रासरूपमवालोकयत् । मयाद्य दशबलधारिणे दीपङ्कराय जीवितपरित्यागः कर्तुमर्हः । मा भगवान् दीपङ्करः कर्दममाक्रम्यतु । भगवान् दीपङ्करो माणिक्यमयफलकसेतुमाक्रामन्निव सार्धं चतुर्भिः क्षीणाश्रवशतसहस्रैः मत्पृष्ठं मर्द्दयन् गच्छतु । तन्मे भविष्यति दीर्घरात्रं हिताय सुखायेति । अथ स सुमेधस्तपश्चरः केशान् परिमुच्य अजिनजटामण्डलवाकचीराणि कृष्णकर्दमे प्रस्तार्य्य माणिक्यमयफलकसेतुरिव कर्द्दमपृष्ठे अधोमुखोन्यपद्यत ।

स कर्दमपृष्ठे निपन्नः सन् द्वे चाक्षिणी समुन्मील्य भगवतो दीपङ्करस्य श्रीसमुदयं सम्पश्यन्नेवमचिन्तयत् । यद्यहमिच्छेयमिदानीं सर्व्वक्लेशान् मदह्य सङ्घनवो भूत्वा रम्यपुरमेव गच्छेयम् । किं मे विदितवेशेन क्लेशान् मदह्य निर्वाणप्राप्त्या । नास्ति मे तेन प्रयोजनम् । यन्नूनमहं भगवान् दीपङ्कर इव परमाभिसम्बोधिं प्राप्य महाजनान् धर्म्मनौकायामारोप्य संसारमहार्णवादुत्तार्य पश्चात्परिनिर्व्वास्यामि । इदं मदनुरूपमिति व्यचिन्तयत् । तदनन्तरं स सुमेधतापसः अष्टधर्म्माणि समवधृत्य बुद्धभावाय अभिर्नाहारं कृत्वा निपेदे ॥ *

* कतमानि तान्यष्टधर्म्माणि ? । मनुष्यत्वम् । लिङ्गसम्पत्तिः । हेतुः । शास्त्रसंदर्शनम् । प्रव्रज्या । गुणसम्पत्तिः । अधिकारः । छन्दता चेति । तानीमान्यष्टधर्म्माणि भवन्ति । कथम् । मनुष्यान्मभावे स्थित्वा बुद्धभाव प्रार्थयतः प्रार्थना समृद्धपति । नेतरस्य नागस्य वा सुपर्णस्य वा देवस्य वा । मनुष्याणामपि पुरुषलिङ्गे

अथ भगवान् दीपङ्करोऽप्युपागम्य महाधिपणस्य सुमेधस्य तापसस्य शीर्षोपरि स्थित्वा माणिक्यसिंहपञ्जरमुद्घाटयन्निव पञ्चवर्णप्रसादविस्फुरिते द्वे चाक्षिणी समुन्मील्य कर्दमोपरि निपन्न सुमेधतापस समैक्षत । दृष्ट्वा च भगवान् दीपङ्कर एवमाह स्म । अय खलु महामनस्वी तपस्वी बुद्धभावार्थमभिनीहार कृत्वा निपन्न । समर्द्धिष्यति न्वस्य प्रार्थना नो इति भविष्यज्ज्ञान प्रेषयित्वोपधारयन् अत

---

[ पूर्वपृष्ठादनुवृत्तम् ]

स्थितस्यैव सम्भृध्यति । न स्त्रिया पण्डकनपुसकोभतोव्यञ्जनकानां वा । पुरुषाणामपि तस्मिन्नात्मभाव एव अर्हत्वप्राप्त्यै हेतुमम्पनस्यैव सम्भृध्यति । नेतरस्या हेतुसम्पन्नस्य । हेतुसम्पन्नानामपि सजीवबुद्धस्यैव सन्निधौ प्रार्थयत सम्भृध्यति न परिनिर्वृते भगवति तच्चैत्यसमीपे वा बोधिवृक्षमूले वा प्रार्थयत । बुद्धानां सन्तिक प्रार्थयतामपि प्रव्रज्यालिङ्गे स्थितस्य सम्भृध्यति न गृहस्थलिङ्गे स्थितस्य प्रव्रजितानामपि पञ्चाभिज्ञाऽष्टसमापत्तिलाभवत एव सम्भृध्यति नान्यस्य गुणसम्पत्त्या विरहितस्य । गुणसम्पन्नानामपि येन स्व जीवित बुद्धाना परित्यक्तम् । तस्य अनेनाधिकारेण समन्वितस्यैव सिध्यति । नेतरस्याधिकारासम्पन्नस्य । यस्य बुद्धकारकधर्म्मार्थ महाश्छन्दश्चाध्यवसायश्च व्यायामश्च पर्य्येष्टिश्च भवति तस्यैव सिध्यति । नेतरस्य । तत्रेद छन्दमहत्ततायामियमुपमा । यथा हि य कश्चिदमम् एकोदकीभूत सकलचक्रवालगर्भ स्वबाहुभक्त्या प्रतीर्य्य पार गन्तु समर्थ । स बुद्धत्वमाप्नोति । यश्चापि वशगुल्मसञ्छन्न सकल चक्रवालगर्भ व्यूह्य सम्मर्द्य पादाभ्यामेव गच्छन् पार गन्तु कुशल । सोऽपि बुद्धत्वमाप्नोति । य कश्चित् तत्र तत्र तीक्ष्णखड्गधाराभ्याक्रोश्य नैरन्तर्य्ये शस्त्रीस्थलसमाकीर्णं सकल चक्रवालगर्भं पादाभ्यामाक्रम्यमाण पार यातु समर्थ । सोऽपि बुद्धत्वमाप्नोति । यो हि ज्वलिताङ्गारकै परिपूर्ण सकल चक्रवालगर्भं पादाभ्या परिमर्दयन् पार गन्तु बलवान् । सोऽपि बुद्धत्वमाप्नोति । यो हि एतेषामपि कारणानामकमपि दुष्करमिति न मन्यते । अहमप्येत प्रतीर्य्य वा पार गमिष्यामीति । एव महता छन्देन चाध्यवसायेन व्यायामेन पर्य्येषणया च समन्वागत । तस्यैव प्रार्थना सम्भृध्यति । नेतरस्येति ॥

कल्पशतसहस्राधिकानि चत्वारि असङ्ख्येयानि अतिक्रम्य गौतमनाम्ना सम्बुद्धो भविष्यतीति समभिजज्ञौ । ज्ञात्वा च स्थितः सन् पर्षन्मध्य एवमभिनिवेदयामास । पश्यत यूयं कर्दमोपरि निपन्नमुग्रतपसमिमं तापसमिति । ते एवं भवन्! इति ऊचुः । अयं महासत्त्वो बुद्धभावार्थमभिनीहारं कृत्वा निपन्नः । समर्धिष्यत्येकान्तेनास्य प्रार्थना । एषः अतः कल्पशतसहस्राधिकानि चत्वारि असङ्ख्येयानि क्षिप्त्वा गौतमनाम्ना सम्बुद्धो भविष्यतीति । तस्मिन् काले अस्य कपिलवस्तुनाम महानगरं निवासस्थानं भविष्यति । माता माया नाम देवी । पिता शुद्धोदनो नाम नृपाग्रणीर्नरवरः । अग्रश्रावक उपतिष्यो नाम स्थविरः । द्वितीयश्रावकः कोलितो नाम स्थविरः । उपस्थायक आनन्दो नाम स्थविरः । अग्रश्राविका क्षेमा नाम स्थविरा । द्वितीयश्राविका उत्पलवर्णा नाम स्थविरा च भविष्यति । एष महासत्त्वः परिपक्वे ज्ञाने महाभिनिष्क्रमणं कृत्वा महान्तं वीर्यं करिष्यति । अथ सुजातया नाम श्रेष्ठिदुहित्रा दत्तमनुदकं मधुक्षीरपायसं प्रतिगृह्य नैरञ्जनाया नाम नद्यास्तीरे परिभुज्य । तदह्न्येव बोधिमण्डलमुपसङ्क्रम्य अश्वत्थवृक्षमूले अभिनिपद्य सम्बोधिं समधिगमिष्यतीति ।

अथ सुमेधतापसो मम प्रार्थना किल समर्धिष्यतीति सौमनस्यं सम्प्राप्तः । महाजना दशबलधारिणो दीपङ्करस्य तद्वचः श्रुत्वा अयं सुमेधो नाम तापसो बुद्धबीजाङ्कुर इति प्रसन्नमनसः तुतुषुः । अचिन्तयंश्चैवं ते महाजनाः । नदीमुत्तरन्पुरुषः ऋजुना मार्गेणोत्तर्तुमशक्नुवन् अधस्तीर्थेनैवोत्तरति । तथा वयं भगवतो दीपङ्करस्य शासने मार्गफलमधिगन्तुमशक्नुवन्तः अनागतेऽध्वनि यदा त्वं सम्बुद्धभावं प्राप्स्यसि तदा भवतः सम्मुखान्मार्गफलाधिगमं कर्तुं समर्था भविष्याम इति ते प्रार्थनां प्रस्थापयामासुः । ततो भगवान् दीपङ्करोऽपि

बोधिसत्त्व प्रशस्य अष्टभिश्च कुसुममुष्टिभि समभ्यर्च्य प्रदक्षिणी कृत्य प्राक्रमत । तेऽपि चतु शतसहस्रसङ्ख्या क्षीणाश्रवाश्च बोधिसत्त्व गन्धैश्च कुसुमैश्च सम्पूज्य प्रदक्षिणञ्च कृत्वा प्राक्रमन्त । देवाश्च मनुजाश्च तथैव समभ्यर्च्य प्रणम्य प्रदक्षिणञ्च कृत्वा प्राक्रमन्त ।

अथ बोधिसत्त्व सर्व्वस्मिंश्च प्रयाते शयनादुत्तस्थौ । ततस्तु पारमीधर्म्माणि विचेष्यामीति पुष्पराशेरुपरि पर्य्यङ्कमाभुज्य निषण्ण । एव निषण्णे बोधिसत्त्वे सकलेषु दशसहस्रचक्रवालेषु देवता समागत्य साधुनाद प्रवर्त्तयामासु आर्य्यसुमेधतापस! पूर्व्वेषा बोधिसत्त्वाना पर्य्यङ्कमाभुज्य पारमीर्विचेष्याम इति निषण्णे कालेयानि* पूर्व्वनिमि-

---

* कतमानि तानि पूर्व्वनिमित्तानि । तद्यथा । १ शीतञ्चापगतम्भवति । २ उष्णञ्चोपशाम्यति । ३ दशसहस्री लोकधातुर्नि शब्दा भवति निराकुला च । ४ न वान्ति महामारुता । ५ न च स्रवन्ति स्रवन्त्य । ६ पुष्प्यन्ति स्थलजानि चैव जलजानि च सर्व्वाणि कुसुमानि । ७ भवन्ति फलभरिता सर्व्वे वृक्षलतादय । ८ विद्योतन्ते सर्व्वाणि रत्नानि आकाशगतानि चैव भूमिगतानि च । ९ वाद्यन्ते तूर्य्याणि मानुष्यकाणि चैव दिव्यानि च । १० अभिवर्षन्ति नभस्तलाद्विचित्राणि च पुष्पाणि । ११ आभुजति महासमुद्र । १२ प्रकम्पते दशसहस्रीलोकधातु । १३ निर्वृता वह्निज्वाला सर्व्वेषु नरकेषु । १४ सविता निर्मलो भवति । १५ दृश्यन्ते सर्व्वाश्च तारका । १६ उद्भिद्यते अनवतप्तेनोदकेन मही । १७ भ्राम्यन्ते अन्तरिक्षे तारागणा । १८ निष्क्रामन्ति स्वस्वाशयेभ्यो विलाशया गुहाशयाश्च सर्व्वे प्राणिन । १९ न भवति सत्त्वानामरति । २० भवन्ति सत्त्व हृष्टा । २१ उपशाम्यन्ति व्याधय । २२ विनश्यति जुगुप्सा । २३ न स्यात् सत्त्वेषु राग । २४ विनश्यति दोषो मोहश्च । २५ न भवति भीति । २६ उध्वसन्ते रजांसि । २७ अपक्राम्यति दुर्गन्ध । २८ प्रवहति सुरभिगन्ध । २९ दृश्यन्ते परस्पर सर्व्वे देवा हित्वा अरूपिणो देवान् । ३० दृश्यन्ते सर्व्वे नरका । ३१ अनावृता भवन्तिकुड्या कवाटा शैलाश्च । ३२ न भवति

तानि दृश्यन्ते सर्व्वाण्यपि तानि अद्य प्रादुर्भूतानि । निराशङ्कं भवानपि बुद्धो भविष्यतीति वयमेतज्जानीमः यस्यैतानि निमित्तानि दृश्यन्ते । स वै बुद्धो भविष्यतीति । तस्मात् त्वं दृढं वीर्य्यं प्रगृहाणेति । बोधिसत्त्वं विविधैराकारैरभितुष्टुवुः ।

अथ स महामतिर्बोधिसत्त्वो भगवतो दीपङ्करस्य च दशसहस्रचक्रवाले देवतानाञ्च वचनं श्रुत्वा प्रीतिप्रमुदितहृदयो व्यचिन्तयत् । नास्ति हि बुद्धानां मोघवचनम् । न भवन्ति बुद्धानां भाषितेष्वन्यथाभावाः । यथा हि नभसि क्षिप्तस्य च लेष्ठोः पतनम् । जातस्य च मरणम् उद्गते चारुणे सवितुरुत्थानम् आशयान्निष्क्रान्तस्य च मृगेन्द्रस्य नादः गुरुगर्भायाश्च स्त्रिया भारविमोचनं ध्रुवम् । अवश्यम्भावी । एवमस्य भगवतो दीपङ्करस्य भाषितं सुभाषितम् । ध्रुवमव्यर्थम् । ततश्चाहमेकान्तेन बुद्धो भविष्यामीति ।

इति श्रीशीलस्कन्धस्थविरस्य कृतौ सद्धर्म्ममकरन्दे भगवतो दीपङ्करस्य सन्निधौ सम्बोधिप्रार्थनापरिदीपनो नाम

प्रथमोऽध्यायः ॥

---

[ पूर्वपृष्ठादनुवृत्तम् ]

तत्क्षणे द्युतिर्वा उत्पत्तिर्वेति । इमानि सर्व्वाणि पूर्व्वनिमित्तानि तदानीमपि प्रादुर्भूतानि तदृष्ट्वा महाजनो निःसंशयमय महासत्वः सम्बोधिं प्राप्स्यतीति ज्ञात्वा बोधिसत्व निवेदयामास ।

# अथ द्वितीयोऽध्यायः ॥

अथ स महामतिर्बोधिसत्त्वो ध्रुवमहं बुद्धो भविष्यामीति कृत निश्चयो बुद्धकारकाणि धर्म्माणि समुपाधारयत्। क[?] भवन्ति हि तानि बुद्धभावकराणि धर्म्माणि। ऊर्ध्वम् उताहो अधश्च अष्टसु वा दिक्षु विदिक्षु वेति क्रमेण सकलां धर्मधातुं विचिन्वन् पूर्व्वकालिकै र्बोधिसत्त्वैरासेवित निषेवित प्रथमं दानपारमीं ददर्श। स दानपारमीं दृष्ट्वा एवमात्मानमवदत्। पण्डित! सुमेध! त्वमतः प्रभृति दानपारमीं पूरय। यथा हि अधोमुख उदकुम्भो निःशेषमुदकं वमति। नैव प्रत्याहरति च। एवं त्वमपि धनं वा यशो वा पुत्रदारान् वा अङ्गप्रत्यङ्गं वा अनवलोक्य समागतानां याचकानामीप्सितेप्सितं सर्व्वं निःशेषं ददानो बोधिद्रुममूले निषद्य सम्बोधिसमधिगमं करिष्यसीति। प्रथममेव स दानपारमीं सुस्थिरमधिष्ठापयामास ॥

ततश्च स च महासत्त्वोऽचिन्तयत्। न ह्येतावद्भिरेव बुद्धभावकृद्भिर्धर्म्मैर्भवितव्यमिति उपर्य्युपधारयन् द्वितीयं शीलपारमीं समैक्षत। दृष्ट्वास्य एतदभूत्। पण्डित! सुमेध! त्वमिदानीं शीलपारमीमपि पूरय। यथा हि चमरो नाम मृगो जीवितमपि अनपेक्ष्य स्वं वालधिं रक्षति। एवं त्वं जीवितमपि अनवलोक्य शीलं परिरक्षन् सम्बोधिं प्राप्स्यसीति स शीलपारमीं दृढतरमध्यष्ठापयत्। पुनरपि सोऽचिन्तयत्। न ह्येतावद्भिरेव बुद्धभावकरैर्धर्म्मैर्भवितव्यमिति उपर्य्युपधारयस्तृतीयं नैष्कर्म्यपारमीं ददर्श। स तां दृष्ट्वा एवमचिन्तयत्। पण्डित! सुमेध! त्वमतः प्रभृति नैष्कर्म्यपारमीमपि पूरय। यथा हि पुरुषः कारागृहे चिरं निवसन् तत्र स्नेहं न कुर्य्यात्। उत्कण्ठामेव करोति। अवसितुकामता च भवति। एवं त्वमपि कारागृहसदृशे सर्व्वस्मिन् भवे उत्कण्ठितो भव विमोक्तुकामो नैष्कर्म्याभिमुखः सन् बुद्धो भविष्यामीति। स नैष्कर्म्यपारमीं दृढमध्यष्ठापयत् ॥

पुनश्च स बोधिसत्त्वः समभ्यचिन्तयत् । न ह्येतावद्भिरेव बुद्धकारकैर्धर्म्मैर्भवितव्यमिति । तत उपर्य्यन्वेषयंश्चतुर्थं प्रज्ञापारमीं व्यलोकयत् । स तद्दृष्ट्वा एवमचिन्तयत् । पण्डित! सुमेधः! त्वमतःप्रभृति प्रज्ञापारमीं पूरय । हीनेषु मध्यमेषु चोत्कृष्टेषु च पण्डितेषु किञ्चिन्न विवर्ज्य तेषामन्तिके प्रश्नं पृच्छ यथा हि भिक्षां प्रतिगतः कश्चिद्भिक्षुर्हीनोत्कृष्टेषु कुलेषु किञ्चिन्नापहृत्य परिपाट्याभिक्ष्य क्षिप्रमाहारं लभते । एवं त्वमपि सर्व्वान् पण्डितानुपसङ्क्रम्य प्रश्नं परिपृच्छ्य बुद्धो भविष्यसीति । स प्रज्ञापारमितायां स्थिरं समदधौ । पुनरपि अस्य महासत्त्वस्य एतदभूत् । न ह्येतावद्भिरेव बुद्धभावसाधकैर्धर्म्मैर्भवितव्यमिति । ततश्चोपरि समुपधारयन् पञ्चमं वीर्य्यपारमीं समन्वैक्षत । स तत् समीक्ष्य च एवमात्मानमवदत् । पण्डित! सुमेधः! त्वमतःप्रभृति वीर्य्यपारमीं पूरय । यथाहि सिंहो मृगाधिपः सर्व्वेषु चेर्य्यापथेषु अनभिभूतवीर्य्यो भवति । एवं त्वमपि सर्व्वेष्वीर्य्यापथेषु महावीर्य्यो नावलीनवीर्य्यः सम्बोधिं प्राप्स्यसीति । स सुस्थिरं समभिधारयामास ॥

पुनश्च स बोधिसत्त्वोऽचिन्तयत् । न ह्येतावद्भिरेव बुद्धभावसाधकैर्धर्म्मैर्भवितव्यमिति । स उपर्य्यपि गवेषयन् षष्ठं क्षान्तिपारमीं निरैक्षत । स तां दृष्ट्वा एवमपि चिन्तयामास । पण्डित! सुमेधः! त्वमेतस्मात् प्रभृति क्षान्तिपारमीं पूरय । सन्मानेऽपि अवदानेऽपि क्षमो भव । यथा हि भूमौ शुचिञ्च अशुचिञ्च प्रक्षिपति । ततोऽसौ पृथिवी स्नेहं वा प्रतिघां वा नैव करोति । सर्व्वमेव क्षाम्यति च सहति च अधिवष्टि च । तथा त्वमपि सम्मानावमानयोः क्षमी बुद्धो भविष्यसीति स क्षान्तिपारमीं दृढतरमध्यष्ठापयत् ॥

पुनरपि स बोधिसत्वोऽचिन्तयत् न ह्येतावद्भिरेव सम्बोधिसमधिगमकारणैर्धर्म्मैर्भवितव्यमिति । स तु उपर्य्यपि समुपधारयन् सप्तम सत्यपारमीं व्यलोकयत् । त दृष्ट्वास्य एतदभूत् । पण्डित! सुमेध ! त्वमेतदवधीकृत्य सत्यपारमीं पूरय । तव मूर्ध्नि अशनौ प्रपतत्यपि धनाद्यर्थाय छन्दादिवशग सम्प्रजानन्मृषा मा भाषिष्यसे । यथा हि औषधी नाम तारका सर्व्वेषु ऋतुषु आत्मना गन्तव्य मार्गं परित्यज्यान्य वीथ्या नैव गच्छति । स्वीयया वीथ्या एव गच्छति च । तथा त्वमपि सत्य विहाय मृषावादमभाषमाणो बुद्धभाव समुपयास्यसीति । स सत्यपारमीं स्थिरतर समादधत् ॥

ततश्च स महासत्त्व एव चिन्तयामास । न ह्येतावद्भिरेव बुद्धभावसाधकैर्धर्म्मैर्भवितव्यमिति । स उपर्य्युपरि अन्वेषयन् अष्टममधिष्ठानपारमीं समभिप्रैक्षत । तद्दृष्ट्वास्य एतदभूत् । पण्डित! सुमेध ! त्वमिम कालमवधिं कृत्वा अधिष्ठानपारमीं पूरय । यत्त्वाधिष्ठान तत्र निश्चलोभव । यथा हि शैल सर्व्वासु दिशासु वायौ प्रहरति न कम्पते च न चलति च । स्वस्थान एव तिष्ठति च । तथा त्वमपि निश्चल स्वाधिष्ठाने तिष्ठन्नेव बुद्धभाव समधिगमिष्यसीति । स च अष्टममधिष्ठानपारमीं सुस्थिरमधिष्ठानञ्चकार ॥

पुनरपि स महासत्त्व समभ्यचिन्तयत् । न ह्येतावद्भिरेव बुद्धकारकैर्धर्म्मैर्भवितव्यमिति । स तद्दृष्ट्वा उपर्य्यपि समुपधारयन् । नवम मैत्रीपारमीं समुदैक्षत । तद्दृष्ट्वा च एवमचिन्तयत् । पण्डित! सुमेध ! त्वमत प्रभृति मैत्रीपारमीं पूरय । हिताहितयो समचित्त एव भव यथा हि सलिल नाम पापजनेषु च कल्याणजनेषु च सम शीतलभाव

करोति । तथैव त्वमपि सर्व्वेषु सेस्त्वपु मैत्रीचित्तो मृदुचित्तो भूत्वा सम्बोधिसमधिगमं करिष्यसीति । स मैत्रीपारमीं दृढतरमधिष्ठापयामास ॥

अनन्तरं च स महासत्त्वो बोधिसत्त्व एवमचिन्तयत् । न ह्येतावद्भिरेव बुद्धभावसाधकैर्धर्म्मैर्भवितव्यमिति । स उपर्य्युपरि उपधारयन् दशमं उपेक्षापारमीं समैक्षत तद्दृष्ट्वास्य एतदभूत् । यथा हि उर्व्वी नाम शुच्यशुच्योः प्रक्षिप्यमाणयोः मध्यस्था चोदासीना च भवति । तथैव त्वमपि सुखेपि दुःखेपि समचित्तो मध्यस्थचित्तः सम्बोधिसमधिगमं करिष्यसीति स च उपेक्षापारमीं दृढतरं समधिष्ठापयामास ॥

ततश्च स महासत्त्वो बोधिसत्व एवमचिन्तयत् । लोकेऽस्मिन् सम्बोधिसमधिगमासक्तैर्बोधिसत्त्वैः पूर्य्याणि बोधिपरिपाचनीयानि बुद्धभावकराणि धर्म्माणि एतावन्त्येव न सन्त्यन्ये दशपारमिता विहाय । इमा दशपारमिताः न स्युरूर्ध्वमाकाशे । नचाधो भूमौ । नापि दशसु दिक्षु । ममैव हृदयाभ्यन्तरे प्रतिष्ठितभावं जानामि । तद्दृष्ट्वैव पुनः पुनरनुलोमप्रतिलोमाभ्यां सममर्पयत् । स महासत्त्वः पारमीः सम्मर्पयन् पर्य्यन्तादगृहीत्वा आदौ च प्रास्थापयत् । आद्योर्गृहीत्वा पर्य्यवसाने च मध्याद्गृहीत्वा उभयोः कोट्योश्च उभाभ्यां कोटिभ्यां गृहीत्वा मध्ये च पर्य्यवशापयत् ॥

अथ तस्य बोधिसत्त्वस्य दश पारमयो * दश उपपारमयो दश परमार्थपारमयश्चेति त्रिधाकृत्य समत्रिंशत्पारमीधर्म्माणि सम्मर्षतः

---

* अत्र हि शरीरस्य अंगप्रत्यंगपरित्यागः पारमी नाम । अपरवस्तुपरित्याग उपपारमी नाम । जीवितपरित्यागः परमार्थपारमीनामेति केचिद्वदन्ति । शेषेषु नवसु पारमीषु अनेनैव क्रमेण ज्ञातव्यम् । एतदर्थे ग्रन्थान्तरेपि विशेषो दृश्यते । ग्रन्थबाहुल्यभिया नात्र विवृणोमि ॥

सम्मर्पतो धर्म्मतेजसा चत्वारिंशत् सहस्राधिकद्विशतसहस्रयोजनघना इयं महोर्व्वी हस्तिनाक्रान्त इव नलकलाप । पीड्यमानमिवेक्षुयन्त्र महाराव रावयन्नकम्पत । समकम्पत । सम्प्राकम्पत । कुलालचक्रमिव तैलयन्त्रचक्रमिव च पर्यभ्रमञ्च ॥

इति श्रीशीलस्कन्धस्थविरस्य कृतौ सद्धर्ममकरन्दे
पारमीधर्म्मसम्मर्पणपरिदीपनोनाम

द्वितीयोऽध्यायः ॥

---



# अथ तृतीयोऽध्यायः॥

अथ पृथिव्यां कम्पमानायां रम्य नगरवासिनः संस्थातुमशक्नुवन्तो युगान्तमहावातादुन्मूलका इव महाद्रुमा मूच्छितमूच्छितास्तत्र तत्र भूमौ प्रपतिता आसन्। कलसादीनि च कुम्भकारभाजनानि प्रवर्तमानानि परस्परं घर्षितानि चूर्णविचूर्णानि भवेयुः। स महाजनो भयत्रस्तो भगवन्तं दीपङ्करमुपसङ्क्रम्य एवं पप्रच्छ। भगवन् अयं नागावृत्तो नु। उताहो देवयक्षादीनामन्यतरावृत्त इति वयं नैव जानीमः। अथापि सर्व्वोयं महाजन उपद्रुतः। किं नु लोकस्यास्य पापं भविष्यति वा कल्याणमिति एतत्कारणमस्माकं कथयतेति विज्ञापयामास तच्छ्रुत्वा भगवान् दीपङ्कर एवमाह स्म। यूयं मा बिभीत। न स्यादतो निदानाद्भीतिरिति। मयाऽद्य यश्चासौ पण्डितः सुमेधाः अनागते गौतमो नाम सम्बुद्धो भविष्यतीति व्याकृतः। स चेदानीं पारमीः सम्मर्षति। तस्य पारमीः सम्मर्षतो धर्म्मतेजसा सकलेयं दशसहस्रीलोकधातुरेकप्रहारेणैव कम्पते च रौति चेति। महाजनो भगवतो दीपङ्करस्य वचनं श्रुत्वा प्रहृष्टहृदयो मालागन्धविलेपनानि चादाय तस्मान्नगरान्निष्क्रम्य बोधिसत्त्वं समुपागमत्। ते मालागन्धादिभिर्भगवन्तं बोधिसत्वं समभ्यर्च्याभिवन्द्य प्रदक्षिणीकृत्यारम्य पुरमेव प्रवेशयामासुः। बोधिसत्त्वोपि दशपारमीः सम्मृष्य वीर्य्यं दृढतरमधिष्ठाय निषण्णासनादुत्तस्थौ।

अथ बोधिसत्त्वो निषण्णासनादुत्तिष्ठन् सकलैर्दशसहस्रचक्रवालदेवैः सन्निपत्य दिव्यैर्माल्यगन्धैः समभ्यार्च्यत। तेऽपि एवं समाज्ञापयामासुः आर्य्य! सुमेधः! तापस! भवताऽद्य सर्व्वज्ञस्य दीपङ्करस्य पादमूले महती प्रार्थना कृता। सा तवानन्तरायेण समृध्यतु। मा तव

भीतिरस्तु । शरीरे तवाल्पमात्रोपि रोगो नोत्पद्यताम् । भवान् क्षिप्र पारमीं परिपूर्य्य सम्यक् सम्बोधिं प्रतिबुध्यताम् । यथा पुष्पपगा फलपगा समग्रा द्रुमा समये पुष्प्यन्ति च फलन्ति च । तथैव त्वमपि कालमनतिक्रम्य ध्रुवमुत्तम सम्बोधिं समधिगमयेत्यादीनि स्तुतिमङ्गलानि समुदाहृत्य स्व स्व भवन समाययु । स बोधिसत्त्वोपि सुरगणैरभिष्टुतो दश पारमी पूरयित्वाऽह कल्पशतसहस्राधिकाना चतुर्णामसङ्ख्येयानामुपरि सम्बुद्धो भविष्यामीति वीर्य्यं दृढमधिष्ठाय नभोभ्युद्गम्य हिमालयमेव जगाम ।

अथाऽमरवतीनगरवासिनोपि स्वपुर प्रविश्य बुद्धप्रमुखेभ्यो भिक्षु गणेभ्यो महादान प्रवर्त्तयामासु । भगवान् दीपङ्करस्तेषा धर्म्मदेशना कृत्वा महाजनान् त्रिषु शरणेषु च पञ्चसु शीलेषु च श्रोतापत्यादिमार्गे फलेषु च प्रत्यष्ठापयत् । ततश्चानन्तर स भगवान् दीपङ्कर अमरा वत्या नगर्या निरक्रामत् । यावदायुश्च तिष्ठन् सर्व्वबुद्धकृत्यानि समापय्य निरुपधिशेषाया निर्व्वाणधातो परिनिरवात् । तस्यापि भगवतस्त्रयोऽभिसमया बभूवु । प्रथमेऽभिसमये कोटिशतसङ्ख्यम बोधयत् । द्वितीयेऽभिसमये कोटिशतसहस्रञ्च । यदा सुरालये भग वान् धर्म्ममदिशत् । तदापि नवतिकोटिसहस्राणामभिसमयो बभूव । तस्यापि भगवतो दीपङ्करस्य त्रयोपि सन्निपाता आसन् । प्रथमे सन्निपाते कोटिशतसहस्राणा समागम आसीत् । नारदगिरिं विवेकोपगते जिनवरे शतकोट्यश्च । यदा सुदर्शने पर्व्वते जिनोन्य वसत् । तदा नवतिकोटिसहस्रै परिवृत्त । एकस्य वा द्वयोर्वा दशाना वा विंशत्या वा सहस्राणामभिसमया गणनेनेन व सङ्ख्येया । स भग वान् दीपङ्करो महर्द्धिभि षडभिज्ञाभिर्भिश्चतुर्भि क्षीणाश्रवशतसहस्रै

निरन्तरं परिवारयामासे । तस्य भगवतो दीपङ्करस्य रम्यवती नाम नगरी । पिता सुमेधा नाम क्षत्रियः । माता सुमेधा नाम देवी बभूव। सुमङ्गलश्च तिष्यश्चेति द्वावग्रश्रावकौ बभूवतुः । सागतो नामोपस्थायकश्चासीत् । नन्दा च सुनन्दा चेति द्वावग्रश्राविके बभूवतुः । आसीच्च तस्य भगवतः कपोतनो नाम बोधिद्रुमः स भगवात् दीपङ्कर उच्चैरशीतिहस्तः । तस्य भगवतः शतसहस्राणि संवत्सराणि आयुरासीच्च ।

इति श्रीशीलस्कन्धस्थविरस्य कृतौ सद्धर्म्ममकरन्दे भगवतो दीपङ्करस्य पादमूले व्याकरणलाभपरिदीपनो नाम

तृतीयोऽध्यायः ॥

---



# अथ चतुर्थोऽध्यायः ॥

अथ भगवतो दीपङ्करादपरभागे एकमसङ्ख्येयमतिक्रम्य कौण्डिण्यो नाम शास्ता लोके उदपद्यत । तदा बोधिसत्त्वो विजितावी नाम सार्व्वभौमो भूत्वा कोटिशतसहस्रसङ्ख्येभ्यो बुद्धप्रमुखेभ्यः क्षीणाश्रवेभ्यो महादानं दत्त्वा बुद्धभावं प्रार्थयामास । स भगवान् कौण्डिण्यस्त्वमनागते बुद्धो भविष्यसीति व्याहरत् । धर्म्मं दिदेश । स बोधिसत्त्वो धर्म्मं श्रुत्वा प्रसन्नः स्वराज्यं परित्यज्य प्राव्राजीत् स न चिरादेव त्रीणि पिटकानि समभ्यबुध्यत निर्वर्त्तितवाश्चाष्ट समापत्तीः पञ्चाभिज्ञाश्च स बोधिसत्त्वः परं मरणादपरिहीनध्यानो ब्रह्मलोकमगमच्च । स भगवान् कौण्डिण्यः सर्व्वाणि बुद्धकृत्यानि परिसमापय्य निरुपधिशेषायां निर्व्वाणधातौ परिनिरवात् । तस्यापि भगवतः कौण्डिण्यस्य त्रयः सन्निपाता बभूवुः । प्रथमे सन्निपाते श्रावकाणां कोटिशतसहस्रम् द्वितीये सन्निपाते कोटिशतसहस्रम् । तृतीये सन्निपाते नवति कोटयश्च बभूवुः ।

तस्य भगवतः कौण्डिण्यस्य रम्यवती नाम पुरी । सुनन्दो नाम राजा । माता सुजाता नाम देवी । भद्रश्च सुभद्रश्चेति द्वावग्रश्रावकौ । अनुरुद्धो नाम उपस्थायकः । तिष्या च पुष्या च द्वावग्रश्राविके । शालकल्याणद्रुमो बोधिः । उच्चैरष्टाशीतिहस्तं शरीरम् । आयुरस्य वर्षशतसहस्रमभूत् ।

इति भगवतः कौण्डिण्याद्व्याकरणलाभः ॥

तस्माद्भगवतः कौण्डिण्यादपरस्मिन् काले एकमसङ्ख्येयमतिक्रम्य एकस्मिन्नेव कल्पे मङ्गलः •सुमनो रेवतः शोभितश्चेति चत्वारः सम्बुद्धाः बभूवुः। अथ भगवान् मङ्गलः प्रवर्त्तितवरधर्म्मचक्रो बहून् देवमनुष्यान् भवबन्धनात् परिमोचयन् विहरति स्म। तदा बोधिसत्त्वो महामतिः सुरुचिर्नाम विप्रवरोऽभवत्। स एकदा भगवन्तं मङ्गलमुपसङ्क्रम्य समभिवन्द्य एकमन्तं निषसाद। भगवान् मङ्गलस्तस्मै ब्राह्मणाय धर्म्मं दिदेश। स द्विजवरस्तस्य भगवतो मधुरं धर्म्मदेशनं श्रुत्वा संप्रसीदतिस्म। स प्रसन्नः परेद्युः मम भिक्षां गृह्णीतेति भगवन्तं मङ्गलं निमन्त्रयामास। भगवान् मङ्गल एवं भाषते स्म। भूदेव! तव कतिभिर्भिक्षुभिरर्थ इति। भगवन्! कति तव भिक्षवः सन्तीति। कोटिशतसहस्रभिक्षव इति। अथ ब्राह्मण आहस्म सर्व्वैः परिवारैः सह भगवान् मम भिक्षां प्रतिगृह्णात्विति। अध्यवासयच्च भगवांस्तूष्णीम्भावेन। ततश्चानन्तरं स गृहं गच्छंश्चिन्तयामास। अहं मैभ्यः सर्व्वेभ्यो भिक्षुभ्यो यागुभक्तवस्त्रादीनि वा दातुं शक्नोमि। कथं ह्येषां निषदनस्थानं लप्स्य इति।

अथ सहस्राक्षो देवेन्द्रस्तस्य तमभिप्रायं दिव्येन चक्षुषा समवालोकयत् दृष्ट्वैवात्र एतस्यैव महासत्त्वस्य वितरणे साहाय्यकारीभवितुमर्हेमिति विचिन्त्य तेषां सर्व्वेषां निषदनार्थं सप्तरत्नमयं मण्डपं निरमासीत्। तस्मिन् मण्डपे स्वर्णमयेषु स्तम्भेषु कलधौतमयाः कलसाश्च रजतमयेषु स्तम्भेषु स्वर्णमयाः कलसाश्च माणिक्यमयेषु स्तम्भेषु प्रवालमयाः कलसाश्च बभूवुः।

तस्मिन् मण्डपेऽपि अन्तरान्तरा किङ्किणीकज्वालान् अवालम्बयत्। यस्य मन्दवातेरितस्य पञ्चाङ्गिकस्य तूर्य्यस्य इव मधुरः शब्दो

निर्गच्छतिस्म । दिव्यसङ्गीतिप्रवर्त्तनकाल इवाऽभूत् तस्यान्तरेऽन्तरे सुगन्धदामानि च मालादामानि चावलम्बयामास । तस्मिंश्च मण्डपे कोटिशतसहस्राणां महार्घाणि आसनानि चाधारकाणि चाभूवन् । अग्रेऽग्रेऽपि एकैका उदकपातिश्चासीत् । ततश्चानन्तरं महाबोधिसत्त्वस्य तस्य मण्डपमवलोकयतः पञ्चवर्णप्रीत्या शरीरं नैरन्तर्य्यं स्फुटमभवत् । तथा तन्मण्डपं समीक्ष्यास्य एतदभूत् । नायं मण्डपः केनचिन्मनुष्यभूतेन कृतः । ममैतच्चित्ताचारं दृष्ट्वा मद्गुणं समागम्य शक्रेण देवेन्द्रेण अयं मण्डपः कारितो भवति । न खलु मे युक्तं एतादृशि मण्डपे एकदिवसमेव दानं दातुमिति । सप्तदिवसं निरन्तरमेव दास्यामीति स चिन्तयामास ।

स बोधिसत्त्वस्तस्मिन्नेव मण्डपे निपात्य तान् शतसहस्रसङ्ख्यान् भिक्षून् सप्ताहं * मधुशर्करासर्प्पिर्भिरभिसंस्कृतं भोजनमभोजयच्च । न शक्नुवन्ति स्म मनुष्यास्तेषां परिवेष्टुम् । देवा एव अलक्षितं परिवेषयामासुः नैव प्राभवच्च तेषां भिक्षूणां द्वादशयोजनप्रमाणं स्थानम् । ते भिक्षवस्तद्दानुभावान्निषेदुः । स बोधिसत्त्वः पर्य्यवसानेऽहनि तेषां सर्व्वेषां पात्राणि शोधयित्वा भैषज्यार्थं सर्पिर्नवनीतमध्वादीना च पूरयित्वा सार्द्धं त्रिचीवरैः प्रददौ । पश्चिमासने निषण्णेन नवेन भिक्षुणा लब्धचीवरशाटकः शतसहस्रमूल्यमर्हति। तत्र पर्षदि भगवान् मङ्गलञ्चानुमोदनं कुर्व्वीत । स तथा कुर्व्वन् एव रूपं महादानं ददानः अयं महापुरुषः कश्चिन्नु भविष्यतीति समुपधारयन् अनागते कल्पशतसहस्राधिकानि द्वे असङ्ख्येये क्षिप्त्वा गौतमनाम्ना सम्बुद्धो भविष्यतीति समभ्यैक्षिष्ट । स तद्दृष्ट्वा एव महापुर

* महाकोलम्बान् क्षीरे पारपूर्य्ये अधिश्रयण्यामारोप्य घनपक्वे क्षीरे अल्पास्तण्डुलान् प्रक्षिप्य पाचयित्वा कृतं मधुशर्करासर्पिरिति उच्यते ।

पमामन्त्र्य त्वमेतत्कालावधिमतिक्रम्य गौतमो नाम बुद्धो भविष्यसीति व्याहरत् ।

स महापुरुषस्तद्व्याकरणं श्रुत्वा अहमपि बुद्धो भविष्यामीति तुतोष । पुनश्च नार्यो मद्गृहवासेनेति प्रव्रज्यायै चित्तमभ्यनयत् । तथाऽसौ अतिमहतीं सम्पत्तिं खेलपिण्डमिव अनपेक्ष्य तत्याज । तस्य शासितुः सकाशे प्राव्राजीच्च । स सकलं बुद्धवचनमुद्ग्राह्य न चिरादभिज्ञाः समापत्तीश्च निर्वर्त्तयामास । स तु आयुःक्षयेऽपि कमलासनालयमध्यगमत् ।

भगवतो मङ्गलस्यापि त्रयः श्रावकसन्निपाताः बभूवुः । प्रथमे सन्निपाते कोटिशतसहस्रम् । द्वितीये सन्निपाते कोटिसहस्रञ्चाभवत् । तस्य भगवतो मङ्गलस्य वैमातृकभ्राता आनन्दो नाम कुमारो नवतिकोटिसङ्ख्यैः परिच्छदैः साकं धर्म्मश्रवणार्थं शास्तृसकाशं जगाम । आहस्म भगवांस्तस्मै अनुपूर्व्वकथाम् । सपरिवारो नन्दकुमारः सहप्रतिसंविदाभिरर्हत्त्वं सम्प्रापत् । तस्मिन् तृतीये सन्निपाते नवतिकोटिश्चासीत् । तस्य भगवत उत्तरं नाम नगरम् । पिता उत्तरो नाम राजा । माता उत्तरा नाम देवी चाभूत् । सुदेवो धर्म्मसेनश्चेति द्वावग्रश्रावकौ बभूवतुः । आसीच्च पालितो नामोपस्थायकः । अभवतां शीवली च अशोका चेति द्वे अग्रश्राविके । नागवृक्षो बोधिः । तस्य शरीरप्रभा निरन्तरां दशसाहस्रीं लोकधातुं प्रस्ताार्य्यातिष्ठत् । शरीरमुत्सेधादशीतिहस्तम् । आयुरस्य नवतिवर्षशतसहस्रमिति ।

**इति श्रीशीलस्कन्धस्थविरस्य कृतौ सद्धर्म्ममकरन्दे भगवतो मङ्गलस्य सकाशे व्याकरणलाभपरिदीपनो नाम**

**चतुर्थोऽध्यायः ॥**

# अथ पञ्चमोऽध्यायः

अथ भगवति मङ्गले परिनिर्वाणमुपयाते ततोऽपरभागे सुमनो नाम सम्बुद्ध उदपादि। स भगवान् सुमनो बहून् जनान् संसार दुःखान्मोचयितुकामः प्रवर्त्तितवरधर्म्मचक्रस्तत्र तत्र ग्रामनिगमजनपदानुसारेण विससार। धर्म्ममदेशयच्च। बह्वो देवमनुष्यास्तस्मिन् प्रसन्नाः शरणेषु च शीलेषु च प्रतिष्ठाय तं भगवन्तं सुमनं सत्कृत्य गुरुकृत्य मानिताः पूजिताः अभवेयुः। केचित्तु देवा मनुष्याश्च श्रोतापत्तिफलं सकृदागामिफलम् अनागामिफलम् अर्हत्त्वञ्च यथाक्रमं सम्प्रययुः। एवं तस्य भगवतः शासनं बाहुजन्यं विश्रुतञ्चाभूत्। देवाश्च मनुष्याश्च महता प्रीतिसौमनस्येन कालं निन्युर्लाभायतनं सुलब्धायतनं अस्मिन् दुर्लभे बुद्धोत्पादकाले सञ्जातानामिति।

तदा बोधिसत्त्वो महर्द्धिको महानुभावः अतुलो नाम नागराजा अभूत्। स बोधिसत्त्वो बुद्धस्योत्पन्नभावं श्रुत्वा प्रहृष्टहृदयः ज्ञातिगण परिवृतः स्वात्तागभवनान्निरक्रामत्। कोटिशतसहस्रैः परिवृताय तस्मै भगवते सुमनाय दिव्यैस्तूर्य्यैरुपहारं कृत्वा महादानं प्रददौ। स तस्मै दानं दत्वा प्रत्येकं वस्त्रयुग्मञ्च समभ्यार्पयत्। प्रत्यष्ठापयत् त्रिषु शरणेषु च। सोऽपि शास्ता सुमनः त्वमनागते सम्बुद्धो भविष्यसीति व्याहरत्। पुनः स प्रसन्नः सपरिवारो नागभवनमेव जगाम। स भगवान् सुमनो यावदायुः सर्व्वाणि बुद्धकृत्यानि समापय्यावसाने परिनिरवात्। तस्यापि भगवतस्त्रयः श्रावकसन्निपाता बभूवुः। प्रथमे सन्निपाते कोटिशतसहस्रम्। द्वितीये सन्निपाते काञ्चनगिरौ नवतिकोटि-शतसहस्रम्। तृतीये सन्निपाते अशीतिकोटिशतसहस्रञ्च भिक्षूणा बभूव। तस्य भगवतः क्षेमा नाम नगरी। पिता सुदत्तो नाम राजा।

माता श्रीमती नाम देवी चासीत् । शरणश्च भावितत्त्वश्चेति द्वावग्रश्रावकौ अभवताम् । उदयनो नाम उपस्थायकः । शोणा च उपशोणा च द्वे अग्रश्राविके बभूवतुः । नागवृक्षो बोधिः । तस्य भगवतः शरीरमुच्चैर्नवतिहस्तम् । आयुरस्य नवतिवर्षसहस्रमिति ।

इति भगवतः सुमनाद्व्याकरणलाभः ॥

---

ततश्चापरभागे रेवतो नाम सम्बुद्ध उदपादि । तदा बोधिसत्त्वोऽपि अतिदेवो नाम द्विजश्रेष्ठो भूत्वा सम्बुद्धस्य दर्शनार्थं गतः । स शास्ता तस्मै धर्म्मं दिदेश । स द्विजवरः त्रिषु शरणेषु सम्प्रतिष्ठाय शिरसि अञ्जलिं प्रण्यधात् । तस्य भगवतः क्लेशविध्वंसने चाभिष्टुत्य उत्तरशाटके न च भगवन्तं समभ्यर्च्चयामास । सोपि भगवांस्त्वमनागते सम्बुद्धभावमाप्स्यसीति व्याहरच्च । स भगवान् रेवतस्तत्र तत्र ग्रामनिगमजनपदादिषु विचरन् बहून् देवमनुष्यान् भवबन्धनान्मोचयित्वा यावदायुः सर्व्वाणि बुद्धकृत्यानि कृत्वा परिनिरवात् । तस्यापि भगवतस्त्रयः श्रावकसन्निपाताः बभूवुः । प्रथमे सन्निपाते किलास्य गणना नास्ति । द्वितीये सन्निपाते कोटिशतसहस्रं भिक्षूणाम् । तद्वत् तृतीयेऽपि सन्निपाते ।

तस्य भगवतो धान्यवती नाम नगरी पिता विपुलो नाम क्षत्रियः । माता विपुला नाम देवी । वरुणश्च ब्रह्मदेवश्चेति द्वावग्रश्रावकौ अभवताम् । सम्भवो नाम उपस्थायकः । भद्रा च सुभद्रा चेति द्वे अग्रश्राविके अभवताम् । नागतरुर्बोधिः । शरीरमस्य उच्चतोऽशीतिहस्तम् । आयुरस्य वर्षषष्टिसहस्रमासीत् ।

इति भगवतो रेवताद्व्याकरणलाभः ॥

---

ततश्चाऽपरभागे शोभितो नाम सम्बुद्ध उदपादि। स तु भगवान्। बहुजनहितार्थं ग्रामनिगमजनपदानुक्रमेण जनसङ्ग्रह कुर्वंस्तत्र तत्र विससार। बहून् देवान् मनुष्यान् भवदुःखात्पर्यमोचयच्च। तदा बोधिसत्त्व अजितो नाम भूदेवोऽभवत्। स एकदा भगवन्त शोभित दर्शनार्थमुपसमक्रामत्। स भगवांस्तस्मै धर्मं दिदेश। अजितो द्विजवरस्तस्य धर्म्मदेशन श्रुत्वा त्रिषु च शरणेषु सम्प्रादधात्। बुद्धप्रमुखाय भिक्षुगणाय महादानञ्च ददौ। स भगवांस्त्वमनागते सम्बुद्धो भविष्यसीति च व्याहरत्। स तस्य भगवतो व्याकरण श्रुत्वा प्रहृष्टमना यावज्जीव महत् कुशल सञ्चित्य स्वर्लोकपरायणस्तुतोष। भगवान् शोभितश्च सर्व्वाणि बुद्धकृत्यानि च सङ्क्षिप्य निरुपधिशेषाया निर्वाणधातो परिनिर्व्वात्। तस्यापि भगवतस्त्रय श्रावकसन्निपाता बभूवु। प्रथमे सन्निपाते शतकोटि। द्वितीये सन्निपाते नवतिकोटि। तृतीये सन्निपाते अशीतिकोटिश्चासीद्भिक्षूणाम्। तस्य भगवत सुधर्म्मा नाम पुरी। पिता सुधर्म्मो नाम राजा। माता सुधर्म्मा नाम देवी चाभूत्। असमश्च सुनेत्रश्चेति द्वाव प्रश्रावकौ बभूवतु। अनोमो नामोपस्थायक। नकुला च सुजाता चेति द्वे अग्रश्राविके। नागवृक्षो बोधि। शरीरमस्य पञ्चाशद्हस्त चासीत्। आयुरस्य नवतिवर्षसहस्रमभूच्च।

इति भगवतः शोभिताद्व्याकरणलाभः ॥

---

ततश्चाऽपरभागे एकमसङ्ख्येयमतिक्रम्य एकस्मिन्नेव कल्पे अनवमदर्शी पद्मो नारदश्चेति त्रय सम्यक् सम्बुद्धा बभूवु। तेषा भगवांश्च अनवमदर्शी सर्व्वसत्त्वेषु अनुकम्पक श्रावकगणपरिवृतस्तत्र तत्र ग्रामनिगमादिषु विससार। स भगवान् बहून् देवान् मनुष्यान्

तस्यापि भगवतस्त्रयः श्रावकसन्निपाताः । प्रथमे सन्निपाते कोटिशतसहस्राणि । द्वितीये सन्निपाते त्रीणि शतसहस्राणि । तृतीये सन्निपाते द्विशतसहस्राणि भिक्षवः अभूवन् । तस्य भगवतः पद्मस्य चम्पका नाम नगरी । पिता पद्मो नाम राजा । माता असमा नाम देवी चासीत् । शालश्च उपशालश्चेति द्वावग्रश्रावकौ बभूवतुः । वरुणो नाम उपस्थायकः । रामा च सुरामा चेति द्वे अग्रश्राविके । श्रोणो नाम तरुर्बोधिः । शरीरमस्य उच्चैरष्टपञ्चाशद्हस्तं चासीत् । आयुर्वर्षशतसहस्रञ्च बभूव ।

इति भगवतः पद्माद्व्याकरणलाभः ॥

ततश्चापरभागे नारदो नाम सम्बुद्ध उदपादि । स भगवान् नारदः प्रवर्तितवरधर्म्मचक्रः क्रमेण ग्रामनिगमजनपदेषु बहून् जनान् प्रसादयन् विससार । तस्मिन् भगवति प्रसन्ना बहवो देवमनुष्याः शरणेषु च शीलेषु च प्रतिष्ठाय बहु कुशलं सञ्चिन्वन्तः प्रतिवसन्तिस्म । केचिच्छ्रोतापन्नाः । केचित् सकृदागामिनः । केचिदनागामिनः । केचिदर्हन्तश्च बभूवुः । शासनमस्य बाहुजन्यं सुविस्तीर्णञ्चासीत् । तदा बोधिसत्त्वः ऋषिः प्रव्रज्यया प्रव्रजितोऽभूत् । स च तापसो व्यायामन्नचिरादेव पञ्चाभिज्ञाश्चाष्टसमापत्तीर्निर्वर्त्तयामास । स तु बुद्धो लोके उत्पन्न इति श्रुत्वा तं भगवन्तं दर्शनार्थमुपसमक्रामत् । स भगवान् तस्मै अनित्यं दुःखमनात्मेति त्रिलक्षणोपेतं स्वाम्युत्कर्षिकं धर्म्मदेशनञ्चावादीत् । तापसस्तस्मिन् प्रसन्नः स्नातनाय भोजनाय सभिक्षुसङ्घं भगवन्तं निमन्त्रयामास । अध्यवासयच्च भगवांस्तूष्णींभावेन । स परेद्युः बुद्धप्रमुखेभ्यो भिक्षुसङ्घेभ्यो महादानं प्रददौ ।

ततश्चाऽपरभागे पद्मो नाम शास्ता लोके उदपादि अनन्ततेजा अपरिमितयशा । भगवान् पद्मो धर्म्मचक्र प्रवर्त्य सकलसत्त्वानुकम्पी तेषु तेषु ग्रामनिगमादिषु विचरन् बहून् जनान् ससारान्मोचयितु चतु सत्यप्रतिसयुक्त धर्म्ममदिक्षत् । ते धर्म्मदेशना श्रुत्वा प्रहृष्टाश्चो दग्रचित्ता केचिच्छरणेषु च केचिच्छीलेषु च केचिन्मार्गफलादिषु च प्रतस्थिरे । ते जना मालागन्धादिभिर्भगवन्त पद्म समभ्यर्चयामासु । दिवानिश सत्कृता गुरूकृता मानिता निवसन्तिस्म । तस्य भगवत शासन विस्तीर्णमासीत् । सर्व्वे जनास्तस्मिन् भगवति सश्रद्धा प्रसन्नाश्चाभवन् । तदा बोधिसत्त्वो महारण्ये मृगेन्द्र सिंहराजो बभूव । एकदा स भगवान् पद्मस्तद्वनमुपसङ्क्रम्य एकस्मिन् विविक्ते प्रदेशे निरोधसमापत्तिं समापद्य निषण्ण । तदा मृगराज त भगवन्त निरोध-समापन्नमद्राक्षीत् । तद्दृष्ट्वा प्रहृष्टमना प्रसन्नस्त भगवन्तमभिवन्द्य प्रदक्षिणीकृत्य सञ्जातप्रीतिसौमनस्यस्त्रिवार सिंहनाद ननाद । स तु सिंह सप्तदिवसमेव बुद्धालम्बनप्रीतिमविहाय गोचरमपक्रम्य कृत जीवितपरित्याग सन् प्रीतिमुखेन तस्थौ च । स भगवान् पद्म सप्ताहा-तिक्रमेण निरोधादुत्थाय मृगराज तथास्थितमदर्शत् । स च दृष्ट्वा भिक्षुसघोपि चित्त प्रसाद्य वन्दिष्यत इति ज्ञात्वा भिक्षुसघस्यागमनमध्य तिष्ठत् । तत् क्षणमेव भिक्षुसघोपि तत्र समायात । सिंहो भिक्षून् दृष्ट्वा तस्मिंश्च चित्त प्रसादयामास । स शास्ता तस्य मृगाधिपस्य मनो ज्ञात्वा त्वमनागते सम्बुद्धो भविष्यसीति व्याहरत् । तस्य व्याकरण श्रुत्वा सिंहो मृगराज अत्यर्थं प्रासीदत् । स तु भगवान् पद्म सर्वाणि बुद्धकृत्यानि परिनिष्ठाप्य निरुपधिशेषाया निर्व्वाण धातौ परिनिरवात् ।

तस्यापि भगवतस्त्रयः श्रावकसन्निपाताः । प्रथमे सन्निपाते कोटिशतसहस्राणि । द्वितीये सन्निपाते त्रीणि शतसहस्राणि । तृतीये सन्निपाते द्विशतसहस्राणि भिक्षवः अभूवन् । तस्य भगवतः पद्मस्य चम्पका नाम नगरी । पिता पद्मो नाम राजा । माता असमा नाम देवी चासीत् । शालश्च उपशालश्चेति द्वावग्रश्रावकौ बभूवतुः । वरुणो नाम उपस्थायकः । रामा च सुरामा चेति द्वे अग्रश्राविके । श्रोणो नाम तरुर्बोधिः । शरीरमस्य उच्चैरष्टपञ्चाशद्हस्तं चासीत् । आयुर्वर्षशतसहस्रञ्च बभूव ।

## इति भगवतः पद्माद्व्याकरणलाभः ॥

---

ततश्चापरभागे नारदो नाम सम्बुद्ध उदपादि । स भगवान् नारदः प्रवर्तितवरधर्म्मचक्रः क्रमेण ग्रामनिगमजनपदेषु बहून् जनान् प्रसादयन् विससार । तस्मिन् भगवति प्रसन्ना बहवो देवमनुष्याः शरणेषु च शीलेषु च प्रतिष्ठाय बहु कुशलं सञ्चिन्वन्तः प्रतिवसन्तिस्म । केचिच्छ्रोतापन्नाः । केचित् सकृदागामिनः । केचिदनागामिनः । केचिदर्हन्तश्च बभूवुः । शासनमस्य बाहुजन्यं सुविस्तीर्णञ्चासीत् । तदा बोधिसत्त्वः ऋषिः प्रव्रज्यया प्रव्रजितोऽभूत् । स च तापसो व्यायामन्नचिरादेव पञ्चाभिज्ञाश्चाष्टसमापत्तीर्निर्वर्त्तयामास । स तु बुद्धो लोके उत्पन्न इति श्रुत्वा तं भगवन्तं दर्शनार्थमुपसमक्रामत् । स भगवान् तस्मै अनित्यं दुःखमनात्मेति त्रिलक्षणोपेतं साम्युत्कर्षिकं धर्म्मदेशनञ्चावादीत् । तापसस्तस्मिन् प्रसन्नः स्नातनाय भोजनाय सभिक्षुसङ्घं भगवन्तं निमन्त्रयामास । अध्यवासयच्च भगवांस्तूष्णीभावेन । स परेद्युः बुद्धप्रमुखेभ्यो भिक्षुसङ्घेभ्यो महादानं प्रददौ ।

रक्तचन्दनेन पूजाञ्चाकार्षीत् । सोऽपि भगवांस्त्वमनागते बुद्धो भवि प्यसीति व्याहरत् । स तु तापसस्तस्य व्याकरण श्रुत्वा अतीव तुतोष। सम्बोधिमभिप्रार्थयन् बहूनि कुशलान्यपि समचिनोत् । स भगवान् नारद सर्व्वबुद्धकृत्यानि सक्षिप्य परिनिरवात् । तस्यापि भगवतस्त्रय श्रावकसन्निपाता बभूवु । प्रथमे सन्निपाते कोटिशतसहस्राणि । द्वितीये सन्निपाते नवतिकोटिशतसहस्राणि । तृतीये सन्निपाते अशी तिकोटिशतसहस्राणि भिक्षव अभूवन् । तस्यापि भगवतो धान्यवती नाम नगरी । पिता सुमेधा नाम क्षत्रिय । माता अनोमा नाम देवी । भद्रशालश्च जितमित्रश्चेति द्वावग्रश्रावकौ बभूवतु । वाश्रेष्ठो नाम उपस्थायक । उत्तरा च फाल्गुनी चेति द्वे अग्रश्राविके । महा शोणो नाम वृक्षो बोधि । अस्य भगवतोऽपि शरीरमुद्वेधादशीत्यर त्निकञ्चासीत् । आयुस्तस्य भगवतो नवतिवर्षसहस्रञ्चाभूत् ।

इति भगवतो नारदाद्व्याकरणलाभः ॥

---

ततश्चानन्तरमत कल्पशतसहस्रस्योपरि एकस्मिन्नेव कल्प एक एव पद्मोत्तराख्य सम्बुद्ध उदपादि । स तु सम्बुद्ध पद्मोत्तर सर्व्वे सत्त्वेषु अनुकम्पातस्तत्र तत्र ग्रामनिगमादिषु जनताया धर्म्मं देशय श्चचार । तस्य धर्म्मदेशना बहवो देवमनुष्या हृष्टमनस शृण्व न्तिस्म । केचिच्छरणागमनादिषु च केचिन्मार्गफलादिषु च प्रतिष्ठा मापु । शासनमस्य सर्व्वत्र विद्योततेस्म । तदा बोधिसत्त्वो महारा ष्ट्रिकोनामजटिलोऽभूत् । सम्बुद्ध उत्पन्न इति श्रुत्वा प्रसन्नचित्त सहसा भगवन्तमुपसमक्रामत् । भगवांस्तस्मै स्वाम्युत्कर्षक धर्म्मदेश नाञ्चादिशत् । स च धर्म्मदेशना श्रुत्वा हृष्टमना भगवन्त सभिक्षु

गणं चीवरैर्निमन्त्रयामास। स भगवांस्तूष्णीम्भावेनाध्यवासयच्च। स परेद्युः बुद्धप्रमुखेभ्यो भिक्षुगणेभ्यो महार्घाणि चीवराणि प्रददौ। सोऽपि शास्ता त्वमनागते बुद्धो भविष्यसीति व्याहरत्। तस्य भगवतः पद्मोत्तरस्य काले तीर्थिका न भवेयुः। सर्व्वे देवमनुष्याः बुद्धमेवशरणं जग्मुः। स तु भगवान् सर्व्वाणि बुद्धकृत्यानि निष्ठाप्य परिनिरवात्। तस्यापि भगवतस्त्रयः श्रावकसन्निपाता अभूवन्। प्रथमे सन्निपाते कोटिशतसहस्राणि। द्वितीये सन्निपाते वेभारनाम्नि गिरौ नवतिकोटिशतसहस्राणि। तृतीये सन्निपाते अशीतिकोटिशतसहस्राणि भिक्षूणां बभूवुः। तस्य हंसवती नाम नगरी। पिता आनन्दो नाम क्षत्रियः। माता सुजाता नाम देवी। देवलश्च सुजातश्चेति द्वावग्रश्रावकौ। सुमनो नाम उपस्थायकः। अमिता च असमा चेति द्वे अग्रश्राविके। सरलवृक्षो बोधिः। शरीरमस्य उच्चैः अष्टाशीतिहस्तम् तस्य शरीरप्रभा समन्ततो द्वादशयोजनानि स्फुरतिस्म। आयुर्वर्षशतसहस्रमासीच्च।

## इति भगवतः पद्मोत्तराद्व्याकरणलाभः॥

---

ततश्चाऽपरभागे त्रिंशत् कल्पशतसहस्राणि अतिक्रम्य एकस्मिन्नेव कल्पे सुमेधाश्च सुजातश्चेति द्वौ सम्बुद्धौ निर्वर्त्तयामासतुः। अथ स भगवान् सुमेधाः प्रवर्त्तितवरधर्मचक्रो लोकस्यानुकम्पां कुर्व्वंस्तत्र तत्र ग्रामनिगमादिषु सह भिक्षुगणैर्विससार। तदा बोधिसत्त्व उत्तरो नाम मानवोऽभूत्। स च भगवतः सुमेधसस्तत्रागमनं श्रुत्वा हृष्टमनास्तद्दर्शनार्थं ययौ। स तु भगवांस्तस्मै धर्म्ममदिशत्। स तच्छ्रुत्वा प्रसन्नो भगवन्तं भोजनाय निमन्त्रयामास। सोपि भगवांस्तन्निमन्त्रणम-

ध्यवासयच्च । स च परेद्युः निधाय स्थापितमेव अशीतिकोटिधनं *विसृज्य बुद्धप्रमुखेभ्यो भिक्षुगणेभ्यो महादानमदात् । धर्म्मञ्च श्रुत्वा* प्रसन्नमनाः शरणेषु प्रतस्थे । पुनर्गृहान्निष्क्रम्य प्राव्राजीत् । सोपि भगवांस्त्वमनागते बुद्धो भविष्यसीति व्याहरत् । स च तद्व्याकरणं श्रुत्वा अभिप्रसन्नो निरन्तरं प्रगृहीतवीर्य्यः कुशलकर्म्मणि अभिसक्तो बभूव । स तु भगवान् सुमेधाः सर्व्वाणि बुद्धकृत्यानि समाप्य परिनिरवात् । तस्यापि भगवतस्त्रयः श्रावकसन्निपाता आसन् । प्रथमे सन्निपाते सुदर्शननगरे कोटिशतम् । द्वितीये सन्निपाते नवतिकोटयः । तृतीये सन्निपाते अशीतिकोटयश्चाऽभवन् क्षीणाश्रवाणां भिक्षूणाम् । तस्य भगवतो सुदर्शनं नाम नगरम् । पिता सुदत्तो नाम राजा । माताऽपि सुदत्ता नाम देवी । शरणश्च सर्व्वकामश्चेति द्वावग्रश्रावकौ । सागरो नाम उपस्थायकः । रामा च सुरामा चेति द्वे अग्रश्राविके *बभूवतुः । बोधिश्चास्य महानीपवृक्षः । उच्चैरष्टाशीतिहस्तं शरीरमा*सीत् । नवतिवर्षशतसहस्रमस्यायुर्बभूव ।

इति भगवतः सुमेधसो व्याकरणलाभः ॥

---

ततश्चाऽपरभागे सुजातो नाम शास्ता समुदपद्यत । स हि भगवान् सुजातः प्रवर्त्तितवरधर्म्मचक्रो वैनेयजनानुग्रहाय ग्रामनिगमादिषु चचार । धर्म्मञ्च दिदेशतिस्म । समग्रेषु नगरादिषु एककलकलो वर्त्ततेस्म बुद्ध आविरासीच्च इति । बहवो देवाश्च मनुष्याश्च तस्मिन् प्रसन्नाः मार्गफलानि प्रतिलेभिरे । सर्व्वेषामेव अर्थाय हिताय तच्छासनं विश्रुतमभूत् । तदा बोधिसत्वोऽपि महाबलः शत्रुविजयः सार्व्वभौमश्चासीत् । स च राजा चक्रवर्त्ती बुद्धस्योत्पन्नभावं श्रुत्वा हृष्टमना-

स्तद्दर्शनार्थमुपसमक्रामत् । भगवान् सुजातस्तस्मै धर्म्मं दिदेश च । स तु धर्म्मदेशनां श्रुत्वा प्रसन्नः सार्द्धं सप्तभी रत्नैश्चतुर्भिर्द्वीपवरैश्च राज्यं बुद्धप्रमुखेभ्यो भिक्षुगणेभ्यः समभ्यर्चयामास । समग्रं राज्यं दत्वा पुनर्भगवतः सकाशे प्राव्राजीत् । सकला अपि नगरवासिनस्तत्र नगरे समुत्पन्नानि महार्घाणि द्रव्यजातानि गृहीत्वा आरामिककृत्यानि साधयन्तः बुद्धप्रमुखेभ्यः भिक्षुसङ्घेभ्यो महार्घं दानं प्रददुः । सोऽपि भगवांस्त्वमनागते सम्बुद्धो भविष्यसीति व्याहरत् । स खलु राजा चक्रवर्ती तच्छ्रुत्वा भृशं प्रसन्नः कुशलेऽपि आसक्तोऽभूत् । स तु भगवान् सुजातः सर्व्वाणि बुद्धकृत्यानि समाप्य परिनिरवात् । तस्यापि भगवतस्त्रयः श्रावकसन्निपाताः बभूवुः । प्रथमे सन्निपाते षष्टिसहस्राणि । द्वितीये सन्निपाते पञ्चाशत्सहस्राणि । तृतीये सन्निपाते चत्वारिंशत्सहस्राणि भिक्षवो भवन्ति स्म । तस्य सुमङ्गलं नाम नगरमासीत् । पिता उग्रो नाम राजा । माता प्रभावती नाम देवी । सुदर्शनश्च देवश्चेति द्वावग्रश्रावकौ । नारदो नाम उपस्थायकः । नागा च नागसमाला चेति द्वे अग्रश्राविके । महावेणुवृक्षो बोधिः । शरीरमस्य उच्चैः पञ्चाशद्हस्तम् । आयुस्तस्य भगवतो नवतिवर्षसहस्रञ्चासीत् ।

इति भगवतः सुजाताद्व्याकरणलाभः ॥

---

ततश्चान्तरमतः अष्टादशानां कल्पानामुपरि एकस्मिन्नेव कल्पे प्रियदर्शी अर्थदर्शी धर्म्मदर्शी चेति त्रयः सम्बुद्धा बभूवुः । अथ भगवान् प्रियदर्शी सहस्ररश्मिः सकलानि वैनेयजनशतपत्राणि धर्म्मप्रभाभिः प्रबोधयन् ग्रामनिगमादिषु विससार । तस्य भगवतः शास-

नमपि चाहुनन्य विश्रुतश्चासीत् । तदा बोधिसत्त्वस्त्रिवेदपारङ्गत काश्यपो नाम मानवोऽभूत् । स तु मानवो भगवत प्रियदर्शिन उत्पन्नभाव श्रुत्वा सञ्जातप्रीति सहसा भगवन्तमुपसमनामत् । स च भगवांस्तस्मै धर्म्मदेशनश्चाकार्षीत् । स तु तस्य धर्म्मदेशना श्रुत्वा शरणेषु च शीलेषु च प्रतिष्ठित । स हि तस्मिन् प्रसन्न कोटिशत सहस्रधनपरित्यागान्महासङ्घारामञ्च कारयामास । स सङ्घाराम स भिक्षु सङ्घाय भगवते परिददौ । प्रत्यगृह्णाच्च भगवांस्तमाराम तदनुकम्पायै व्याहरच्च भगवांस्त्वमनागते बुद्धो भविष्यसीति । तद्व्याकरण श्रुत्वा प्रहृष्टमना सततं तदनुरक्तो बभूव । सोऽपि शास्ता सर्व्वाणि बुद्ध कृत्यानि समाप्य परिनिरयात् । तस्यापि भगवतस्त्रय श्रावकसन्नि पाता बभूवु । प्रथमे सन्निपाते कोटिशतसहस्राणि द्वितीये सन्निपाते नवतिकोटय तृतीये सन्निपाते अशीतिकोटयो भिक्षवो बभूवु । तस्य भगवत अनोमा नाम नगरी । पिता सुदिन्नो नाम राजा । माता चन्द्रा नाम देवी । पालितश्च सर्व्वदर्शी चेति द्वावग्रश्रावकौ बभूवतु । शोभितो नाम उपस्थायक । सुजाता च धर्म्मदिन्ना चेति द्वे अग्रश्रा विके । तस्य भगवत प्रियङ्गुद्रुमो बोधि । शरीरमस्य उच्चैरशीति हस्तम् । तस्यायुर्नवतिवर्षशतसहस्रमिति ।

इति भगवतः प्रियदर्शिनो व्याकरणलाभः ॥

---

ततश्चाऽपरभागे अर्थदर्शी नाम शास्ता उदपादि । स च भग वान् अर्थदर्शी सर्व्वोपायपर तांस्तान् देवमनुष्यान् भवबन्धनान्मोच यितुकामस्तत्र तत्र सपरिवारो विचचार । तेऽपि जना भगवन्तमर्थ दर्शिन समाश्रित्य तस्मिन् प्रसन्ना समभिवरान्दिरे । भगवान् अर्थदर्शी

तेभ्यश्चतुःसत्यानि प्राकाशयत् । केचिन्मार्गफलादिषु च केचिच्छरणेषु च शीलेषु च प्रदधुः । तस्य भगवतः अर्थदर्शिनः शासनं सुविस्तीर्णमासीत् । तदा बोधिसत्त्वो महर्द्धिको महानुभावः सुसीमो नाम तापसोऽभूत् । स तु भगवतः अर्थदर्शिनः उत्पन्नभावं समाकर्ण्य प्रहृष्टो देवलोकान्मदारकुसुममयं छत्रमाहृत्य भगवन्तं दर्शनार्थमुपसमक्रामत् । स तेन कुसुमछत्रेण भगवन्तमर्थदर्शिनं समभ्यर्च्चयामास । सोऽपि भगवांस्त्वमनागते बुद्धो भविष्यसीति व्याहरच्च स च समुदीरितमेतद्व्याकरणं समाकर्ण्य तुतोष । सोऽपि भगवान् सर्व्वाणि बुद्धकृत्यानि निष्ठाप्य परिनिरवात् । तस्याऽपि भगवतस्त्रयः श्रावकसन्निपाताः बभूवुः । प्रथमे सन्निपाते अष्टनवतिशतसहस्राणि । द्वितीये सन्निपाते अष्टाशीतिशतसहस्राणि तृतीये सन्निपाते अष्टाशीतिशतसहस्राणि च भिक्षवो बभूवुः । तस्याऽपि भगवतः शोभितं नाम नगरम् । पिता सागरो नाम राजा । माता सुदर्शना नाम देवी । शन्तश्च उपशन्तश्चेति द्वावग्रश्रावकौ । अभयो नाम उपस्थायकः । धर्म्मा च सुधर्म्मा चेति द्वे अग्रश्राविके । चम्पकद्रुमो बोधिः । शरीरमस्य उच्चैरशीतिहस्तम् । शरीरप्रभा समन्ततो योजनप्रमाणं स्थानं सर्व्वदा स्फोरयित्वाऽतिष्ठत् । तस्यायुर्वर्षशतसहस्रमिति ।

इति भगवतः अर्थदर्शिनो व्याकरणलाभः ॥

---

ततश्चानन्तरं धर्म्मदर्शी नाम सम्बुद्धः समुत्पेदे । स शास्ता धर्म्मदर्शी धर्म्मचक्रं प्रवर्त्य सकलजनानामनुग्रहं कुर्व्वन् ग्रामनिगमादिषु विचचार । दिदेश धर्म्मं स समग्रसत्त्वानुकम्पी । अन्ये शरणेषु च शीलेषु च प्रतितस्थुः अपरे मार्गफलादींश्चावबुबुधिरे । शासनमस्य

वाहुजन्यं सुविस्तीर्णञ्चासीत् । तदा बोधिसत्त्व शक्रो देवानामिन्द्रोऽभूत् । स शतक्रतुर्भगवते सुगन्धै पुष्पैस्तूर्य्यैश्च समभ्यर्चयामास। सोऽपि भगवांस्त्वमनागते बुद्धो भविष्यसीति व्याहरतिस्म। स शतक्रतु समुदीरितमेतद्व्याकरण समाकर्ण्य प्रसन्नमना कुशलकर्म्मणि प्रोत्साहित पर मरणात्सुरलोक एवोत्पन्न स भगवान् सर्व्वाणि बुद्धकृत्यानि समाप्य परिनिरवात् । तस्याऽपि भगवतस्त्रय श्रावकसन्निपाता बभूवु । प्रथमे सन्निपाते शतकोटि । द्वितीये सन्निपाते सप्ततिकोटि । तृतीये सन्निपाते अशीतिकोटिर्भिक्षवो बभूवु । तस्याऽपि भगवत शरण नाम नगरम् । पिता शरणो नाम राजा । माता सुनन्दा नाम देवी । पद्मश्च पुष्यदेवश्चेति द्वावग्रश्रावकौ । सुनेत्रो नाम उपस्थायक । क्षेमा च सर्व्वनामा चेति द्वे अग्रश्राविके । तस्य बोधिर्बिम्बजालद्रुम । शरीरमस्य उच्चैरशीतिहस्तम् । तस्यायुर्वर्षशतसहस्रमिति ।

इति भगवतो धर्म्मदर्शिनो व्याकरणलाभः ॥

---

ततश्चाऽपरभागे अत चतुर्नवतिकल्पानामुपरि एकस्मिन्नेव कल्पे एक एव सिद्धार्थो नाम सम्बुद्ध उदपादि । स भगवान् सिद्धार्थ प्रवर्त्तितवरधर्म्मचक्रो मोहान्धकार ध्वंसयित्वा समग्रान् जनान् धर्म्मं दिष्ट्वा भवबन्धनान्मोचयन् ग्रामनिगमादिषु विससार । तस्मिन् काले बहवो देवमनुष्या ससारदु खाद्व्यपगता । तस्य शासन विस्तारिकं वाहुजन्यञ्चासीत् । तदा बोधिसत्त्व उग्रतेजा अभिज्ञाबलसंयुक्तो मङ्गलो नाम तापसोऽभूत् । स तापसो भगवानुत्पन्न इति श्रुत्वा प्रहृष्टहृदयस्तस्य भगवतो दर्शनाय समुपागमत् । स हि महाजम्बूफलैर्भगवन्त सिद्धार्थं समभ्यर्चयामास । स शास्ता तत्फल परिभुज्य

त्वमनागते बुद्धो भविष्यसीति व्याहरच्च । स खलु एतद्व्याकरणं समाकर्ण्य अभिप्रसन्नः कुशलेषु कर्म्मसु निरन्तरं व्यावृतोऽभूत् । सोऽपि भगवान् सर्व्वाणि बुद्धकृत्यानि निष्ठाप्य परिनिरवात् । तस्याऽपि भगवतस्त्रयः श्रावकसन्निपाताः बभूवुः । प्रथमे सन्निपाते कोटिशतसहस्राणि द्वितीये सन्निपाते नवतिकोटयः । तृतीये सन्निपाते अशीतिकोटयश्च भिक्षव आसन् । सम्बुद्धस्य वेभारं नाम नगरम् । पिता जयसेनो नाम राजा । माता सुस्पर्शा नाम देवी । सम्बलश्च सुमित्रश्चेति द्वावग्रश्रावकौ । रेवतो नाम उपस्थायकः. शीपली च सुरामा चेति द्वे अग्रश्राविके । तस्य बोधिः कर्णिकारद्रुमः । शरीरमस्य उच्चैः षष्टिहस्तं चासीत् । तस्यायुर्वर्षशतसहस्रं बभूव ।

इति भगवतः सिद्धार्थाद्व्याकरणलाभः ॥

ततश्चानन्तरमतः द्विनवतिं कल्पानामुपरि एकस्मिन्नेव कल्पे तिष्यः पुष्यश्चेति द्वौ सम्बुद्धौ बभूवतुः । तयोर्भगवांस्तिष्यः परमाभिसम्बुद्धो लोकानुकम्पायै तत्र ग्रामनिगमादिषु संचरन् धर्म्मदेशनाञ्चकार । केचित् तद्धर्म्मदेशनां श्रुत्वा मार्गफलादिषु च केचिच्छरणेषु च शीलेषु च प्रतिष्ठामापुः । तस्य भगवतः सुविशुद्धशासनं समन्तात्प्रसृतं बाहुजन्यञ्चासीत् ।

तदा बोधिसत्त्वो महाभोगो महायशाः सुजातो नाम क्षत्रियो भूत्वा ऋषिः प्रव्रज्यया प्राव्राजीत् । पुनर्महर्द्धिञ्चाप्नोत् । स च ऋषिर्बुद्ध उत्पन्न इति श्रुत्वा प्रमुदितो दिव्यानि मन्दारपद्मपारिजातानि कुसुमानि चादायाऽगमत् । तैः पुष्पैश्चतुःपर्षन्मध्ये गच्छन्तं सम्बुद्धं समभ्यर्चयामास । तानि कुसुमानि अन्तरिक्षे वितानमिवासन् । सोऽपि

शास्ता त्वमनागते बुद्धो भविष्यसीति व्याहरत्। स तु ऋषि समुदीरितमेतद्व्याकरण समाकर्ण्य भृश तुतोष । स भगवान् सर्व्वाणि बुद्धकृत्यानि समाप्य परिनिरवात् । तस्याऽपि भगवतस्त्रय श्रावक सन्निपाता बभूवु । प्रथमे सन्निपाते शतकोटि । द्वितीये सन्निपाते नवतिकोटि । तृतीये सन्निपाते अशीतिकोटिर्भिक्षवो बभूवु । तस्य भगवत क्षेमा नाम नगरी । पिता जयसन्धो नाम क्षत्रिय । माता पद्मा नाम देवी । महदेवश्च उदयश्चेति द्वावग्रश्रावकौ । सम्भवो नाम उपस्थायक । पुष्या च सुदत्ता चेति द्वे अग्रश्राविके । बोधिस्तस्याऽशनतरु शरीरमस्य षष्टिहस्तम् । तस्यायुर्वर्षशतसहस्रमासीत् ।

इति भगवतः तिष्याद्व्याकरणलाभः ॥

ततश्चाऽपरभागे पुष्यो नाम शास्ता उदपादिष्ट । सोऽपि शास्ता प्रवर्त्तितवरधर्म्मचक्र क्रमेण ग्रामनिगमादिषु विचरन् सर्व्वसत्त्वाना हिताय सुखाय धर्म्ममदिशत् । केचिन्मार्गफलादिषु च केचिच्छरणेषु च शीलेषु च प्रतिष्ठामापु । सर्व्वे जनास्तन्निम्नास्तत्प्रवणास्तत्प्राग्भारा विहरन्तिस्म । शासन तस्य विश्रुत प्रकाशित चाभूत् । तदा बोधिसत्त्वो जितश्रेणीको विजितावी नाम राजा अभूत् । स च शास्तुरुत्पन्नभाव श्रुत्वा प्रसन्नमनास्त भगवन्त दर्शनाय उपसमक्रामत् । स भगवास्तस्मै धर्म्ममदिशच्च । स तु भगवत पुष्यस्य धर्म्मदेशना श्रुत्वा प्रसन्न राज्य त्यक्त्वा शास्तु सकाशे प्राव्राजीत्। त्रीणि च पिटकानि समुदग्रहीत् । स हि महाजनेभ्यो धर्म्मञ्च दिशतिस्म । शीलपारमीश्चापूरि । स भगवान् पुष्यस्त्वमनागते बुद्धो भविष्यसीति व्याहरत् । स तु समुदीरितमेतद्व्याकरण समाकर्ण्य महृष्ट

हृदयः कुशलकर्म्मणि प्रोत्सेहे । भगवान् पुष्यः सर्व्वाणि बुद्धकृत्यानि समाप्य परिनिरवात् । तस्याऽपि भगवतस्त्रयः श्रावकसन्निपाताः बभूवुः प्रथमे सन्निपाते षष्टिशतसहस्राणि । द्वितीये सन्निपाते पञ्चाशच्छतसहस्राणि । तृतीये सन्निपाते द्वात्रिंशत् शतसहस्राणि भिक्षवः अभूवन् । तस्याऽपि भगवतः काशी नाम नगरी । पिता जयसेनो नाम राजा । माता श्रीमती नाम देवी । सुरक्षितश्च धर्म्मसेनश्चेति द्वावग्रश्रावकौ । सभियो नाम उपस्थायकः । चाला उपचाला चेति द्वे अग्रश्राविके । आमलकद्रुमस्तस्य बोधिः । शरीरमस्य उच्चैरष्टपञ्चाशद्हस्तम् । तस्यायुर्वर्षशतसहस्रमिति ।

## इति भगवतः पुष्याद्व्याकरणलाभः ॥

ततश्चाऽपरभागे अतो भवतिकल्पे विदर्शी नाम सम्बुद्धः प्रादुरासीत् । स भगवाँल्लोके मोहतमः विध्माय वैनेयजनांश्चतुःसत्यान्यवबोधयतिस्म । तस्य भगवतः शासनं प्रकाशितं बाहुजन्यञ्चासीत् । तदा बोधिसत्त्वो महर्द्धिर्महानुभावः अतुलो नाम नागराजोऽभूत् । स हि भगवतः प्रादुर्भावं श्रुत्वा समधिकं तुतोष । अभ्यगमच्च भगवन्तं दर्शनार्थम् । स भगवांस्तस्मै धर्म्मं कथयतिस्म । तच्छ्रुत्वा प्रसन्नमनाः सप्तरत्नाबद्धं स्वर्णमयं पीठं तस्मै भगवते समभ्यर्चयामास । स भगवांस्त्वमनागते बुद्धोभविष्यसीति व्याहरत् । स च तद्व्याकरणं समाकर्ण्य अभिप्रसन्नः यावज्जीवं कुशलकर्म्मण्येव अभिरतः । स भगवान् विदर्शी यावदायुः सर्व्वाणि बुद्धकृत्यानि विधाय परिसमाप्य परिनिरवात् । तस्याऽपि भगवतस्त्रयः श्रावकसन्निपाता बभूवुः । प्रथमे सन्निपाते अष्टषष्टिशतसहस्राणि । द्वितीये सन्निपाते एकशतसहस्रम् ।

तृतीये सन्निपाते अशीतिसहस्राणि भिक्षवो बभूवु । तस्याऽपि भगवतो बन्धुमती नाम नगरी। पिता बन्धुमान्नाम राजा। माता बन्धुमती नाम देवी । खण्डश्च तिष्यश्चेति द्वावग्रश्रावकौ। अशोको नाम उपस्थायकः । चन्द्रा च चन्द्रमित्रा चेति द्वे अग्रश्राविके। पाटली द्रुमस्तस्य बोधि । उच्चैरशीतिहस्तम् अस्य शरीरम्। शरीरप्रभा चास्य सर्व्वदा सप्तयोजनानि स्फुरन्ती तस्थौ। तस्यायुर्वर्षाण्यशीति-सहस्रामिति।

इति भगवतो विदर्शिनो व्याकरणलाभः।

---

ततश्चानन्तरमत एकत्रिंशत्कल्पे शिखी विश्वभूश्चेति द्वौ सम्बुद्धौ प्रादुरासतु । अथ भगवान् शिखी सम्बोधिसमधिगतस्तत्र तत्र ग्राम-निगमादिषु विचरन् बहून् देवमनुष्यान् भवबन्धनादमोचयत्। तस्मिन् शासने बहवो देवमनुष्या प्रसन्ना दानादीनि बहूनि कुशलकर्म्माणि नितरां सञ्चिन्वन्तो बभूवु । तदा बोधिसत्त्व अरिन्दमो नाम राजाऽभूत्। स च बुद्धस्योत्पन्नभाव श्रुत्वा प्रसन्नचित्तस्तं भगवन्तं दर्शनार्थं समुपाययौ। तद्दर्शनेनैव प्रमुदितश्चासीत्। भगवानपि तस्मै धर्म्मं मदिशच्च। तच्छ्रुत्वा प्रसन्नो भगवन्तं भोजनाय निमन्त्रयामास। अध्य-वासयत् भगवांस्तन्निमन्त्रणं तूष्णीम्भावेन। स च परेद्यु स भिक्षुसङ्घं भगवन्तं महार्घैश्चीवरैः सर्वं प्रणीतेन भोजनेन च समभ्यर्चयामास। समार्पयच्च सप्तरत्नैर्विभूषितं हस्तिरत्नम् । पश्चात्तत्प्रमाणीकृत्य अनुरूपाणि भाण्डानि च ददौ। सोऽपि भगवांस्त्वमनागते बुद्धो भविष्यसीति व्याहरच्च। स तु समुदीरितमेतद्व्याकरणं समाकर्ण्य सम्प्रहृष्ट अत्यर्थं कुशलेषु कर्म्मसु अभिरतवान्। सोऽपि भगवान्

सर्व्वाणि बुद्धकृत्यानि निष्ठाप्य परिनिरवात् । तस्याऽपि भगवतस्त्रयः श्रावकसन्निपाताः अभूवन् । प्रथमे सन्निपाते शतसहस्राणि । द्वितीये सन्निपाते अशीतिसहस्राणि । तृतीये सन्निपाते सप्ततिसहस्राणि भिक्षवो बभूवुः । तस्याऽपि अरुणवती नाम नगरी । पिता अरुणो नाम भूपतिः । माता प्रभावती नाम देवी । अभिभूश्च सम्भवश्चेति द्वावग्रश्रावकौ । क्षेमङ्करो नाम उपस्थायकः । मखिला च पद्मोचेति द्वे-अग्रश्राविके । तस्य बोधिः पुण्डरीकद्रुमः । उच्चैः सप्ततिहस्तमस्य शरीरम् । तस्य शरीरप्रभा योजनत्रयं स्फुरन्ती तस्थौ । तस्यायुर्वर्षाणां सप्तत्रिंशत्सहस्रमिति ।

## इति भगवतः शिखेर्व्याकरणलाभः ॥

---

ततश्चाऽपरभागे विश्वभूर्नाम शास्ता लोके प्रादुरासीत् । स च भगवान् विश्वभूः प्रवर्त्तितवरधर्म्मचक्रः सर्व्वसत्त्वेष्वनुकम्पी समन्ततो ग्रामनिगमादिषु बहून् जनान् देवब्रह्मादींश्च भवबन्धनान्मोचयन् धर्म्मञ्च दिशन् विससार । तस्य भगवतः शासनं सर्व्वत्र प्रकाशितं विस्तीर्णं मूलग्रहणञ्चाभूत् । बहवो देवाश्च मनुष्याश्च तस्मिन् प्रसादं जनयामासुः । तदा बोधिसत्त्वः प्रियदर्शनः सुदर्शनो नाम नरपतिरासीत् । स नृपतिवरो भगवतो विश्वभुवः उत्पन्नमावं समाकर्ण्य तद्दर्शनार्थं महत्या प्रीत्या समुपाययौ । स भगवांस्तस्मै नृपाय धर्म्ममादिशत् । स तु तच्छ्रुत्वा अतीव प्रासीदत् । न्यमन्त्रयच्च सभिक्षुसङ्घं भगवन्तं भोजनार्थम् अध्यवासयच्च भगवांस्तूष्णीम्भावेन तस्याऽराधनम् । स परेद्युः प्रसन्नेन मनसा बुद्धप्रमुखेभ्यो भिक्षुगणेभ्यो महार्घं सचीवरं महादानं समभ्यर्चयामास । प्राव्राजीच्च तस्य भगवतः

सकाशे। सोऽपि आचारसम्पन्नो गुणवान् भगवति चित्तीकारबहुल प्रीतिमान् प्रव्रजितोऽभूत्। स हि भगवास्त्वमनागते सम्बुद्धो भविष्यसीति व्याहरत्। स च समुदीरितमेतद्ध्याकरण समाकर्ण्य तुतोष। स भगवान् सर्व्वाणि बुद्धकृत्यानि समाप्य परिनिरवात्। तस्याऽपि भगवतस्त्रय श्रावकसन्निपाता बभूवु। प्रथमे सन्निपाते अशीतिशतसहस्राणि। द्वितीये सन्निपाते सप्ततिशतसहस्राणि। तृतीये सन्निपाते षष्टिशतसहस्राणि भिक्षवो बभूवु। तस्यापि भगवतो अनोपम नाम नगरम्। पिता सुप्रतीतो नाम राजा। माता यशस्वती नाम देवी। शोनश्च उत्तरश्चेति द्वावग्रश्रावकौ। उपशन्तो नाम उपस्थायक। दामा च समाला चेति द्वे अग्रश्राविके। तस्य बोधि शालद्रुम। उच्चै षष्टिहस्त तस्य शरीरम्। षष्टिवर्षसहस्रञ्चास्य आयुरिति।

इति भगवतो विश्वभुवो व्याकरणलाभः॥

---

ततश्चानन्तरमस्मिन्नेव भद्रकल्पे *ककुसन्ध कनकागम काश्यपो गौतमश्चेति चत्वार सम्बुद्धा समुत्पेदिरे। अथ भगवान् ककुसन्ध समधिगतसम्बोधि सकलेषु देवमनुष्येषु अनुकम्पी तेषामर्थाय हिताय तत्र तत्र विचरन् धर्म्ममदिशत्। तस्य धर्म्मदेशना श्रुत्वा बहव प्राणिनो भवबन्धनानि छित्वा विमुक्तिसुख प्रतिलेभिरे। तस्य भगवत सुविशुद्ध शासन सर्व्वत्र विस्तीर्णमासीत्। तदा बोधिसत्त्व क्षेमो नाम राजा भूत्वा बुद्धप्रमुखेभ्यो भिक्षुगणेभ्य सपात्रचीवर महादानञ्च अञ्जनानि च भैषज्यानि च प्रददौ। स भगवास्तस्मै धर्म्ममदिशत्। स तु प्रव्रसस्तत्समीपे प्राव्राजीच। सोऽपि भगवास्त्व

---

* 'ककुच्छन्द' इति कुत्रचित्।

मनागते सम्बुद्धभावं प्राप्स्यसीति व्याहरत् । आसीदत्र तद्व्याकरणं समाकर्ण्य । स हि भगवान् ककुत्स्यन्दः सर्व्वाणि बुद्धकृत्यानि समाप्य परिनिर्व्वाणमगमत् । तस्याऽपि भगवतः एक एव श्रावकसन्निपात आसीत् । तस्मिन् सन्निपाते चत्वारिंशत् शतसहस्राणि भिक्षवः बभूवुः । तस्य भगवतः क्षेमं नाम नगरम् । पिता अग्निदत्तो नाम ब्राह्मणः । माता विशाखा नाम ब्राह्मणी । विधुरश्च सञ्जीवश्चेति द्वावग्रश्रावकौ । बुद्धिजो नाम उपस्थायकः । श्यामा च चम्पका चेति द्वे अग्रश्राविके । तस्य बोधिः शिरीषद्रुमः । शरीरमस्य उच्चैश्चत्वारिंशद्हस्तम् । आयुस्तस्य चत्वारिंशद्वर्षसहस्रमिति ।

इति भगवतः ककुत्स्यन्दाद्व्याकरणलाभः ।

---

ततश्चाऽपरभागे कनकागमो * नाम शास्ता लोके उदपादिष्ट । स भगवान् कनकागमः प्रवर्त्तितवरधर्म्मचक्रः क्रमेण सत्त्वानुग्रहार्थं ग्रामनिगमादिषु सञ्चरन् धर्म्माम्बुधरविसरैः क्लेशाग्निसन्तप्तान् महाजनान् शीतलीकुर्व्वन् अमृतभेरिमुन्नादयंश्च विससार । तस्य भगवतः शासने बहवो देवमनुष्याः प्रसन्नाः बभूवुः । केचिन्मार्गफलाधिगमेन च केचिच्छरणशीलप्रदानेन च सार्थीकृताः । तच्छासनं सर्व्वत्र विस्तीर्णं बाहुजन्यञ्चासीत् । तदा बोधिसत्त्वः पर्व्वतो नाम राजाऽभूत् । स नृपतिवरो भगवतः कनकागमस्य प्रादुर्भावं श्रुत्वा प्रमुदितमना अमात्यवृन्दपरिवृतो भगवन्तं कनकागमं दर्शनार्थं समुपाययौ । तस्मै नृपतये भगवान् धर्म्ममदिशत् । स तच्छ्रुत्वा प्रसन्नो भगवन्तं सभिक्षुसङ्घं भोजनाय निमन्त्रयामास । अध्यवासयच्च

---

* 'कनकमुनि' रिति कुत्रचित्

भगवास्तूष्णीम्भावेन तन्निमन्त्रणम् । स परेद्युर्बुद्धप्रमुखेभ्यो भिक्षुग णेभ्यो महार्घं दानञ्च पत्रोर्णं चीनपट्ट कौशेय कम्बल क्षौमाणि च स्वर्णपट्टञ्च समर्पयामास । प्राव्राजीच्च पश्चाच्छास्तु सकाशे । सोऽपि भगवास्त्वमनागते सम्बुद्धो भविष्यसीति व्याहरत् । स च तेनसम्बुद्धेनोदीरितमेतद्व्याकरण समाकर्ण्य भृश तुष्टिं प्रापत् । भगवान् कनकागम सर्वाणि बुद्धकृत्यानि समाप्य परिनिरवात् तस्याऽपि भगवत एक एव श्रावकसन्निपातो बभूव । तस्मिन् सन्निपाते त्रिंशत् सहस्राणि भिक्षव अभवन् । तस्य भगवत शोभा वती नाम नगरी । पिता यज्ञदत्तो नाम ब्राह्मण । माता उत्तरा नाम ब्राह्मणी । भीय्यंसश्च उत्तरश्चेति द्वावग्रश्रावकौ । स्वस्तिजो नाम उप स्थायक । समुद्रा च उत्तरा चेति द्वेअग्रश्राविके । बोधिस्तस्य उदु म्बरद्रुम । उच्चैस्तस्य शरीर त्रिंशद्हस्तम् । आयुस्त्रिंशद्वर्षसहस्रमिति ।

इति भगवतः कनकागमाद्व्याकरणलाभः ॥

ततश्चाऽपरभागे काश्यपो नाम सम्बुद्धो लोके प्रादुरासीत् । स भगवान् समधिगतसम्बोधिरानुपूर्व्येण सकलान् देवमनुष्यान् भवब न्धनात् परिमोचयन् सत्त्वेष्वऽनुदय प्रतीत्य चतु सत्यप्रतिमण्डित परमसूक्ष्म धर्मञ्चाप्यवादीत् । ता धर्मदेशना समाकर्ण्य बहवो देवमनुष्या शरणेषु च शीलेषु च प्रतिष्ठामापु । केचिन्मार्गफलाधि गमञ्च विदधु । तस्य शासन विश्रुत बाहुजन्यञ्चासीत् । तदा बोधि सत्त्वस्त्रिवेदपारङ्गतो भूमौ चान्तरीक्षे च सम विश्रुतो घटीकारस्य नाम कुम्भकारस्यापि प्रियसुहृज्ज्योतिपालो नाम मानवोऽभूत् । स तु मानवो भगवत काश्यपस्यउत्पन्नभाव श्रुत्वा त भगवन्त दर्शनार्थं तेन सहायेन घटीकारेण समम् उपसमक्रामत् । स भगवास्तस्मै

समित्राय धर्म्ममदिशच्च । स मानवः प्रसन्नस्तस्य सकाशे प्राव्राजीत् । स च वीर्य्यवांस्त्रीणि पिटकानि चोद्ग्राह्य आचारसम्पदया बुद्धाशासनं शोभयामास । सोऽपि भगवांस्त्वमनागते सम्बुद्धभावमाप्स्यसीति व्याहरत् । स तु तद्व्याकरणं समाकर्ण्य भृशं प्रामोदिष्ट । स भगवान् सर्व्वाणि बुद्धकृत्यानि समाप्य परिनिरवात् । तस्याऽपि भगवतः एक एव श्रावकसन्निपातः । तस्मिन्नेव सन्निपाते विंशत्सहस्राणि भिक्षवो बभूवुः । तस्याऽपि भगवतो वारणसी नाम नगरी । पिता ब्रह्मदत्तो नाम द्विजवरः । माता धनवती नाम ब्राह्मणी । तिष्यश्च भारद्वाजश्चेति द्वावग्रश्रावकौ । सर्व्वमित्रो नाम उपस्थायकः । अनुला च उरुवेला चेति द्वे अग्रश्राविके । तस्य बोधिर्न्यग्रोधवृक्षः । शरीरमस्य उच्चैर्विंशद्हस्तम् । आयुर्विंशतिवर्षसहस्रमिति ।

इति भगवतः काश्यपाद्व्याकरणलाभः ॥

---

एवमस्माकं बोधिसत्त्वो दीपङ्करादीनां चतुर्विंशत्याः संबुद्धानां सकाशे प्रतिलब्धव्याकरणो मनुष्यत्वम् लिङ्गसम्पत्तिः हेतुः शास्तुः संदर्शनम्, प्रव्रज्या, गुणसम्पदा, अधिकारः, छन्दता चेति एभिरष्टभिर्धर्म्मैः समन्वागतो भूत्वा कल्पशतसहस्राधिकानि चत्वारि असङ्ख्येयानि दशपारमयो दश उपपारमयो दशपरमार्थपारमयश्चेति समत्रिंशत् पारमीः परिपूरयन् पारमीणां मस्तकं प्रापच्च ।

**इति श्रीशीलस्कन्धस्थविरस्य कृतौ सद्धर्ममकरन्दे चतुर्विंशत्या बुद्धानां सकाशे व्याकरणलाभपरिदीपनो नाम**

**पञ्चमोऽध्यायः ।**

---

# अथ षष्ठोऽध्यायः ।

ततः स खलु बोधिसत्त्वः पूरितपारमीको लब्धव्याकरणो निष्ठित-सर्व्वबुद्धकारकधर्म्मस्तस्माच्च्योतित्वा तुषितदेवलोके महानुभाव ‡सन्तुषितो नाम देवपुत्रो भूत्वा समुदपद्यत । यदा बोधिसत्त्वः तुषित भवने निष्पन्नः तदा *बुद्धकोलाहलो नाम एकः कोलाहलश्चोदपा

‡ 'श्वेतकेतु' रिति कुत्रचित् ।

जगति ह्यस्मिन् कल्पकोलाहलो बुद्धकोलाहलश्चक्रवर्त्तिकोलाहलश्चेति त्रय §कोलाहला समुत्पद्यन्ते । तत्र अतो वर्षशतसहस्रस्यातिक्रमेण कल्पविनाशो भविष्यति अयं लोकोपि नङ्क्ष्यतीति लोकव्यूहा नाम कामावचरभूमौ निर्वृत्ता देवा मुक्तशिरसो विकीर्णकेशा क्रन्दनपरवशा हस्तैरश्रून् परिमृजन्त लोहितव स्त्राणि वसाना विरूपवेशधारिणो मानुष्यपथे विचरन्त एवमारोचयन्ते । मारिषा ! अतो वर्षशतसहस्रस्यातिक्रमेण कल्पविनाशो भविष्यति अयञ्च लोको नङ्क्ष्यति महासमुद्रोपि विशोक्ष्यति । इयञ्च महती पृथिवी उच्छेत्स्यते । सुमेरुश्च पर्व्वत राजः उद्ध्मास्यति नङ्क्ष्यति । आब्रह्मलोकाल्लोकविनाशोपि भविष्यतीति । मैत्रीं मारिषा ! भावयत । करुणां मारिषा ! भावयत । मुदितां मारिषा ! भावयत । उपेक्षां मारिषा ! भावयत मातरं मारिषा ! उपस्थापयत । पितरं मारिषा ! उपस्थापयत । कुलेषु ज्येष्ठापचायिनो मारिषा ! भवतेति अयं कल्प कोलाहलो नाम ॥

अथ लोकपाला नाम देवा अतो मारिषा ! वर्षसहस्रस्यातिक्रमेण सर्व्वदर्शी सर्व्ववित् सम्बुद्धो लोके उत्पत्स्यत इति तत्र तत्र उद्घोषयमाणा मानुष्यपथे आचरन्ति । अयं बुद्धकोलाहलो नाम । तथापि लोकपाला नाम देवा अतो मारिषा ! वर्षशतस्यातिक्रमेण सार्व्वभौमश्चक्रवर्त्ती राजा भविष्यतीति उद्घोष यन्तो मानुष्यपथ आचरन्ति । अयं चक्रवर्त्तिकोलाहलो नाम । इमे त्रय एव कोलाहला महान्त भवन्ति । तत्र इमं बुद्धकोलाहलशब्दं श्रुत्वा सकला दश-सहस्रचक्रवालेषु देवा एकत्र सन्निपतन्ति । ते सन्निपत्य असौ नाम सत्वो बुद्धो भविष्यतीति ज्ञात्वा तमुपसङ्कम्य आयाचन्ते । आयाचमानास्ते पूर्व्वनिमित्तेषु उत्पन्नेषु एव आयाचन्ते ॥

§ क्वचित् मङ्गलकोलाहलेन सार्द्धं चत्वारोपि कोलाहला दृश्यन्ते ॥

दिष्ट । तदापि सर्व्वे ते एकैकचक्रवाले चातुर्महाराजशक्रसुयामसन्तुषितपरनिर्म्मितवशवर्त्तिमहाब्रह्मभिः सार्द्धमेकस्मिंश्चक्रवाले सन्निपत्य तुषितभवने बोधिसत्त्वस्य सकाशमुपगम्य एवं व्यजिज्ञपन् । भवद्भिर्मारिषाः! दशपारमीः न शक्रसम्पत्तिं न मारसम्पत्तिं न ब्रह्मसम्पत्तिं च प्रार्थयद्भिः पूरिताः । सर्व्वजगतामेव भवार्णवोत्तरणार्थं सर्व्वज्ञतां प्रार्थयद्भिः पूरिताः । कालो वो मारिषाः! इदानीं बुद्धभावस्य । समयो वो मारिषाः! बुद्धभावस्येतिकृताञ्जलयो याच्ञांसमभिचक्रुः ।

अथ महासत्त्वो देवानां प्रतिज्ञामदत्त्वैव कालो द्वीपो देशः कुलं मातुरायुःपरिच्छेदश्चेति पञ्च महाविलोकनानि व्यलोकयत् । तानि विलोकयंश्च प्रथममेव कालं व्यलोकयत् । तत्र वर्षशतसहस्रादूर्ध्वं वर्द्धितायुः कालः कालो नाम न भवति । कथम्? । तदा हि सत्त्वानां जातिजरामरणानि न प्रकटीभवन्ति । बुद्धानां हि धर्म्मदेशना त्रिलक्षणमुक्ता नाम नाभवत् । तेषान्तु अनित्यं दुःखमनात्मेति कथयतां किन्नामैतत् कथयतीति ते नैव श्रोतव्यं न श्रद्धातव्यं मन्यन्ते । ततश्चाभिसमयो न भविष्यति । तस्मिन्नसति अनिर्य्याणिकञ्च शासनं भवति । तस्मादेष ह्यकालः । वर्षशतादूनायुरपि कालो न भवति । कथम् । तदा सत्त्वाः क्लेशोत्सन्नाः भवन्ति । उत्सन्नक्लेशानां दत्तोप्यववादस्तत्र स्थाने न तिष्ठति । जले राजिल इव क्षिप्रं व्यपगच्छति । तस्मात् सोऽप्यकालः । वर्षशतसहस्रादधो वर्षशतादुपरि आयुः कालो नाम । तदा वर्षशतायुः कालो भवति । अथ महासत्त्वो निर्वर्त्तितव्योऽयं काल इति कालमद्राक्षीत् ।

तदनन्तरं द्वीपमवलोकयन् सपरिवारांश्चतुरो द्वीपानवालोकयत् । समवलोक्य च पूर्व्वविदेहापरगोयानोत्तरकुर्वादिषु त्रिषु द्वीपेषु स-

म्बुद्धा न जायन्ते । एकस्मिन्नेव जम्बूद्वीपे जायन्ते इति द्वीप विलोकयामास । तथापि जम्बुद्वीपोनाम दशसहस्रयोजनपरिमाण कतरस्मिन् प्रदेशे जायन्त इति प्रदेशमपि व्यलोकयत् । स च *मध्यदेश व्यलोकयत् । अत्र प्रदेशे सम्बुद्धा प्रत्येकबुद्धा अग्रश्रावका अशीतिमहाश्रावकाश्चक्रवर्तिनरश्रेष्ठाश्चान्ये महाशया महोदया महा भाग्या ब्राह्मणक्षत्रियगृहपतिमहासाराश्चोत्पद्यन्ते । ततश्चात्र कपि लवस्तु नाम महानगरम् । तत्र मया निर्वर्तितव्यामिति निश्चिकाय ।

तदनन्तर कुल व्यलोकयत् । सम्बुद्धा नाम वैश्यकुले वा शूद्र कुले वा न जायन्ते । लोकसम्मते ब्राह्मणकुले वा क्षत्रियकुले वेति द्वयो कुलयोरन्यतरस्मिन्कुले जायन्ते । इदानीं क्षत्रियकुल लोकस म्मतम् । तत्राऽह निर्वर्त्स्यामि । शुद्धोदनो नाम महाराजो मत्पिता भविष्यतीति कुलमद्राक्षीत् । ततश्चानन्तर मातरमवालोकयत् । बुद्ध माता नाम लोला धूर्ता सुरामदमत्ता च न भवितव्या । कल्पशतस हस्रञ्च पूरितपारमी आजन्मन परिशुद्धा अखण्डपञ्चशीला एव भवि तव्या । इय महामाया नाम देवी एतादृशी । इय मम माता भवि ष्यति । अस्या कति आयुरिति । दशाना मासानामुपरि सप्त दिव सा इति समद्राक्षीत् । इत्थमिम पञ्चमहाविलोकन विलोक्य कालो मारिषा ! बुद्धभावस्येति तेषा देवाना सङ्ग्रह कुर्वन् प्रतिज्ञा दत्त्वा यूय गच्छतेति तांश्च देवानुद्योजयामास । अथ स सन्तुषितो नाम देवपुत्रस्तुषितपुरवासिभिर्देवताभि परिवृतस्तुषितपुरवरे * नन्दनो

---

* हिमवद्विन्ध्ययोर्मध्य यत् प्राग्विनशनादपि ।
प्रत्यगेव प्रयागाच्च मध्यदेश प्रकीर्तित ॥

* सर्वेष्वपि देवलोकेषु नन्दनवन नाम एकमुद्यानमस्त्येव ॥

द्यानं प्रविवेश। तदापि तत्रोद्याने देवा भगवन्! त्वमतश्च्योतित्वा सुगतिं गच्छ। भगवन्! त्वमतश्च्योतित्वा सुगतिं गच्छेति पूर्वजन्मनि कृतकुशलकर्म्मावकाशं संसरन्तः विचरन्तिस्म। एवं स कुशलं संसरद्भिर्देवैः परिवृतस्तत्र नन्दनोद्याने विचरित्वैव ततश्च्योतित्वा महामायायाः देव्याः गर्भे उत्तराषाढनक्षत्रयोगेन प्रतिसन्धिग्रहणञ्चकार।

इति बोधिसत्त्वस्य प्रतिसन्धिग्रहणम्॥

---

तस्य प्रतिसन्धिग्रहणस्याविर्भावार्थमिहैव इयमनुपूर्व्वकथापि व्याख्यायते। कथम्?। तदा किल कपिलवस्तुनाम्नि नगरे आषाढनक्षत्रक्रीडाया उद्घोषणं वर्त्ततेस्म। महाजनो महत्या प्रीत्या नक्षत्रक्रीडां करोति। महामायादेव्यपि पूर्णमास्याः पूर्व्वएव आसप्तदिवसेभ्यो-मालासुगन्धविभूतिसमन्वागता आसीत्। सा तु देवी नक्षत्रक्रीडामनुभवन्ती सप्तमेऽहनि प्रत्यूष एव उत्थाय सुपरिशुद्धेन नानासुगन्धपरिभावितेन उदकेन स्नानं विदधौ। चत्वारि शतसहस्राणि च कार्षापणानि विसृज्य महार्घं दानञ्च प्रददौ। सा च देवी मुक्तसर्व्वालङ्कारा परिशुद्धाहतधवलवसना वरं भोजनं परिभुज्य अष्टाङ्गसमन्वागतमुपोषितशीलमधितष्ठौ। श्रीविभूतिसमुदयैर्विभ्राजितं दिव्यविमानसदृशं स्वं मन्दिरं प्रविश्य श्रीशयने निपन्ना निद्रासुखमगमत्। सा शयाना ईदृशं स्वप्नमद्राक्षीत्। लोकपालाश्चत्वारो देवराजास्तां देवीं शयनेनैव साकमुत्क्षिप्य हिमालयं नीत्वा षष्टियोजने मनःशिलातले सप्तयोजनस्य महाशालद्रुमस्याऽधः संस्थाप्य एकमन्तमभितस्थुः। अथ तेषां देव्यो दिव्याप्सरसः समागत्य देवीं तामनवतप्तसरो नीत्वा मानुष्यगन्धहरणार्थं स्नापयामासुः। दिव्यानि च वस्त्राणि निवासयामासुः। सुगन्धैर्विलेपनैश्च विलेपयामासुः। दिव्यानि च कुसुमानि

पिद्धु । ततश्चाविदूरे कलधौतमय पर्वतश्चास्ति । तस्या न्तेपि स्वर्णविमानश्चास्ति । तत्रापि प्राचीनशीर्षक शयनं विधाय देवीं शाययामासु । ततश्चाविदूरे अन्यैक स्वर्णपर्व्वत । अथ बोधिसत्त्व श्वेतवरवारणो भूत्वा तलाद्भावचारीत् । पुनर्स्ततोऽवरुह्य रजतपर्व्वतमधिरुरोह । उत्तरस्या दिश समागत्य रजतदामसदृशेन हस्तिकरेण धवलशतपत्र गृहीत्वा वृंहनादस्थानदत् । स पश्चाद्धेम-विमान प्रविश्य मातु शयनमपि त्रिवार प्रदक्षिणीकृत्य वामेतर पार्श्वं प्रदलय्य गर्भकोश प्रविष्ट एवाभूत् ।

परेद्यु प्रबुद्धा महिषी तत् स्वप्न राज्ञे न्यवेदयत् । राजा शुद्धो-दनोपि दिशा प्रतीताश्चतु षष्टिब्राह्मणान् निमन्त्रयामास । स राजा लाजपञ्चमै सुविशुद्धमङ्गलसत्कारै सज्जिताया भूमौ महार्घाणि चास नानि रचयामास । ततस्तेभ्य समागत्य तत्र निषण्णेभ्यो द्विजातिभ्य सर्पिर्मधुशर्कराभिसंस्कृतेन वरपायसेन स्वर्णरजतपाती परिपूर्य्य तादृ-ग्भिरेव स्वर्णरजतपातीभि प्रतिच्छाद्य समभ्यार्चयत् । तथा चान्यै-राहृतवस्त्रै कपिलगोदानादिभिस्तान् सन्तर्पयामास । अथ राजा तेभ्यो द्विजातिभ्य सर्व्वै कामै सन्तर्पितेभ्यस्तत् स्वप्नमावेदयतेभ्य । पप्रच्छ च तान् द्विजवरान् किं नो भविष्यतीति । ते एव स्वप्नफल-मब्रुवन् । मा चिन्तयो महानृपवर ! देव्यास्ते महाराज कुक्षौ गर्भ प्रतिष्ठित । स च पुरुषगर्भ एव । न स्त्रीगर्भ । पुत्रस्ते महाराज ! भविष्यति । स यदि गृहमधिवत्स्यति । राजा भविष्यति सार्व्वभौम-श्चक्रवर्ती । स चेद्गृहान्निष्क्रम्य प्रव्रजिष्यति । सम्बुद्धो भविष्यति लोके विवर्त्तच्छद्म इति । तच्छ्रुत्वा राजा भृश तुष्टिं आप । बोधि सत्त्वस्यापि मातृगर्भे प्रतिसन्धिग्रहणक्षण एव सकलापि दशसाहस्री-

लोकधातुः एकप्रहारेण प्राकम्पत । संप्राकम्पत । पूर्वोक्तानि च सर्वाणि पूर्वनिमित्तानि प्रादुर्बभूवुः । दशसु चक्रवालसहस्रेषु अनन्त-श्चालोको बभूव ।

इति श्रीनीलकण्ठधर्मधिरस्य कृतौ सद्धर्ममकरन्दे बोधिसत्त्वस्य प्रतिसन्धिमहत्त्वपरिदीपनो नाम ।
षष्ठोऽध्यायः ॥

---



काययोरार्तिं जह्तु । तेषा स्वर्णजालेन सहिताना ब्रह्मणा हस्ताच-त्वारो देवराजा सुखस्पर्शेन अजिनप्रवेण्या च तेषा हस्तेभ्यो मनुष्या दुकूलचुम्बटकेन च प्रतिजगृहु । स बोधिसत्त्वो मनुष्याणा हस्ततो मुक्त्वा पृथिव्या सुप्रतिष्ठाय प्राचीं दिश विलोकयामास । नैकसहस्रचक्रवाला एकाङ्गणश्चाभवत् । तत्रस्था सर्वे देवमनुष्या गन्धमालादिभि समभ्यर्चयमाना एवमूचुश्च । पुरुषोत्तमा ! इह युष्माभि सदृश अपर सत्त्वो नाम नैवास्ति । कोऽत्र श्रेष्ठतरो वा उत्कृष्टतरो वा युष्मत् । एवमपि स तु चतस्रो दिशश्च चतस्रोऽनुदिशश्च अधश्चोऽपरीति दश दिशो विलोक्य आत्मना तु सदृश कमपि न विलोकयामास । ततश्चानन्तर स महासत्त्व इयमुत्तरा नाम दिशेति मत्वा तत्रापि सप्तपदव्यतिहारेण जगाम । तदा महा-ब्रह्मा श्वेतच्छत्र दधौ सुयामो नाम देवश्चामरञ्च अन्ये देवा शेष-राजभाण्डानि च गृहीत्वा महासत्त्वमनुजग्मु । तत्र सप्तमे पदे स्थित अग्रोस्म्यह लोकानाम् । श्रेष्ठोस्म्यह लोकानाम् । ज्येष्ठोस्म्यह लोकानाम् इयमन्तिमा जाति । नास्ति ममेदानीं पुनर्भव इति अभीतनादं ननाद । बोधिसत्त्वो हि महौषधपण्डितकाले विश्वन्तरराजकाले अस्मिंश्चात्मभावे इति त्रिष्वेवात्मभावेषु मातृगर्भा न्निष्क्रामन्नेव वाच समभ्युदैरयच्च । यदा बोधिसत्त्वो मातृगर्भान्निरकामत् तदेव यशोधरा च देवी छन्नश्च अमात्य कालुदायी च सचिव कन्थकश्च वाजिराज अश्वत्थश्च द्रुमपति चत्वारश्च निधय इति इमेऽपि सहजाता बभूवु ।

अथ उभयनगरवासिनो बोधिसत्त्वमादाय कपिलवस्तुपुरमेवा-जग्मु । तद्दिन एव राज्ञ शुद्धोदनस्य पुत्र सञ्जात । अय कुमार सम्बुद्धभावमाप्स्यतीति त्रयस्त्रिंशद्देवलोके सुरनिकरा प्रहृष्टमनसो

दिव्यशाटकानि शीर्षोपरि भ्रमयन्तः चिक्रीडुः । तस्मिन्नेवाऽहनि राज्ञः शुद्धोदनस्य कुलोपगः अष्टसमापत्तिलाभी * कालदेवलो नाम तपस्वी कृतभोजनकृत्यो दिवा विहारार्थं त्रयस्त्रिंशद्देवलोकं गत्वा व्यहरत् । ददर्श च स तत्र क्रीडंस्ता देवताः । पप्रच्छ च स ता देवताः यूयं कस्मादेवं हृष्टमनसः क्रीडतेति । मह्यमप्येतत् कथयतेति । ता देवता एवमूचुः । मारिष! राज्ञः शुद्धोदनस्य पुत्रो जातः । स बोधिद्रुममूले निषद्य सम्बुद्धो भूत्वा धर्म्मचक्रं प्रवर्तयिष्यते । वयमस्यानन्तां बुद्धश्रियं द्रष्टुं धर्म्मञ्च श्रोतुं लप्स्यामह इति । वयमिदानीमनेनैव कारणेन तुष्यामः क्रीडामः । स च तापसस्तेषां वचः श्रुत्वा सत्वरमेव देवलोकादवरुह्य राज्ञः शुद्धोदनस्य सुरभवनसंकाशं मन्दिरं प्रविवेश । न्यपीदच्चाऽहृते महार्घासने । पप्रच्छ चैवं राजानं शुद्धोदनम् । जातः किल महाराज! तव पुत्रवर इति । एवं तपस्विन्! इति । महान्नृप! अहमिच्छामि द्रष्टुं तं पुत्रवरमित्याहस्म।

अथ राजा पुत्रवरं सर्व्वालङ्कारैर्विभूषितमकारयत् । अभ्याहरच्च तापसं वन्दयितुम् । ततश्च तस्यबोधिसत्त्वस्य द्वावङ्घ्री परिवर्त्त्य तापसस्य जटासु प्रतिष्ठापयामासतुः । कथमेवंभूतम् तस्मिन् ह्यात्मभावे बोधिसत्त्वेन वन्दितव्यः कोऽन्योऽस्ति । नास्त्येव । यदि हि स राजा अजानन्नेव बोधितत्त्वस्य शीर्षं तापसस्य पादान्तिके प्रास्थापयिष्यत् । सप्तधाऽप्यस्य वराङ्गं चाफलिष्यत् । अथ तापसो न ममात्मा नष्टुमर्हतीति सहसा आसनादुत्थाय बोधिसत्वस्य पुरः कृताञ्जलिस्तस्थौ । राजाऽपि शुद्धोदनस्तच्चाश्चर्य्यं दृष्ट्वा स्वं पुत्रवरमभ्यवन्दत । तापसो दीर्घदर्शी बोधिसत्त्वस्य लक्षणसम्पत्तिं समभीक्ष्य

* एष हि उत्तरदेशीयानां बौद्धानां पुस्तकेषु असित इति नाम्ना प्रतीयते ।

स्तपाद । ७ उत्सुङ्गपाद । ८ ऐणेयजङ्घ । ९ स्थितनोनमनतो जानुनी परिमार्जक परिमर्शक । १० कोशावहितवस्तिगुह्य । ११ स्वर्ण वर्ण काञ्चनसन्निभत्वच । १२ सूक्ष्मच्छवि । १३ विरलरोमा । १४ ऊर्ध्वाग्ररोमा । १५ ब्रह्मर्जुगात्र । १६ सप्तोत्सद । १७ सिंहपूर्वकाय । १८ चितान्तरास १८ न्यग्रोधपरिमण्डल । २० समवृत्तस्कन्ध । २१ रसग्रासाग्र । २२ सिंहहनु । २३ चत्वारिंशद्दन्त । २४ समदन्त । २५ अविरलदन्त । २६ सुशुक्ल दंष्ट्र । २७ प्रभूतजिह्व । २८ ब्रह्मस्वर कोकिलरव । २९ अभिनीलनेत्र । ३० गोपक्ष्मा । ३१ ऊर्णारोमा । ३२ उष्णीषशीर्ष ।

इति द्वात्रिंशन्महापुरुषलक्षणानि ॥

१ चिताङ्गुलिता । २ अनुपूर्व्वाङ्गुलिता । ३ वृत्ताङ्गुलिता । ४ ताम्रनखता । ५ तुङ्गनखता । ६ स्निग्धनखता । ७ निगूढगुल्फता । ८ समपादता । ९ हस्तिसमानाक्रमता । १० सिंहसमानाक्रमता । ११ हससमानाक्रमता । १२ वृषभसमानाक्रमता । १३ दक्षिणावृत्त गतिता । १४ समन्ताचारुजानुमण्डलता । १५ परिपूर्णपुरुषव्यञ्जनता । १६ अच्छिद्रनाभिता । १७ गम्भीरनाभिता । १८ दक्षिणावृत्त नाभिता । १९ द्विरदकरसदृशोरुभुजता । २० सुविभक्तगात्रता । २१ अनुपूर्व्वगात्रता । २२ मर्ष ( मृष्ट ) गात्रता । २३ अनुत्सन्नानुत्सन्नसर्व्वगात्रता । २४ अलीनगात्रता । २५ तिलकादिरहित गात्रता । २६ अनुपूर्व्वरुचिरगात्रता । २७ विशुद्धगात्रता । २८ कोटिशतहस्तिबलधारकता । २९ तुङ्गनासता । ३० सुरक्तद्विज मासता । ३१ शुद्धदन्तता । ३२ स्निग्धदन्तता । ३३ विशुद्धेन्द्रियता । ३४ वृत्तदंष्ट्रता । ३५ रक्तौष्ठता । ३६ आयतमुखता ।

३७ गम्भीरपाणिरेखता । ३८ आयतरेखता । ३९ ऋजुरेखता । ४० सुचिरसंस्थानरेखता । ४१ परिमण्डलकायप्रभावता । ४२ परिपूर्णकपोलता । ४३ आयतविशालनेत्रता । ४४ पद्मप्रसादवनेत्रता । ४५ आकुञ्चिताग्रपक्ष्मता । ४६ मृदुतनुरक्तजिह्वता । ४७ आयतरुचिरकर्णता । ४८ निर्ग्रन्थशीर्षता । ४९ निगूढशीर्षता । ५० छत्रनिभचारुशीर्षता । ५१ आयतपृथुललाटशोभता । ५२ सुसंस्थानभ्रूकता । ५३ सश्लक्ष्णभ्रूकता । ५४ अनुलोमभ्रूकता ५५ महद्भ्रूकता ५६ आयतभ्रूकता । ५७ सूक्ष्मगात्रता । ५८ अतीव सौम्यगात्रता । ५९ अतीवोज्ज्वलितगात्रता । ६० विमलगात्रता । ६१ कोमलगात्रता । ६२ स्निग्धगात्रता । ६३ सुगन्धतनुता । ६४ समलोमता । ६५ कोमलरोमता । ६६ दक्षिणवृत्तलोमता । ६७ भिन्नाञ्जनसदृशनीलरोमता । ६८ स्निग्धरोमता । ६९ अतिसूक्ष्मश्वासप्रश्वासधारणता । ७० सुगन्धमुखता । ७१ सुगन्धमूर्धता । ७२ सुनीलकेशता । ७३ दक्षिणावृत्तकेशता । ७४ सुसंस्थानकेशता । ७५ स्निग्धकेशता । ७६ सश्लक्ष्णकेशता । ७७ अलुलितकेशता । ७८ समकेशता । ७९ कोमलकेशता । ८० केतुमालारलिरञ्जितता ।

इत्यशीत्यनुव्यञ्जनलक्षणानि ॥

स च कौण्डिण्यो द्विजवरः एतानि द्वात्रिंशद्वरमहापुरुषलक्षणानि अशीत्यनुव्यञ्जनानि च विलोक्य एतादृशस्य महोदयस्यमहासत्त्वस्य गृहमध्ये वासो नाम कथमपि नास्ति । निःसंशयमेष सम्बुद्धो भविष्यतीति एकामेव गतिद्याद्यार्थात् । ततश्चैष कौण्डिण्यो द्विजवरः एकमङ्गुलिमुत्क्षिप्य एकांगत्याहरणमुददिशत् । सोऽयं कौण्डिण्यो मानवः कृताधिकारो बुद्धिशाली महाप्राज्ञश्च । तस्मादितरान् सप्तज-

नानभिभूय एतादृशेन सम्बुद्धभावमाप्स्यतीति व्याहरच्च । अथ राजा पप्रच्छ किं दृष्ट्वा मत्सुत प्रव्रजिष्यतीति । जराजीर्णं रोगावतीर्णं मरणावतीर्णं प्रव्रजितश्चेति चत्वारि पूर्वनिमित्तानि दृष्ट्वेति आहस्म । अत प्रभृति तादृशा जराजीर्णादीना मत्पुत्रस्य सकाशमागन्तुमवसर न दत्तेति चतसृषु दिक्षु चतुःक्रोशमात्रे स्थाने आरक्षा व्यधापयत् । तस्मिंस्तु मङ्गल्यहर्म्ये सन्निपतितानामशीतिकुलसहस्राणा ज्ञातीना मेकैकश्च एकैक पुत्र दास्यतीति प्रतिजज्ञे । अय कुमारो बुद्धो वा भवतु राजा सार्व्वभौमो वा । वयमेकैक पुत्र दास्याम । स यदि बुद्धो भविष्यति क्षत्रियश्रमणैरेव पुरस्कृत परिवृतश्च विचरिष्यति । यदि राजा भविष्यति चक्रवर्ती । क्षत्रियकुमारैरेव पुरस्कृत परिवृतश्च विचरिष्यतीति । अथ राजा शुद्धोदनो वोधिसत्त्वस्य उत्तमरूपसमन्वागता विगतसर्व्वक्षीरदोषा धात्री प्रत्युपास्थापयच्च ।

इति श्रीशीलस्कन्धस्थविरस्य कृतौ सद्धर्म्ममकरन्दे वोधिसत्त्वस्य महापुरुषलक्षणप्रतिग्रहणपरिदीपनो नाम ।

सप्तमोऽध्यायः ॥

---



# अथाष्टमोऽध्यायः ।

अथ बोधिसत्त्वो महता परिवारेण श्रीसौभाग्येन च वर्द्धतेस्म । एकदा तस्य राज्ञः शुद्धोदनस्य वापमङ्गलमभूत् । तदहनि सकल-नगरं देवनगरमिव अलंचक्रे । तदा सर्व्वे दासकर्म्मकारकादयोऽपि श्वेतवस्त्रनिवसना गन्धमालादिप्रतिमण्डिता राजाङ्गणे सन्निपतन्तिस्म । राज्ञा वापमङ्गले लाङ्गलसहस्रमेव युज्यते । तदहनि एकोनानि अष्ट-शतलाङ्गलानि सार्द्धं बलिवर्दरश्मियोत्तैः रजतपरिष्कृतानि बभूवुः राज्ञः शुद्धोदनस्य अवलम्बलाङ्गलं रक्तस्वर्णपरिष्कृतञ्चाभूत् । बलि-वर्दानां शृङ्गरश्मिमतोदा अपि स्वर्णपरिष्कृता एव ।

अथ राजा शुद्धोदनो महता परिवारेण निष्क्रामन् स्वं पुत्रवरं गृहीत्वैव अगमत् । तस्मिन् स्थाने बहुलपलाशः सान्द्रच्छाय एको जम्बुद्रुमोऽभूत् । तस्याऽधः कुमारस्य वरशयनमकारयत् । उपरि कनकतारकासमलङ्कृतमुलोचकमपि अबन्धयत् । समन्ताज्जवनि-काभिः पर्य्यक्षेपयत् । राजा शुद्धोदनः सर्व्वालङ्कारविभूषितः सन् अ-मात्यगणपरिवृतो हलकर्षणस्थानमगमत् । तत्र राजा शुद्धोदनः स्व-र्णलाङ्गलमग्रहीत् । अमात्या एकोनानि अष्टशतसीराणि जगृहुः । कर्षकाः शेषलाङ्गलानि च । ते तानि गृहीत्वा इतश्चेतः कर्षन्तिस्म । राजा एकवारमवारात् पारं गच्छति पाराच्चावारं गच्छति । एतस्मिन् स्थाने महतीच सम्पत्तिरभूत् । बोधिसत्त्वं परिवृत्य निषण्णाः संविधानगोपनरक्ष-णकारिण्यः उपमातरश्च द्रक्ष्यामो वयं राज्ञः सम्पत्तिमिति अन्तर्जवनि-काया बहिर्निश्चक्रमुः । अथ स तु बोधिसत्त्व इतश्चेतश्चावलोकयन् किञ्चिन्न दृष्ट्वा जवेनोत्थाय पर्य्यङ्कमाभुज्य आणापाणौ परिगृह्य प्रथमं ध्यानं निर्वर्त्तयामास । ता अपि धात्र्यस्तत्र तत्र विचरन्त्यस्तोकं प्रमादं स

क्षेपयामास । राजा शुद्धोदन सपदि सार्द्धं शेषज्ञातिभिस्तुतोष । अथैकदा महासत्त्व उद्यानभूमिदर्शनार्थं गन्तुकाम एव सारथिमामन्त्र्य रथं योजयेति व्यजिज्ञपत् । स च सारथिर्देव! साधु इति तद्वचन माकर्ण्य महार्घं रथवरं सर्वैरलङ्कारविशेषैरलञ्चकार । अयूयुजच्चतुर कुमुदपत्रसदृशान् मङ्गल्यसैन्धवाश्च । स सूत पुनर्बोधिसत्त्वाय न्य वेदयत् । सज्जीकृतो देव! रथ इति । अथ बोधिसत्त्वो देवभवन सकाशं रथवरमभिरुह्य उद्यानाभिमुख एव सम्प्रययौ । देवा किल अस्य सिद्धार्थकुमारस्य अभिसम्बोधनकाल आसन्न दर्शयिष्याम स्तस्य इदानीं पूर्वनिमित्तमिति चिन्तयामासु । ततश्चैके देवा एक देवपुत्रं जराजीर्णं खण्डदन्त पलितकेशं अवभग्नशरीरं दण्डहस्त प्रकम्पमान कृत्वा दर्शयामासु । तन्निमित्त बोधिसत्त्वश्चैव सारथिश्च ददर्श । ततश्चानन्तर बोधिसत्त्वोऽपि सारथिमपृच्छत् सुहृद् एष को नाम पुरुषो भवतीति । एष देव जराजीर्ण पुरुष इति सत्यमाषत । स महासत्त्वस्तद्वचन समाकर्ण्य धिग्धिग् जातिम् । यत्र हि जातस्यैव जरा दृश्यते इति उद्विग्नमनास्तत एवप्रतिनिवृत्य प्रासादमेवारुरोह ।

अथ राजा कस्मान्मत्पुत क्षिप्रं प्रतिनिवृत्त इति अपृच्छत् । देव जराजीर्णं पुरुष दृष्ट्वेति सारथि सत्यमाषत । राजा मम पुत्रो जराजीर्णं पुरुषं समीक्ष्यैव प्रव्रजिष्यतीति लक्षणप्रकाशकाना वचन स्मृत्वा सहसा नृत्यगीतादीनि सज्जयत एष सम्पत्तिमनुभवन् प्रव्रज्याया रतिं मा कार्षीदिति आहस्म । सर्वासु दिक्षु अर्द्धयोजनेऽर्धयोजने च स्थाने आरक्षा कारयामास ।

ततश्चैकदा महासत्त्वस्तथैव उद्यानं गच्छन् देवताभिनिर्मितम् अन्यैरुत्थाप्यमानम् अन्यै ससेव्यमानमन्यै स्राप्यमान स्वेच्छया गन्तुं

वा स्थातुं वा भाषितुं वा अशक्नुवन्तं दृढतराबाधं रोगिणं पुरुषं समैक्षत । स च तद्दृष्ट्वा एष को नाम पुरुष इति सारथिं पप्रच्छ । देव! एष रोगी पुरुष इति सारथिश्चाब्रवीत् । धिग्धिग् जातम् । सत्यामेव जातौ व्याधिरपि जायत इति समुद्विग्नमनाः निवृत्य मनोरमं प्रासादतलमेवारुरोह ।

तदपि विज्ञाय राजा पुत्रस्य अनभिरतिनिवारणार्थं नटस्त्रीभिः सङ्गीतादीनि प्रयोजयन् समन्ताद्गव्यूतित्रयप्रमाणे स्थाने आरक्षां संव्यधापयच्च । पुनरपि एकदा महासत्त्वस्तथैव उद्यानं गच्छन् देवताभिनिर्म्मितं मृतकलेवरमद्राक्षीत् । समीक्ष्य च एष को नाम इति? सारथिं पप्रच्छ एष देव! मृतसत्त्व इति सारथिरब्रवीत् । महासत्त्वो धिग्धिग् जातिम् । सत्यामेव जातौ मरणं भविष्यतीति समुद्विग्नहृदयो निवृत्य प्रासादतलमेव आससाद । पुनरपि राजा तत् ज्ञात्वा नटस्त्रीभिः सङ्गीतिदर्शनादिभिर्व्यापारविशेषैर्महासत्त्वस्य अनभिरतिं व्यपहर्तुं सत्वरमायतत । समन्ताद्योजने योजने स्थाने आरक्षां च संविदधौ ।

अथैकदा महासत्त्वस्तथैव उद्यानदर्शनार्थं गन्तुकामः सारथिमामन्त्र्य एवमाहस्म । सूत! अहमद्य उद्यानं गन्तुकामोऽस्मि । त्वं सत्वरं रथं योजय । स च सारथिस्तच्छ्रुत्वा देव साध्विति प्रत्यभाषत । स सारथिः सहसा रथवरं संयोज्य योजितो देव! मया रथः क्षिप्रं देवोऽभिरुहोतु इति अभाषत । अथ महासत्त्वो रथवरमारुह्य गच्छन् पूर्व्ववद्देवताभिर्निर्म्मितं सुवसनं स्वपावृतशान्तेन्द्रियमेकं प्रव्रजितमद्राक्षीत् । महासत्त्वस्तदवलोक्य सुहृद्! एष को नाम इति सारथिं पप्रच्छ । किन्तु बुद्धोत्पादस्य अभावात् सारथिरपि प्रव्रजितं

दभून्मनसि । रागाग्नौ निर्वृते निर्वृत नाम भवति । द्वेषाग्नौ निर्वृते निर्वृत नाम भवति मोहाग्नौ निर्वृते निर्वृत नाम भवति । मानदृष्ट्यादिषु सर्व्वक्लेशेषु निर्वृतेषु निर्वृत नाम भवति । इय हि मह्य सुश्रवणमश्राव यत् । अह खलु निर्वाण गवेषयश्चरामि । अद्यैव मया गृहवास त्यक्त्वा महाभिनिष्क्रमण कृत्वा प्रव्रज्य निर्वाण गवेषयितुमर्हम् । अय मस्या आचार्य्यभागो भवत्विति कण्ठान्मुक्त्वा शतसहस्रार्घ मुक्ताहार कृशागौतम्यै प्रेषयामास । सा कृशागौतमी एवमचिन्तयत् । सिद्धार्थकुमारो मयि प्रतिबद्धचित्तो भूत्वा पूर्णपात्र प्रैषयदिति हृष्टचित्ता भूत् । महासत्त्वोपि महता श्रीसौभाग्येन स्व प्रासादतलमभिरुह्य श्रीशयने न्यपद्यत । तत्क्षण एव सर्व्वालङ्कारप्रतिमण्डिता नृत्यगीत्यादिषु कृतहस्ता दिव्याप्सरस इव सौन्दर्यातिशयशालिन्यस्ता स्त्रियो नानाविधानि तूर्य्याणि गृहीत्वा सम्परिवृत्य अभिरमयन्त्यो नृत्यगीत वाद्यादीनि प्रयोजयामासु तासा नाम स्त्रीणा पदे पदे वलयादीना शब्देनावलमे मेखलाशब्देन जङ्घातले निवेशितवीणाशब्देन च सकलप्रासाद एकनिनादोऽभूत् ।

तासा विंशतिसहस्राणा राजकन्यानामेका स्नात्वा नर्त्तितु गातु चात्मानमलङ्कुर्व्वन्ति । एका अन्नपान सम्पादयन्ते । एका भोजन परिभोजयन्ति । एका शयनासनानि स्थापयन्ति । एका वालव्यजन हस्तास्तिष्ठन्ति । एका माणिक्यतालवृन्तहस्ता वाहिरङ्गे परिवृत्य तिष्ठन्ति । एका माणिक्यमयानादर्शान् गृहीत्वा चूर्णकर्दमसम्पूर्णपातिपुष्पकलापादीन् गृहीत्वा तिष्ठन्ति । तासा मध्ये रङ्गमण्डलमभूत् । तास्तु परिपाट्या तिष्ठन्त्यस्तासा नर्त्तनकाले या महता तामुत्क्षिप्य पालयन्ति । तासा स्वर्णलतासदृशानामाभरणाना चलनकाले सकलप्रासादतल विद्युल्लतासहस्राणा निर्गमकाल इव तासा

स्वर्णबुद्बुदसमानपयोधराणां स्पन्दनकाले स्वर्णहंसशतसहस्राणामुत्पतन-काल इव तासां पादानां स्वर्णभूमौ घर्षणकाले स्वर्णहंसशतसहस्राणां क्रीडनकाल इव चाभूत् ।

इत्थं ताः स्त्रियः स्वेषु स्वेषु फुल्लपद्मसदृशेषु मुखेषु भ्रमभ्रमरश्रेणि-संकाशैरनङ्गरङ्गसङ्गैर्नेत्रैरवलोक्य स्वासु स्वासु हृदयमञ्जूषासु बोधिसत्त्ववररत्नं स्थापयन्ति । तदा महासत्त्वः क्लेशेभ्यो विरक्तचित्ततया नृत्यगीतादिषु नाभिरतो मुहुर्निद्रामुपागमत् । ताश्चापि स्त्रियो यस्यार्थे वयं नृत्यगीतादीनि प्रयुञ्ज्महे । स इदानीं निद्रामुपगतः । किमर्थं वयं क्लाम्याम इति उक्त्वा गृहीतगृहीतानि तूर्याणि चापहाय सस्वरं निपेदिरे । तदा तस्मिन् स्थाने स्वर्णरजतादिकृता नानाविधाः प्रदीपाः सुगन्धतैलेन ज्वलिता वर्त्तन्तेस्म । तत्र देवताः स्वानुभावा-दनेकानि विप्रकृतानि दर्शयामासुः ।

अथ बोधिसत्त्वो निद्रायाः प्रबुध्य शयनपृष्ठे पर्य्यङ्के निषण्णः अद्राक्षीत् ताः स्त्रियस्तूर्य्यभाण्डानि अपहाय निद्रामनुभवन्तीः । तद्यथा । काश्चित् स्त्रियः खेलाः प्रगूरयन्ते । काश्चित् स्त्रियः लाला-क्लिन्नगात्रा भवन्ति । काश्चित् स्त्रियः कृच्छ्रयन्ति । काश्चित् स्त्रियो विप्रलपन्ति । काश्चित् स्त्रियः अपगतवस्त्राः शेरते । काश्चित् स्त्रियोऽश्लीलं शब्दायमानाः शेरते । स महासत्त्वस्तासां तं विप्रकारं दृष्ट्वा उद्विग्नतामापन्नः । संसारादीनवबहुलश्च उपद्रुतो बताहमभूवम् । औपसर्गो बताहमभूवम् । वितथो बतायं संसारवासः । अहो वञ्चिता इमाः प्रजाः । विफलाशो बतायं लोकः । यतो हि एवंरूपे खलु संसारे प्रजा न निर्विद्यन्ते । न विरज्यन्ते । इमाः प्रजाः लयकरीं तृष्णां न विजहतीति इत्थमुद्देशवचनं प्रावर्त्तयत् । भूयसा कामेषु विरक्तचित्तोऽभूच्च ।

अथ तस्य महासत्त्वस्य मन्दवातेरितसुगन्धमालादाममुक्ताल-म्बकादिभि समलङ्कृतं मणिरजतादितारागणविचित्रवितानयन्धं कन-करजतादिनानाविधरागवस्त्रजवनिकापरिष्कृतं तेपु स्थानेपु संस्था-पितचतुर्जोतिकगन्धप्रदीपधूपपरिमाण्डविप्रकीर्णम् लाजपञ्चममहार्घ-कुसुमालङ्कृतभूमिभागम् उभयतोविहितध्वजपुष्पदीर्घपुष्पादिमहार्घ-विचित्रास्तरणादिदिव्यशयनप्रतिममहार्घशयनमलङ्कृतप्रातियत्तं पुरु-हूतभवनसन्निभं सुविशुद्धमपि प्रासादतलं विप्रकीर्णे नानाकलेवरपरि-तमामकश्मशानमिव त्रीन् भवान् आदीप्तगृहसदृशांश्च उपास्थापयत् । तस्मात् तस्य चित्तमतीव प्रव्रज्यायै उदनमत् ।

अथ महासत्त्वः अद्यैव महाभिनिष्क्रमणं कर्तुमर्हमिति विचिन्त्य शयनादुत्थाय द्वारसमीपं गत्वा तत्र स्थित एव कोऽत्र इति पप्रच्छ । ततो द्वारि शीर्षं विधाय निपन्नो छन्नो नाम अमात्यः अहमार्य्य! छन्नो नाम इति आहस्म । अथ महासत्त्वः छन्न! अहमद्य महाभि-निष्क्रमणं निष्क्रमितुकामोऽस्मि । एकमेव वाजियानं सज्जयेति अब्रवीत् । स छन्नोऽमात्यो देव साध्विति अश्वभाण्डानि गृहीत्वा अश्व-शालामगमत् । स गत्वा सुगन्धतैलप्रदीपेपु ज्वलत्सु सुरभिपुष्पविता-नस्याधः रमणीये भूमिप्रदेशे स्थितं ग्रीवायाः प्रभृति आयामे अष्टादशहस्तं तदनुरूपोत्सेधसमन्वागत राज्ञः सार्व्वभौमस्य परिभोग-सदृशं सुधौतशङ्खप्रतिरूपकं काकशीर्ष मुञ्जकेशिन स्थेमजवसम्पन्नं कन्थकं नाम तुरङ्गवरमद्राक्षीत् । तमवलोक्य अद्य मया अयमेव सज्जयितुमर्हं इति मत्वा तमेव कन्थक अश्वराज सज्जयामास । स कन्थकोऽपि सज्ज्यमान एवमज्ञासीत् । इयं सज्जना अतीव दृढा । दिनान्तर उद्यानक्रीडादिगमनकाल इव नाऽभूत् । किन्तु ममार्य्य. अद्य महाभिनिष्क्रमणं निष्क्रमितुकामो भविष्यतीति ।

स तेनैव कारणेन हृष्टमनाः अट्टहासञ्चकार । स शब्दोपि सकले नगरे स्फुटीभविष्यतीति देवतास्तं शब्दं रुरुधुः ।

अथ महासत्त्वो महामन्त्रिणं छन्नं प्रेष्यैव तावत्पुत्रं द्रष्टुकामो अधिष्ठितपर्य्यङ्कादुत्थाय राहुलमातुर्वासस्थानं गत्वा गर्भद्वारं व्यपावारीत् । तदा अन्तर्गर्भे सुगन्धतैलप्रदीपोपि ज्वलितो राहुलमाताऽपि सुरभिमल्लिकादिपुष्पनिकरैः समाकीर्णे श्रीशयने पुत्रस्य शीर्षोपरि हस्तं स्थापयित्वा निद्रातिस्म । महासत्त्वो द्वारि स्थित एव एवमचिन्तयत् । यद्यहं देव्याः हस्तमपनीय पुत्रं ग्रहीष्यामि देवी प्रबुध्यति । एवं सति मम गमनान्तरायोपि भविष्यतीति । सम्बोधिं प्राप्यैव पुत्रं द्रक्ष्यामीति विचिन्त्य द्वारि स्थित एव पुत्रमवलोक्य पुत्रस्नेहस्य दृढभावं ज्ञात्वा अनेकधा काममवेषु आदीनवं नैष्कर्म्ये आनृशंस्यञ्च संलक्षयन् प्रतीहारभूमिमुपस्थितः पादमुद्धृत्य सहसा प्रासादतलादवरुरोह ।

अथ महासत्त्वस्तुरङ्गवरसमीपं गत्वा दक्षिणहस्तेन कन्थकं वाजिनं परामृश्य एतदब्रवीत् । तात ! कन्थक ! त्वमद्य एकरात्रं मां तारय । अहं सम्बोधिं प्राप्य सदेवान् लोकांस्तारयिष्यामीति । एवञ्चोक्ते कन्थको हयपतिर्हृष्टचित्तोपि सौमनस्यं प्राप्तः सपदि महाहेषामपि चकार । समन्ताद्योजने तस्याः शब्दः प्रसरतिस्म । देवास्तं शब्दं निवारयामासुः । माभून्महासत्त्वस्य गृहान्निष्क्रमणेऽपि प्रव्रज्यायामपि कश्चिदन्तराय इति हयवरस्य पादनिक्षेपप्रदेशेषु चतुर्भिर्लोकपालैः देवैः प्रहसितमुखकमलैर्विकसितकरपल्लवेषु सम्प्रतिष्ठापितेषु हयवरचरणनिर्घोषः केषामपि न श्रुतिमाप । सदामहासत्त्वः स्वर्णकिङ्किणिकोपशोभितकण्ठं कण्ठादधः अष्टादशहस्तं श्वेतशङ्खसदृशप्रभासमुज्वलं जवसम्पन्नं कन्थकमश्वराजमभिरुह्य छन्नेन वालधिं ग्राहयित्वा यत्र महाद्वारं तत्रोपसमक्रमीत् ।

राजा शुद्धादनस्तन्महाद्वारं बलवद्भिः पुरुषसहस्रैर्विना विवरीतुं यथा न शक्येत तथैवाकारयत्। कस्माच्च। राजा शुद्धोदनः पूर्व्वेषां लक्षणपाठकानां ब्राह्मणानां वचनं श्रुत्वा भीतो बोधिसत्त्वस्य अभिनिष्क्रमणनिषेधार्थमिति। तस्मादेकैकं द्वारकवाटं पुरुषसहस्रैर्विना विवरीतुं न शक्यते। राजा द्वारपरिरक्षणार्थं बहून् पुरुषांस्तत्रास्थापयत्। महासत्त्वः अर्द्धरात्रकाल एव महाद्वारसमीपं प्राप्तः। तदा महासत्त्वोपि एवमचिन्तयत्। यदि द्वारं न विव्रियते। अहं कन्थकस्य पृष्ठे निषण्ण कन्थकमूरुभ्यां निष्पीड्य गृहीतवालधिना छन्नेन सहोत्क्षिप्य अष्टादशहस्तोच्छ्रितं प्राकारमुल्लङ्घ्य गमिष्यामीति। कथम्। महासत्त्वो हि स्थेमबलसम्पन्नः। हस्तिनां गणनया * च कोटिशतानां हस्तिना बलं दधाति। पुरुषाणां गणनया कोटिसहस्राणाञ्च। छन्नोप्यऽचिन्तयत्। यदि द्वारं स्वयं न विव्रियते। अहमार्य्यपुत्रं स्कन्धेकृत्वा कन्थकं दक्षिणहस्तेन परिक्षिपन्नुपकच्छान्तरे कृत्वा उत्पत्य प्राकारमतिक्रमिष्यामीति। कन्थकोप्यऽचिन्तयत्। अहं द्वारि न विव्रियमाणे उत्पत्य यथानिषण्णमेव आर्य्यं गृहीतवालधिना छन्नेन सम प्राकारस्य पुरतः प्रतिष्ठापयिष्यामीति। इत्थं विचिन्त्य महासत्त्वप्रमुखास्त्रयो जनाः प्रतीहारमुपगताः। तदा द्वाररक्षका देवास्तेषामभिप्रायं विज्ञाय एवं चिन्तयामासुः। यदि द्वारं न विवृणुमः। सर्व्वे देवा अस्मासु प्रकुप्य निग्रहमपि कुर्व्वन्ति। तस्माद्वयमेव द्वारं विवृणुम, इति तेषु द्वारि स्थितेष्वेव तत्राधिष्ठिता देवा द्वारं विवव्रुः।

महासत्त्वो नगराच्चिरकामत् सार्द्धं छन्नकन्थकाभ्याम्। तदा आत्मनो हस्तप्राप्तञ्चक्रवर्त्तिराज्यमपि खेलपिण्डवदनपेक्ष्याजहात्। परमाभिसम्बोधिगमनमेव सुस्थिरं प्रार्थयामास। अथ महासत्त्वो यस्यां

* "कोटिशतसहस्राणां हस्तिनामिति" पुस्तकान्तरे दृश्यते।

वेलायां पुरान्निर्गतः तत्क्षण एव मारः पापीयान् बोधिसत्त्वं निष्क्रामन्तं दृष्ट्वा अहो सिद्धार्थकुमारो मद्विषयान्मोक्तुकामो भविष्यति । तस्मादस्य गमनान्तरायं कुर्यामिति विचिन्त्य हितैषी सुहृदिव अन्तरिक्षे स्थित एवमाहस्म । महावीर! मा निष्क्रमीः अतः सप्तमेऽहनि एकान्तं तव दिव्यं चक्ररत्नं प्रादुर्भविष्यति । भो! मारिष! मानिष्क्रमी : । अतः सप्तमे दिवसे चक्ररत्नं प्रादुर्भविष्यति। द्विसहस्रक्षुद्रद्वीपपरिवृतानां चतुर्णां महाद्वीपानां राज्यं करिष्यसि । मारिष! निवर्त्तस्व इति अभाषत च । . . . . . -

अथ महासत्त्वस्त्वं कोसीति पप्रच्छ । सः अहं वशवर्ती नाम मारोऽस्मीति प्रत्यभाषत । ततो महासत्त्वः अब्रवीत् मार! जानामि मम चक्ररत्नस्य प्रादुर्भावम् । गच्छ त्वम् । मा इह तिष्ठ । नास्मि राज्येनार्थी इति । अहमपि सर्व्वं दशसहस्रं लोकधातुमुन्नाद्य अनन्तरं सम्यक् सम्बोधिं समधिगमिष्यामि । मार! त्वञ्च कामवशे वर्त्तस्व । अहं हि चित्तवशे प्रवृत्तः सकललोकमुद्धृत्य धर्म्मचक्रं प्रवर्त्तयन् सप्तार्य्यरत्नसंविभागं करिष्यामि मम चक्ररत्नेन कोर्थं इति मारं प्रतिनिवर्त्य हयवरमप्राजयत् । स पापीयान् मारः प्रद्विष्टचित्त एतदब्रवीत् । यदतःप्रभृति तव कामवितर्के वा व्यापादवितर्के वा विहिंसावितर्के वा समुत्पद्यमाने कार्य्यमत्र ज्ञास्यामीति । ततःप्रभृति रन्ध्रं गवेषयंश्छायेव निरन्तरमन्वबध्नात् ।

अथ महासत्त्वोपि आषाढपूर्णमास्यामुत्तराषाढनक्षत्रे वर्त्तमाने गगनमध्यगतशीतरश्मिरिव कुङ्कुमक्षीरधाराभरिते चक्रवालगर्भे सुरगणप्रणिहितेषु मणिदण्डदीपसहस्रेषु सामन्तलोकधातौ सत्कारभरितो महता श्रीसौभाग्येन नगरान्निरक्रामत् । पुनर्नगरं विलोकितुकामोपि जातः । तदापि धरणीवधूर्महासत्त्वस्य तमभिप्रायं ज्ञात्वा एवं भाष-

माणा इव अभूत् । महापुरुष! यदि त्व नगर विलोकितुकाम परिवर्त्य मा विलोकया अहन्तु त्वयि अश्व परिवर्त्य प्रेषया मीति । सा कुलालचक्रमिव भ्रान्त्वा पर्यवर्त्तिष्ट । स महा सत्त्वो यथास्थित एव नगराभिमुखो भूत्वा एवमाहस्म । भो! भो! कपिलवस्तुवासिन ! देवा ! मत्प्रतिज्ञा शृणुत । यावदह सर्व्वज्ञता ज्ञानमनधिगत तावत् सराग सद्वेष समोह सक्लेश इद कपिल वस्तुपुर न प्रवेक्ष्यामि । सम्बोधिं प्राप्य विंशतिसहस्रक्षीणाश्रवपरिवृत सकलकपिलवस्तुपुरमभिनवपुरमिव कुर्व्वन्नागमिष्यामीति उक्त्वा नगर व्यलोकयत् । तत पश्चात् तस्मिन् प्रदेशे कन्थकनिवर्त्तन नाम चैत्य चापश्यत् । गन्तव्यमार्गाभिमुखश्च कन्थकमवाजयत् । इत्थ महा सत्त्वो महता सत्कारेण श्रीसौभाग्येन च गत । तदा देवा पुरस्तात् षष्टयुल्कासहस्राणि चाधु । पश्चात् षष्टिसहस्राणि । दक्षिणत षष्टि सहस्राणि च । अपरे देवाश्चकवालमूर्ध्नि अनेकानि उल्कासहस्राणि धारयामासु । अपरे देवाश्च नागसुपर्णादयश्च दिव्यैस्सुगन्धमालचूर्ण धूपैरभ्यर्चयमाणा गच्छन्तिस्म । घनवर्षासु जलधारेव पारिच्छत्र मन्दारकुसुमैर्निरन्तरत्वमभूत् । सर्व्वा सङ्गीतयश्च प्रवर्त्तन्तेस्म । समन्ता दष्टषष्टितूर्य्यशतसहस्राणि निनन्दु । सागरकुक्षौ मेघगर्ज्जितशब्द इव युगन्धरकुक्षौ समुद्रनिर्घोषकाल इव प्रावर्त्तत ।

इत्थ बोधिसत्त्वो महद्भिराश्चर्य्यै समम् एकरात्रेणैव कपिलवस्तु श्रावस्तिर्वैशालिश्चेति त्रीणि महाराज्यानि अतिक्रम्य त्रिंशद्योजनान्ते अनोमाया नाम गङ्गायास्तीर प्रापत् । तस्मिन् क्षणे सस्य कालसाधितसम्भारनिमित्तोपगतभूतो हर्षिताकारेण भूतसम्प्रवर्त्तितशी ततरकिरणो निशापति राज्यनिराकृतैकापहानप्रवज्यावेशातिशयमनो हर कनकगर्भकान्तारातिकान्त महापुरुषरूप द्रष्टुकाम इव पश्चिम

दिशायां स्थितः । सूर्य्योपि अहोलामश्चन्द्रमसोऽस्य । यो वै इदं नक्तमभिनिष्क्रमणं द्रष्टुमलब्ध । अहमपि प्रव्रज्यालीलां द्रक्ष्यामीति कृतसन्निधान इव युगन्धरादिमूर्ध्नि समुपस्थितः । अनेन दत्तनयेन पराजिताः सङ्कुचितकिरणाः व्रीडया प्रत्यूषे प्रावरणप्रावृता इव तारागणाः स्थिताः । गगनेशस्य वियोगाद्विषादं दर्शयन्त इव सुरासुरगरुडाः पलायिताः । बोधिसत्त्वो नदीतीरे स्थित्वा छन्नं पप्रच्छ । सुहृत्! का नामेयं गङ्गा इति । श्रुतमेतद्विषयपर्य्यन्ते अनोमा नाम गङ्गा इति । सुहृत्! सुन्दरं निमित्तम् । अयं प्रदेशः अनोमः । मम प्रव्रज्याप्यऽत्र अनोमा भविष्यतीति चाब्रवीत् । किं स चाश्वः अतः परं गन्तुं न शक्नोतीति । नो न शक्नोति । स च तुरङ्गम एकचक्रवालगर्भे नाभ्यां स्थितस्य चक्रस्य नेमिवृत्तं मर्द्दयन्निव सहसा धावित्वा पूर्व्वभक्ते प्रातःसमय एव आगत्य आत्मनः सम्पादितं भोजनं परिभोक्तुं समर्थः । तदा देवनागसुपर्णादिभिरन्तरिक्षे स्थित्वा अर्च्चितैस्सुगन्धमालादिभिर्यावद्रूरप्रदेशं सञ्छन्नत्तं मर्द्दयतः अतिपपातकालः । तस्मात्रिंशद्योजनमात्रमेव अगमत् । अथ बोधिसत्त्वः पार्ष्णिभ्यां घर्षयन् अश्वस्य संज्ञामदात् । अथ उत्पत्य तन्निःसङ्गसंसारार्णवतरणनिमित्तं दर्शयन्निव अष्टोपमविस्तृतायाः अनोमायाः नाम गङ्गायाः पारतीरं समभ्यगात् ।

इति श्रीशीलस्कन्धस्थविरस्य कृतौ सद्धर्ममकरन्दे
महाभिनिष्क्रमणपरिदीपनो नाम
अष्टमोऽध्यायः ॥

---

# अथ नवमोऽध्यायः

अथ बोधिसत्त्वस्तुरङ्गमवरस्य पृष्ठादवरुह्य रजतवर्णप्रतिकाशे पुलिनतले स्थित्वा छन्नमेवमाहस्म । सुहृत्! छन्न! त्वं मम आभरणानि च कन्थकं चानिश्चादाय गच्छ । अहं प्रव्रजिष्यामीति उक्त्वा आभरणानि अमुञ्चत् । तानि च वस्त्रकोट्या भण्डीकृत्य तस्मै अदात् । स बोधिसत्त्व प्रव्रजितुकामो भूत्वा मम इमे केशा न श्रमणसदृशा । अन्यो बोधिसत्त्वस्य केशांश्छेत्तु योग्यतरोऽपि नास्ति । तस्मात् स्वयमेव खड्गेन छेत्स्यामीति दक्षिणहस्तेन खड्गं गृहीत्वा वामहस्तेन सह मौलिना चूडाग्रं गृहीत्वा चिच्छेद । केशा द्व्यङ्गुलमात्रा भूत्वा दक्षिणत आवर्तमाना शीर्षे लिल्यिरे । श्मश्रूणि च तदनुरूपाणि अभवन् । केशा यावज्जीवं तत्प्रमाणा एव । पुन केशश्मश्रुणोश्छेदनकार्य्यं नाभूत् । अथ बोधिसत्त्व सह मौलिना चूडां गृहीत्वा आत्मन सम्बोध्यधिगमनमीमांसनार्थमन्तरिक्षेऽक्षिपत् । यद्यहं बुद्धो भविष्यामि आकाशे तिष्ठतु नोचेद्भूमौ पततु इति । चूडामणिवेष्टनं योजनप्रमाणं गत्वा आकाशे तस्थौ । पुन सहस्राक्ष पुरुहूतस्तानुत्तमांश्च भ्रमरवर्णकेशान् योजनप्रमाणेन रत्नमयकरण्डकेन सगौरवं शिरसा प्रत्यग्रहीत् । त्रयस्त्रिंशद्देवलोके चूडामणिनाम्ना चैत्यं कृत्वा तत्र प्रत्यष्ठापयच्च । बोधिसत्त्वोऽपि पुनश्चिन्तयामास । ममैतानि कौशेयवस्त्राणि न श्रमणसदृशानि । केन नु प्रव्रजिष्यामीति ।

तदा भगवत काश्यपस्य काले तत्सहायो घटीकारो नाम महाब्रह्मा ब्रह्मलोके वसति । स तु महात्मा तेन मित्रधर्मेण चोदित अद्य मत्सहायो महाभिनिष्क्रमणं निष्क्रामेत् । तस्य श्रमणपरिष्कारणानि गृहीत्वा गमिष्यामीति विचिन्त्य त्रिचीवराणि पात्रं वासी सूची काय

बन्धनं परिश्रावणमिति एतानि अष्टपरिष्करणानि चादाय आगम्य तस्मै अदात् । बोधिसत्त्वः पूर्व्वाभियोगानुशिक्षितः अर्हध्वजं वसित्वा उत्तमप्रव्रज्यावेशं गृहीत्वा स्वयं निवसितं कौशेयवस्त्रयुग्मं घटीकाराय महाब्रह्मणे प्रददौ । स गृहीत्वा ब्रह्मलोके द्वादशयोजनं शाटकमणि-नाम्ना चैत्यञ्चकार । ततःप्रभृति ते द्वे चैत्ये देवाः ब्रह्माणश्च अर्चयन्ति मानयन्ति नमस्कुर्व्वन्ति च ।

पुनर्बोधिसत्त्वः प्रव्रजितः सन् छन्नमामन्त्र्य एवमाहस्म । छन्न! त्वं मद्वचनेन मातापित्रोः ममारोग्यं मत्प्रव्रजितभावञ्च निवेदय । पुन-श्चैवं मम पित्रे महाराजाय वद देव तव पुत्रो नैवाकृतज्ञतया न क्रोधेन न दरिद्रतया वा प्राव्राजीत् । अथ च जातिजरामरणेषु भयमवलोक्य सकलभुवनत्रयमनाथं दुःखादुद्धर्तुकामः अचिरादेव सर्व्वज्ञताज्ञानं प्राप्य सद्धर्म्मप्रावरणप्रावृतः सन्नागत्य युष्माकमश्रुधाराः परिप्रोञ्छ-यिष्यतीति । छन्नस्तच्छ्रुत्वा महता पर्व्वतेन मर्दित इव बलवता शोकेन समभिहतस्तस्य पादयोर्निपत्य परिदेवित्वा एतदवोचत् । देव अहं भवन्तमेकमेव कानने अपहाय कथं कपिलवस्तुपुरं गच्छेयम् । अहमपि त्वया सार्द्धं प्रव्रजिष्यामि । युष्माकञ्चोपस्थानं करिष्यामि । ततो बोधिसत्त्वश्छन्नं पप्रच्छ । छन्न! त्वं कस्मान्मया सार्द्धं प्रव्रजितुका-मोसि । देव! त्वयि स्नेहेनैव । सहृत्! यदि तव मयि स्नेहोऽस्ति प्रतिनिवर्त्तस्व । स्नेहस्निग्धस्य मत्पितुश्च महाप्रजाया गौतम्याश्च यशोधरायाः जनपदकल्याण्याश्च हृदयमनामन्त्र्यागत्वाद्भिद्येत । तासु मृतासु ज्ञातिभिर्विरहितो राहुलश्च कथं न मरिष्यति तव निवर्त्तनेन परिरक्षितानि तेषां हृदयानि धर्म्मभाजनानि भविष्यन्ति ।

सहृद्! तस्मात्त्वं गच्छ । स चेत्त्वं न गच्छसि । तेषामन्तरा-योपि भविष्यति । तस्मादुत्थाय गच्छ इति । अथ छन्न आर्य्यस्य

# अथ नवमोऽध्याय·

अथ बोधिसत्त्वस्तुरङ्गमवरस्य पृष्ठादवरुह्य रजतवर्णप्रतिकाशे पुलिनतले स्थित्वा छन्नमेवमाहस्म । सुहृत्! छन्न! त्व मम आमरणानि च कन्थक चानिश्चादाय गच्छ । अह प्रव्रजिष्यामीति उक्त्वा आभरणानि अमुञ्चत् । तानि च वस्त्रकोट्या भण्डीकृत्य तस्मै अदात्। स बोधिसत्त्व प्रव्रजितुकामो भूत्वा मम इमे केशा न श्रमणस दृशा । अन्यो बोधिसत्त्वस्य केशाश्छेत्तु योग्यतरोपि नास्ति तस्मात् स्वयमेव खड्गेन छेत्स्यामीति दक्षिणहस्तेन खड्ग वामहस्तेन सह मौलिना चूडाश्च गृहीत्वा चिच्छेद । केशा द्व्यङ्गुलमात्रा भूत्वा दक्षिणत आवर्त्तमाना शीर्षे लिलियिरे । तदनुरूपाणि अभवन् । केशा यावज्जीव तत्प्रमाणा एव । पुन श्मश्रुयोश्छेदनकार्य्य नाभूत् । अथबोधिसत्त्व सहमौलिना गृहीत्वा आत्मन सम्बोध्यधिगमनमीमासनार्थम तरिक्षे यद्यह बुद्धो भविष्यामि आकाशे तिष्ठतु नोचेद्भूमौ पत चूडामणिवेष्टन योजनप्रमाण गत्वा आकाशे तस्थौ । पुन पुरुहूतस्तानुत्तमाश्च अमरवर्णकेशान् योजनप्रमाणेन रत्न सगौरव शिरसा प्रत्यग्रहीत् । त्रयस्त्रिंशद्देवलोके चूडाम कृत्वा तत्र प्रत्यष्ठापयच्च । बोधिसत्त्वोपि पुनश्चि तयाम कौशेयवस्त्राणि न श्रमणसदृशानि । नेन नु प्रव्रजिष्य

तदा भगवत काश्यपस्य काले तत्सहायो घटी ब्रह्मा ब्रह्मलोके वसति । स तु महाब्रह्मा तेन मि अद्य मत्सहायो महाभिनिष्क्रमण निष्क्रामेत् । तस्य गृहीत्वा गमिष्यामीति विचिन्त्य त्रिचीवराणि

गमिष्यति । यदि नागराजो भविष्यति पृथिव्या निमङ्क्ष्यति । यदि मनुष्यो भविष्यति यथालब्धं भिक्षां भोक्ष्यत इति । ते राजपुरुषा देव! साध्विति बोधिसत्त्वमनुययुः ।

अथ महापुरुषोपि शान्तेन्द्रियः शान्तमानसो रूपप्रभाभिर्महाजनमाकर्षयन्निव युगमात्रं प्रेक्षमाणो मिश्रकभक्तं यापनप्रमाणमेव प्रत्यग्रहीत् । सुमेरुमथनेनैव मर्दितमिव समुद्रं महाजनं व्याकुलीकृत्य समभिगम्य पाण्डवपर्व्वतच्छायायां पूर्व्वदिशाभिमुखो निषसाद । अपश्यच्च पात्रगतमाहारम् । पूर्व्वं सुधाभोजनसमाहारं परिभुक्तवतस्तस्य मिश्राहारं दृष्ट्वा महत् प्रातिकूल्यमभूत् । तत्र नवविधां प्रातिकूल्यसंज्ञां मनसि कृत्वा प्रत्यवेक्ष्य निर्विकारं परिभुक्तवान् । पश्चान्मुखं विशोध्य पात्रमपि शोधयामास । अयं खलु आहारः प्रव्रजितदिवसादष्टमेऽहनि बोधिसत्त्वेन परिभुक्तः । राजपुरुषास्तमवलोक्य आगत्य राज्ञे बिम्बिसाराय निवेदयामासुः । राजा बिम्बिसारः तद्दूतवचनं समाकर्ण्य प्रसन्नः । पुनः स मगधाधिपतिः राजा बिम्बिसारो बोधिसत्त्वस्य दर्शनगुणानुश्रवणेनैव सञ्जातकौतूहलहृदयो वेगेन नगरान्निरक्रामत् । अगमच्च पाण्डवपर्व्वताभिमुखो यानेन । स यानादवरुह्य बोधिसत्त्वस्य सकाशं प्राप्य शीतले शिलातले निषसाद । अतीव प्रसन्नश्चाभूत् बोधिसत्त्वस्य ईर्य्यापथेषु ।

ततश्च राजा बिम्बिसारो बोधिसत्त्वमेवमपृच्छत् । भवान् कुतोऽत्रागत इति । महाराज! शाक्यजनपदादिति आहस्म । कस्माच्चगराच्च कपिलवस्तुपुरात् । कस्मिन् वंशे भवतो जन्म इति । शाक्यवंशे कस्य भवान् पुत्र इति । राज्ञः शुद्धोदनस्य पुत्रः । किं नामेति । सिद्धार्थनामेति एवमब्रवीच्च । इत्थं बोधिसत्त्वस्य जनपदनगरकुलपितृनाम्नां व्याकरणे राजा बिम्बिसारस्तुतोष । बोधिसत्त्वस्तु राज्ञो बिम्बिसा-

तस्य रूपदर्शनेन सञ्जातप्रीतिसौमनस्या नगरवासिनो महान्त विस्मय मुपागता । तद्दर्शन एव व्यापृता अभवन् । तेषा मनुष्याणामितर इतरमवोचत् । भो ! किन्तु राहोर्भीत्या निगूढकिरणजाल पूर्णचन्द्रो या मनुष्यलोकमागत इति । तमन्य आहस्म । सुहृत् ! त्व किं कथ यसि कदा पूर्णचन्द्रो मनुष्यलोकमागतो दृष्टपूर्वस्त्वया । नूनमेष पद्मु कामस्वर्गेषु देवो मनुष्यवेश गृहीत्वा अस्माक राजश्च पुरवा सिनाञ्च परमसमृद्धिसम्पन्न विभूतिनिकर समीक्ष्य क्रीडितुकामतया इहागत इति । अपर अवोचत् । अय काम इति । तमन्यो हास्य कृत्वा आहस्म । भो ! त्व किन्तु उन्मत्तोसि । कामो भवानीपते कोपकृशानुना भस्मीकृतशरीरो ननु । तमन्योपि ईषद् विहस्य एवमवो चत् । भो ! त्व किं वक्षि । पुरहूत सहस्रनयन सुरलोकसज्ञया इहागत इति । तमप्यपरो हसन् एवमभाषत । भो ! त्व किं पूर्वा परविरुद्ध वदसि । यदि शक्रो भवेत् क्व च सहस्राण्यक्षीणि । क्व च वज्राङ्कुश । क्व च ऐरावण इति । अद्धा एष महाब्रह्मा । ब्राह्मणाना प्रमाद ज्ञात्वा वेद वदन् वेदान्तादिषु प्रसङ्गार्थमागत इति । तान् सर्व्वानपाकृत्य अपर एवमवदत् । नैवाय पूर्णचन्द्र । न च काम । नापि सहस्राक्षो न च महाब्रह्मा । एष सर्व्वलोकनायक शास्ता इति । एष आश्चर्य्यो मनुष्य इति च । इत्थ कथयन्तु एव नाग रिकेषु राजपुरुषा गत्वा ता प्रवृत्तिं राज्ञे बिम्बिसाराय दिदिशु देव ! अस्मिन् नगरे एको महासत्त्वो भिक्षार्थं चरति स देवो वा गन्धर्वो वा नागराजो वा यक्षो वा को वा न जानीम इति । अथ राजा बिम्बि सारस्तत्समाकर्ण्य प्रासादतले स्थित्वैव महापुरुष दृष्ट्वा आश्चर्य्यस्मि मितचित्तो जात । पुना राजपुरुषान् समाज्ञापयामास । सेवका ! गच्छत यूय मीमासयथ । स यदि अमानुषो भविष्यति अन्तरिक्षेण

गमिष्यति । यदि नागराजो भविष्यति पृथिव्या निमङ्क्ष्यति । यदि मनुष्यो भविष्यति यथालब्धं भिक्षां भोक्ष्यत इति । ते राजपुरुषा देव! साध्विति बोधिसत्त्वमनुययुः ।

अथ महापुरुषोपि शान्तेन्द्रियः शान्तमानसो रूपप्रभाभिर्महाजनमाकर्षयन्निव युगमात्रां प्रेक्षमाणो मिश्रकभक्तं यापनप्रमाणमेव प्रत्यग्रहीत् । सुमेरुमथनेनैव मर्द्दितमिव समुद्रं महाजनं व्याकुलीकृत्य समभिगम्य पाण्डवपर्व्वतच्छायायां पूर्व्वदिशाभिमुखो निषसाद । अपश्यच्च पात्रगतमाहारम् । पूर्व्वं सुधाभोजनसमाहारं परिभुक्तवतस्तस्य मिश्राहारं दृष्ट्वा महत् प्रातिकूल्यमभूत् । तत्र नवविधां प्रातिकूल्यसंज्ञां मनसि कृत्वा प्रत्यवेक्ष्य निर्विकारं परिभुक्तवान् । पश्चान्मुखं विशोध्य पात्रमपि शोधयामास । अयं खलु आहारः प्रव्रजितदिवसादष्टमेऽहनि बोधिसत्त्वेन परिभुक्तः । राजपुरुषास्तमवलोक्य आगत्य राज्ञे बिम्बिसाराय निवेदयामासुः । राजा बिम्बिसारः तद्दूतवचनं समाकर्ण्य प्रसन्नः । पुनः स मगधाधिपतिः राजा बिम्बिसारो बोधिसत्त्वस्य दर्शनगुणानुश्रवणेनैव सञ्जातकौतूहलहृदयो वेगेन नगरान्निरकामत् । अगमच्च पाण्डवपर्व्वताभिमुखो यानेन । स यानादवरुह्य बोधिसत्त्वस्य सकाशं प्राप्य शीतले शिलातले निषसाद । अतीव प्रसन्नश्चाभूत् बोधिसत्त्वस्य ईर्य्यापथेषु ।

ततश्च राजा बिम्बिसारो बोधिसत्त्वमेवमपृच्छत् । भवान् कुतोऽत्रागत इति । महाराज! शाक्यजनपदादिति आहस्म । कस्मान्नगराच्च कपिलवस्तुपुरात् । कस्मिन् वंशे भवतो जन्म इति । शाक्यवंशे कस्य भवान् पुत्र इति । राज्ञः शुद्धोदनस्य पुत्रः । किं नामेति । सिद्धार्थनामेति एवमब्रवीच्च । इत्थं बोधिसत्त्वस्य जनपदनगरकुलपितृनाम्नां व्याकरणे राजा बिम्बिसारस्तुतोष । बोधिसत्त्वस्तु राज्ञो बिम्बिसा-

ज्ञातिकुलसहस्राणि च पश्येयम् । दिव्यभोजनसमं भोजनञ्च परिभुज्य वरशयने शय्या करिष्यामीति । एकदा स बोधिसत्त्व शरीरकृत्यार्थं निपद्य सुशीतलसकलशरीरो मलमूत्रसङ्कुपितो बलवत्या वेदनया पीडितो मलकृत्य कर्तुमशक्नुवन्स्तत्स्थाने मूर्च्छित पपात । अथैकदा देवता मृत इति सज्ञया राज शुद्धोदनस्यान्तिक गत्वा एवमवोचत् । राजन्! तव पुत्रो मृत इति सज्ञया राज शुद्धोदनस्यान्तिक गत्वा एवमवोचत् । राजन्! तव पुत्रो मृत इति । तदा राजा एवमब्रवीत् । देवते! मम पुत्रो बुद्धो भूत्वा एव मरिष्यति । नो अबुद्ध एव । अपगच्छ । मत्पुत्रो बुद्धभावमप्राप्य न मरिष्यतीति तर्जयामास । देवता तत्रैव अन्तर्हिता । अथ बोधिसत्त्व सज्ञा लब्ध्वापि उत्थाय-गत ।

पुन स बोधिसत्त्व एवमचिन्तयत् । यतश्चाहमा*स्फानकं ध्यान ध्यायेयम् । अथ स आश्वास प्रश्वास च सन्यरुणत् । स च वातो नासारन्ध्राभ्या निर्गन्तुमशक्नुवन् उभाभ्या कर्णछिद्राभ्यां निर्गत । अथ महासत्त्वस्तस्यापि निर्गमन न्यवारयत् । वातोपि ततश्चोर्ध्वं गत्वा मस्तकमग्रहीत् । तेन शीर्षे बलवती वेदना सञ्जाता । शीर्षवे-धन्या विद्धकाल इवाभूत् । वातोपि मस्तक भित्त्वा गन्तुमशक्नुव-न्नपि उदर प्रविवेश । सोन्तर्भागगतो विकन्तनेन छिन्नकाल इवाऽभूत् । इत्थ महासत्त्व आस्फानक ध्यान ध्यायन् महद्दुःखमन्वभवत् । तदापि स प्रगृहीतवीर्य्ये समाहितचित्त उपस्थितगतिरपमूढबुद्धिर नातुरकायश्चाऽभूत् । अथान्ये आहु स्म । न तावत् कालङ्कृतवाञ्-श्रमण इति । एव गच्छति च काले मार पापीयानचिन्तयत् ।

---

* निर्विकल्पसमाधिरित्यर्थ । अप्राणक ध्यान वा ।

कियता कालेन बलमग्रहीत् । अथ तस्य महासत्त्वस्य द्वात्रिंशद्वर महापुरुषलक्षणानि प्राकृतिकान्येव । कायोऽपि स्वर्णवर्णश्चाऽभूत् । एवं दुष्करक्रियया षड्वर्षाणि महाप्रधानमवर्धयत् । अथ बोधे मार्ग इति विचिन्त्य औदारिकमाहार भोक्तुकामो ग्रामनिगमादिपु भिक्षार्थमचरत् । अभुङ्क्त च औदारिकमाहारम् । अथ पञ्चवर्गीया भिक्षव अय श्रमणो गौतम षड्वर्षाणि दुष्करक्रिया कुर्वन् सम्बोधिं समधिगन्तु न शशाक । इदानीं ग्रामादिषु भिक्षार्थं विचर्य औदारिकमाहार परिभुङ्क्ते किं शक्ष्यति एष लब्धु सम्बोधिज्ञानम् । एष बाहुलिक । प्रधानविभ्रान्त इति । किमस्माकमनेनेति । महापुरुष परित्यज्य स्वानि स्वानि पात्रचीवराणि समादाय अष्टादशयोजन मार्ग गत्वा ऋषिपतन प्रविविशु ।

इति श्रीशीलस्कन्धस्थविरस्य कृतौ सद्धर्ममकरन्दे
दुष्करक्रियापरिदीपनो नाम

नवमोऽध्यायः ॥



# अथ दशमोऽध्यायः



अथ उरुवेलायां सेनानीनिगमे एकः कौटुम्बिकोऽभूत्। तस्य गृहे जाता सुजाता नाम एका दुहिता च अभूत्। सा वृद्धिं प्राप्ता एकस्मिन् न्यग्रोधवृक्षे प्रार्थनाञ्चाकार्षीत्। यद्यहं समानजातिं विपुलविभवं भर्त्तारमपि लब्ध्वा प्रथमे गर्भे एव पुत्रं लप्स्ये। अनुसंवत्सरं तुभ्यं शतसहस्रार्घं पूजाविधिञ्च प्रस्थापयिष्यामीति। अस्याः सा प्रार्थना समृद्धिमागता। सा हृष्टा वैशाखपौर्णमास्याः पूर्व्वत एव धेनुसहस्रं मधुलष्ठीवने चारचयत्। सा परेद्युः तेषां धेनुसहस्राणां क्षीरं गृहीत्वा पञ्चशतधेनूरपाययत्। एवं क्रमेण तासां क्षीराणि सार्द्धद्विशतधेनूश्च अपाययत्। पुनश्चार्धार्धोऽनं कृत्वा यावत् षोडशानां धेनूनां क्षीराणि अष्टधेनूः पाययित्वा क्षीरस्य मधुरत्वं घनौजस्वित्वं चाकारयत्। सा च तत्क्षीरपरिवर्तनं कारयित्वा वैशाखपौर्णमास्यां प्रातरेव बलिकर्म्म विधास्यामीति चिन्तयामास। सा प्रत्यूषे समुत्थाय धेनुं गृहीत्वा वत्सान् मुमोच। सपदि वत्साः धेनूनां स्तनमूलमगमन्। पुनरूधोभारान् शोधयित्वा तत्र भाजनेषु उपनीतेषु क्षीरधाराः स्वयमेवास्रवन्। सुजाता तदपि आश्चर्य्यं समीक्ष्य प्रसन्ना स्वहस्ताभ्यामेव क्षीरमादाय नूतनभाजने प्रक्षिप्य पाचयितुमारेभे। तस्मिन् पयसि पाच्यमाने महान्ति महान्ति बुद्बुदानि समुत्थाय दक्षिणावृत्तानि भ्रमन्तिस्म। ईषदपि वह्निर्न पेतुः। उद्धनाद्धूमः स्तोकमपि न निर्गतः। तत्क्षणे चत्वारो लोकपालाः समागत्य तत्रारक्षां विदधुः। महाब्रह्मा छत्रमधारयत्। पुरुहूतः अग्निमज्वालयत्। सर्व्वे देवास्तत्र दिव्यौजांसि चिक्षिपुः। सुजाता तस्मिन् दिवसे प्रादुर्भूतानि नाना-

विधानि आश्चर्य्याणि समभीक्ष्य पूर्णां नाम दासीमामन्त्रयत् । अम्भो! पूर्णे! देवता मयि अतीव प्रसन्ना एतावदवधि मया न दृष्टपूर्व्वमीदृशमाश्चर्य्यम् । अम्भो! तस्मात्त्वं वेगेन गत्वा देवस्थानं प्रतिशोधय । सा दासी तद्वचनं समाकर्ण्य आर्य्ये! साध्विति त्वरितं तरुमूलमुपागात् ।

अथ बोधिसत्त्वस्तस्मिन् रात्रिभागे पञ्चमहास्वप्नानि अद्राक्षीत् । कीदृशानि तानि स्वप्नानीति ? । इयं महोर्व्वी महाशयनमभूत् । हिमवान् पर्व्वत उपधानमासीत् । पूर्व्वसमुद्रे वामहस्तो व्यवहितः । पश्चिमसमुद्रे दक्षिणहस्तो व्यवहितः । दक्षिणसमुद्रे उभौ पादौ व्यवहितौ । उत्तरसमुद्रे शीर्षे व्यवहितमिति इदं प्रथमं महास्वप्नमपश्यत् । पुनरपरमद्राक्षीत् । कुशा· नाभेरुद्गत्य पश्यत्येव वितस्तिमात्रं हस्तमात्रं यष्टिमात्रं गव्यूतिमात्रं अर्धयोजनमिति एवमनेकसहस्रयोजनं नभ आहत्य तस्थुः । इदं द्वितीयं महास्वप्नम् । पुनश्चापरम् । श्वेतशीर्षाः क्रिमिश्रेण्यः पादयोरुद्गम्य यावज्जानुमण्डलं प्रतिच्छादयामासुः । इदं तृतीयं महास्वप्नम् । पुनश्चापरम् । नानावर्णाश्चत्वारः पक्षिणः चतसृभ्यो दिशाभ्य आगम्य पादमूले निपत्य सर्व्वे श्वेतवर्णा एवाभवन् । इदं चतुर्थं महास्वप्नम् । पुनश्चापरमद्राक्षीत् । अचङ्क्रम्यत च बोधिसत्त्वो महतो गूथपर्व्वतस्योपरि तद्गूथैरलिप्तगात्रः । इदं पञ्चमं महास्वप्नम् ।

तत्र हि यत्प्रथमं स्वप्नम् । तदपि सम्यक् सम्बोध्यै पूर्व्वनिमित्तम् । यच्च द्वितीयम् । तदपि आर्य्याष्टाङ्गिकस्य मार्गस्य प्रकाशने पूर्व्वनिमित्तम् । तद्यथा । सम्यग्दृष्टिः सम्यक् संकल्पना सम्यग्वाक् सम्यक्कर्मान्तः सम्यगाजीवः सम्यग्व्यायामः सम्यक्-

स्मृतिः सम्यक्समाधिश्चेति इमानि अष्टाङ्गानि । यच्च तृतीयं तदपि बहूनां श्वेतवस्त्रधारिणां समागत्य तच्छरणगमनभावे पूर्व्वनिमित्तम् । यच्च चतुर्थम् । तदपि क्षत्रियादीनां चतुर्णां वर्णानां तथागतेन प्रतिवेदिते धर्म्मविनये अभिविनीय गृहान्यपहाय प्रव्रज्य अनुत्तरविमुक्तिसुखस्य साक्षात्करणे पूर्व्वनिमित्तम् । यच्च पञ्चमं तदपि चीवरपिण्डपातशयनासनग्लानप्रत्ययसङ्ख्यातानां चतुर्णां प्रत्ययानां सुलभत्वात्तेषु अलग्नभावे पूर्व्वनिमित्तम् । अपिच । यच्च चक्रवालमहोर्व्वी शयनमभूत् । तदपि सम्बुद्धभावे पूर्व्वनिमित्तम् । यच्च हिमालयपर्व्वतमुपधानमभूत् । तदपि सर्व्वज्ञताज्ञानप्रतिलाभे पूर्व्वनिमित्तम् । यांश्च चतुरो हस्तपादान् समुद्रस्योपरिगतांश्चक्रवालमूर्ध्नि स्थितानद्राक्षीत् । तदपि धर्म्मचक्रप्रवर्त्तने पूर्व्वनिमित्तम् । यच्चापरम् । स्वमुत्तानं निपन्नमद्राक्षीत् । तदपि त्रिषु भवेषु अवकुब्जनिपन्नसत्त्वानामुत्तानमुखकरणे पूर्व्वनिमित्तम् । यच्चापरम् अक्षीणि उन्मील्य पश्यन्निवात्मानमद्राक्षीत् । तदपि दिव्यचक्षुः प्रतिलाभे पूर्व्वनिमित्तम् । यच्चापरम् । यावद्भवाग्रं सर्व्वेषां लोकानामेकाग्रतामद्राक्षीत् । तदपि अनावरणज्ञानप्रतिलाभे पूर्व्वनिमित्तम् । इत्थं बोधिसत्त्वस्तानि तानि विशेषाधिगमनिमित्तभूतानि पञ्चमहास्वप्नानि विलोकयामास ।

अथ बोधिसत्त्वस्तानि स्वप्नानि परिगृह्णन्नेव अहं निःसंशयमेव सम्बुद्धो भविष्यामीति अज्ञासीत् । तस्मिन् कृतनिश्चयस्तस्या रात्र्या अतिक्रमेण सकलशरीरपरिकर्म्म कृत्वा भिक्षापर्य्यटनकालमागमयमानः प्रातरेव गत्वा तस्मिन् न्यग्रोधमूले निषसाद । तदानीं स्वप्रभाभिः सकलतरुमूलं समन्तात्समुदज्ज्वलत् । अथ सा पूर्णा नाम दासी तत्रागत्य प्राचीनलोकधातुमवलोकमाना तरुमूले निषण्णं बोधिसत्त्वं विलोकयामास । आसीच्च तच्छरीरान्निर्गताभिः प्रभाभिः स वटतरुः सुव-

र्णवर्णे । तदवलोक्य दासी एवमचिन्तयत् । अस्माकं देवता अद्य स्वहस्ताभ्यां बलिं प्रतिग्रहीतुं वाञ्छन्त्यो वृक्षादवरुह्य निषण्णा इति उद्वेगमापन्ना सा पुनर्व्वेगेन गत्वा तमर्थं सुजातायै न्यवेदयत् । तच्छ्रुत्वा सुजाता हृष्टमना अद्यप्रभृति त्वां मम ज्येष्ठदुहितृस्थाने स्थापयामीति अस्यै दुहितुरनुरूपं समग्रमलङ्कारं प्रददौ ।

यतः सर्व्वेषां पश्चिमभविकानां बोधिसत्त्वानां सम्बुद्धभावस्य प्रतिबोधकरणदिवसे शतसहस्रार्घा सुवर्णपातिर्लब्धुमर्हा । तस्मात् सा सुजाता सुवर्णपात्यां पायसं प्रक्षेप्स्यामीति चित्ते चकार । तदनन्तरं सा शतसहस्रार्घां सुवर्णपातिं आदाय तत्रापि पायसं प्रक्षिपामीति पाकभाजनमावर्त्तयत् । सर्व्वं पायसं कमलदलात् उदकमिव भाजनान्निर्गत्य सुवर्णपात्यां प्रणिदधौ । तच्च पायसं एकपातिपूरणमात्रमेवाभूत् । सा तां पातिमपरया सुवर्णपात्या प्रच्छाद्य अतिधवलेन वस्त्रेण वेष्टयामास । सा सुजाता सर्व्वालङ्कारविशेषैः स्वमलङ्कृत्य तां पातिं शीर्षोपरि प्रणिधाय महता आनुभावेन न्यग्रोधमूलमुपगता । सा बोधिसत्त्वं समवलोक्य प्रीतिसौमनस्यं प्राप्ता चाऽभूत् । वृक्षदेवतेति सञ्ज्ञया अवलोकितस्थानात्प्रभृति अवनतशिरा आगत्य शीर्षात्सुवर्णपातिमवातीतरत् । व्यवारीच्च तां सुवर्णपातिम् । सा गन्धपुष्पवासितमुदकमपि गृहीत्वा बोधिसत्त्वस्य उपानैषीत् । घटीकारनाम्ना महाब्रह्मणा उपनीतं मृत्तिकापात्रमपि एतावदवधि बोधिसत्त्वं न हित्वा सपदि अन्तर्हितम् । तदा बोधिसत्त्वस्तदपश्यन् दक्षिणहस्तं प्रसार्य्य उदकं सम्प्रत्यैच्छत् । सा तद्धस्ते उदकमपातयत् ।

अथ सुजाता स्वहस्ताभ्यामेव सपायसां पातिं बोधिसत्त्वस्य हस्ते प्रतिष्ठापयामास । ततो महासत्त्वः सुजातां व्यलोकयत् । सा बोधि

सत्त्वस्य आकृतिं ज्ञात्वा आर्य्ये! मयेदं तुभ्यं परित्यक्तम् । त्वं यथारुचितं स्थानं गच्छ । यथा मम मनोरथः समृद्धिं गतः । तथा भवतोपि मनोरथः समृध्यतु इति उक्त्वा शतसहस्रार्घा सुवर्णपातिं पुराणमृत्तिकापात्रमिव अनपेक्ष्य प्रायासीत् । बोधिसत्त्वोपि निषण्णस्थानादुत्थाय न्यग्रोधं प्रदक्षिणीकृत्य पायसमादाय नैरञ्जनाया नद्यास्तीरमगात् । तत्र नैकबोधिसत्त्वानां सम्बोधिसमधिगमनदिवसे स्नानावतरणे रमणीयं तीर्थमस्ति । स तु अस्यास्तीरे चीवराणि संस्थाप्यावततार । स च तत्र स्नात्वा समुत्ततार । अनेकशतसहस्रैः सम्बुद्धैर्निवासितमर्हध्वजमाच्छाद्य च पुरस्तादभिमुखो निषसाद । बोधिसत्त्वस्तत्र निषद्य तं निरुदकमधुपाय सममेकैकं पिण्डं पक्वतालास्थिपरिमाणं कृत्वा एकोनपञ्चाशत् पिण्डान् परि भुक्तवान् । ते बुद्धभूतस्य सप्तसप्ताहानि बोधिमण्डे विहरत एकोनपञ्चाशद्दिवसान् आहारकृत्यं साधयामासुः । बोधिसत्त्वस्तत्पायसं परिभुज्य । सुवर्णपातिं गृहीत्वा पर्यशोधयत् । स पुनस्तां गृहीत्वा यद्यहं बुद्धो भविष्यामि इयं पातिः प्रतिस्रोतो गच्छतु इत्युक्त्वा नद्यां चिक्षेप । सा पातिः सचेतनेव बोधिसत्त्वस्य सर्व्वज्ञताज्ञानप्रतिलाभं दर्शयन्ती वेगसम्पन्नस्य सुवर्णहंसस्य अन्तरीक्षे गमनमिव अशीतिहस्तमात्रस्थानं प्रतिस्रोतो मर्दयन्ती नदीमध्यमगमत् । सा पातिरेकस्मिन्नावर्त्ते निमग्ना कालस्य नाम नागराजस्य भवनं गत्वा त्रयाणामतीतानां बुद्धानां परिभुक्तपातिषु प्रहृत्य किर्किरिति शब्दं श्रावयन्ती तासामधः प्रतिष्ठिता। कालो नाम नागराजस्तं शब्दं समाकर्ण्य प्रत्यहमभिसम्बुध्य एवमब्रवीत् । पूर्व्वेद्युरेको बुद्धः अद्य एको बुद्ध इति । स समुत्थाय अनेकैः पदशतैः स्तुतिमुदीरयंस्तस्थौ । बोधिसत्त्वोपि तेन [illegible] पि अवश्यं बुद्धो भविष्यामीति हृष्टमना अभवत् ।

अथ स बोधिसत्त्वो महाटव्या गोचराभिमुख मुरुचिरदेहशोभा समुज्वल केशरभारसमाकीर्णे सिंहो मृगेन्द्र इव षड्दन्तदहतीरे मुपुष्पितविशालशालवन प्रविष्टो विगलितसमग्राभरण षड्दन्तो नाम सिन्धुर इव च पञ्चवर्णमधुकरगणपरिचुम्बितदिव्यगन्धप्रतिम सुगन्धकुसुमनिकरभ्राजितशाखाभि समुपेत रमणीय शालवन दिवा विहारार्थं प्रविवेश। स बोधिसत्त्व साय पूर्व्वदिग्भागोपगततरुनिकरच्छा येषु अद्यैव सम्बोधिज्ञान प्रतिबुध्यत्तामिति आह्वयत्सु इव मन्दमारुत प्रकम्पितधरणिरुहाग्रकरेषु सकलपुष्पोपशोभितविविधतरुनिकराणाशा खाग्रनिपण्णपञ्चवर्णभ्रमरसङ्गीतध्वनिषु च प्रवर्त्तमानेषु वृन्तात् परिगलित पञ्चवर्णकुसुमसमाकीर्णे धरणितल शोभयमानो वनप्रदेशान्निष्कान्तो मत्तद्विरदपतिरिव विलासातिशयेन दिवा विहारान्निरक्रामत्। तस्मिन् काले मयूरपिच्छकलापैरिव अमरगणोपनीतैश्छत्रध्वजवस्त्रालङ्कारै प्रतिमण्डित कल्पद्रुम इव बोधिद्रुमोपि भ्राजित । ततो बोधिसत्वो देवताभि समलङ्कृतेन विंशत्युत्तरैकशतैकसहस्रहस्तविस्तृतेन । मार्गेण सिंह इव विजृम्भमाणो बोधिद्रुममूल समभ्यगात्।

तदा महाब्रह्मा योजनविस्तृत श्वेतच्छत्र धारयन्नेव अनुयात । सुयामदेवपुत्रस्त्रिगव्यूति दिव्य चामर गृहीत्वा बोधिसत्त्व वीजयमानोपि अगच्छत्। पुरहूत पुरन्दरो गव्यूतिप्रमाण विजयोत्तर नाम शङ्ख धमन् पुरस्तात् अगच्छत्। पञ्चशिखो नाम गन्धर्व्वदेवपुत्रस्त्रिगव्यूति प्रमाण बेलुववर्णो वीणाञ्च वादयन् पुरत अनुयात । कालो नाम नागेन्द्र सार्धैरशीत्या नाटकस्त्रीसहस्रै परिवृत स्तुतिसहस्रमुदीरयन् बोधिसत्त्वमन्वगच्छत् । चत्वारोपि लोकपाला दिव्य छत्र गृहीत्वा बोधिसत्त्वमन्वगच्छन्। विविधा नागयक्षसुपर्णा दिव्यै पुष्पैर्गन्धै पूजयमाना दिव्यसङ्गीती प्रवर्त्तयमाना बोधिसत्त्वमनुयाता । दशसु

चक्रवालसहस्रेषु देवता नानातूर्य्यैः कुसुमगन्धविलेपनधूपपताकादिभिश्च पूजयमाना दिव्याः सङ्गीतीः प्रवर्त्तयमाना बोधिसत्त्वमन्वगच्छन् ।

अथ महासत्त्वः सुरभिचन्दनचूर्णसमाकुलेषु कुसुमधूपजन्मसुगन्धिषु विविधचामरध्वजमालिषु दशसहस्रचक्रवालेषु बोधिद्रुममूलं समायातोऽभूत् । तस्मिंस्तु समये तृणहारकः * स्वस्तिको नाम द्विजन्मा तृणमादाय सम्मुखे पथि आगच्छत् । स महासत्त्वस्य तदाकृतिं ज्ञात्वा अष्टाभिस्तृणमुष्टिभिस्तं समभ्यर्चयामास । बोधिसत्त्वस्तानि तृणानि प्रतिगृह्य बोधिमण्डलमुपसमक्रामत् । बोधिद्रुमस्य दक्षिणदिशाभागे उत्तराभिमुखस्तृणानि गृहीत्वा तस्थौ । तत्क्षणे दक्षिणचक्रवालमवसद्य अधः अवीचिं सम्प्राप्तमिव च उत्तरचक्रवालमुल्लङ्घ्य उपरि भवाग्रं सम्प्राप्तमिव चाभूत् । अज्ञासीच्च बोधिसत्त्वो नेदं सम्बोधिस्थानं भविष्यतीति । ततो महासत्त्वो बोधिद्रुमं प्रदक्षिणीकुर्व्वन् पश्चिमदिशाभागं गत्वा पुरस्तादभिमुखस्तस्थौ । तदा पश्चिमचक्रवालमवसद्य अधः अवीचिं सम्प्राप्तमिव पूर्व्वचक्रवालमुल्लङ्घ्य उपरि भवाग्रं प्राप्तमिव चाऽभूत् । बोधिसत्त्व इदमपि सम्बोधिस्थानं न भविष्यतीति अज्ञासीत् । ततोपि प्रदक्षिणीकुर्व्वन्नुत्तरदिशाभागं गत्वा दक्षिणाभिमुखस्तस्थौ । तदा उत्तरचक्रवालमवसद्य अधः अवीचिं संप्राप्तमिव च दक्षिणचक्रवालमुल्लङ्घ्य उपरिभवाग्रं प्राप्तमिव चाऽभूत् । बोधिसत्त्वो नेदमपि सम्बोधिस्थानं भविष्यतीति अज्ञासीत् । ततोपि प्रदक्षिणीकुर्व्वन् पूर्व्वदिशाभागं गत्वा पश्चिमाभिमुखस्तस्थौ । पूर्व्वदिशाभागे सकलानां सम्बुद्धानां पर्य्यङ्कस्थानं नैव मुच्यते न कम्पते ।

* स्वस्तियो वा ॥

अथ स बोधिसत्त्वो महाटव्या गोचराभिमुख सुरुचिरदेहशोभा समुज्वल केशरभारसमाकीर्णे सिंहो मृगेन्द्र इव षड्‌दतदहतीरे सुपुष्पितविशालशालवन प्रविष्टो विगलितसमग्राभरण षड्दन्तो नाम सिन्धुर इव च पञ्चवर्णमधुकरगणपरिचुम्बित दिव्यगन्धमतिम सुगन्धकुसुमनिकरभ्राजितशाखाभि समुपेत रमणीय शालवन दिवा विहारार्थ प्रविवेश । स बोधिसत्त्व साय पूर्व्वदिग्भागोपगततरुनिकरच्छा येषु अद्यैव सम्बोधिज्ञान प्रतिबुध्यतामिति आह्वयत्सु इव मन्दमारुत प्रकम्पितधरणिरुहाग्रकरेषु सकलपुष्पोपशोभितविविधतरुनिकराणाशा खाग्रनिपण्णपञ्चवर्णभ्रमरसङ्गीतध्वनिषु च प्रवर्त्तमानेषु वृन्तात् परिगलित पञ्चवर्णकुसुमसमाकीर्णे धरणितल शोभयमानो वनप्रदेशान्निष्क्रान्तो मत्तद्विरदपतिरिव विलासातिशयेन दिवा विहारान्निरक्रामत् । तस्मिन् काले मयूरपिच्छकलापैरिव अमरगणोपनीतैश्छत्रध्वजवस्त्रालङ्कारै प्रतिमण्डित कल्पद्रुम इव बोधिद्रुमोपि भ्राजित । ततो बोधिसत्त्वो देवताभि समलङ्कृतेन विंशत्युत्तरैकशतैकसहस्रहस्तविस्तृतेन । मार्गेण सिंह इव विजृम्भमाणो बोधिद्रुममूल समभ्यगात् ।

तदा महाब्रह्मा योजनविस्तृत श्वेतच्छत्र धारयन्नेव अनुयात । सुयामदेवपुत्रस्त्रिगव्यूति दिव्य चामर गृहीत्वा बोधिसत्त्व वीजयमानोपि अगच्छत् । पुरुहूत पुरन्दरो गव्यूतिप्रमाण विजयोत्तर नाम शङ्ख धमन् पुरस्तात् अगच्छत् । पञ्चशिखो नाम गन्धर्व्वदेवपुत्रस्त्रिगव्यूति प्रमाण वेलुववर्णां वीणाञ्च वादयन् पुरत अनुयात । कालो नाम नागेन्द्र सार्धैरशीत्या नाटकस्त्रीसहस्रै परिवृत स्तुतिसहस्रमुदीरयन् बोधिसत्त्वमन्वगच्छत् । चत्वारोपि लोकपाला दिव्य छत्र गृहीत्वा बोधिसत्त्वमन्वगच्छन् । विविधा नागयक्षसुपर्णा दिव्यै पुष्पैर्गन्धै पूजयमाना दिव्यसङ्गीती प्रवर्त्तयमाना बोधिसत्त्वमनुयाता । दशसु

चक्रवालसहस्रेषु देवता नानातूर्य्यैः कुसुमगन्धविलेपनधूपपताकादिभिश्च पूजयमाना दिव्याः सङ्गीतीः प्रवर्त्तयमाना बोधिसत्त्वमन्वगच्छन् ।

अथ महासत्त्वः सुरभिचन्दनचूर्णसमाकुलेषु कुसुमधूपजन्मसुगन्धिषु विविधचामरध्वजमालिषु दशसहस्रचक्रवालेषु बोधिद्रुममूलं समायातोऽभूत् । तस्मिंस्तु समये तृणहारकः * स्वस्तिको नाम द्विजन्मा तृणमादाय सम्मुखे पथि आगच्छत् । स महासत्त्वस्य तदाकृतिं ज्ञात्वा अष्टाभिस्तृणमुष्टिभिस्तं समभ्यर्चयामास । बोधिसत्त्वस्तानि तृणानि प्रतिगृह्य बोधिमण्डलमुपसमक्रामत् । बोधिद्रुमस्य दक्षिणदिशाभागे उत्तराभिमुखस्तृणानि गृहीत्वा तस्थौ । तत्क्षणे दक्षिणचक्रवालमवसद्य अधः अवीचिं सम्प्राप्तमिव च उत्तरचक्रवालमुल्लङ्घ्य उपरि भवाग्रं सम्प्राप्तमिव चाभूत् । अज्ञासीच्च बोधिसत्त्वो नेदं सम्बोधिस्थानं भविष्यतीति । ततो महासत्त्वो बोधिद्रुमं प्रदक्षिणीकुर्व्वन् पश्चिमदिशाभागं गत्वा पुरस्तादभिमुखस्तस्थौ । तदा पश्चिमचक्रवालमवसद्य अधः अवीचिं सम्प्राप्तमिव पूर्व्वचक्रवालमुल्लङ्घ्य उपरि भवाग्रं प्राप्तमिव चाऽभूत् । बोधिसत्त्व इदमपि सम्बोधिस्थानं न भविष्यतीति अज्ञासीत् । ततोपि प्रदक्षिणीकुर्व्वन्नुत्तरदिशाभागं गत्वा दक्षिणाभिमुखस्तस्थौ । तदा उत्तरचक्रवालमवसद्य अधः अवीचिं संप्राप्तमिव च दक्षिणचक्रवालमुल्लङ्घ्य उपरिभवाग्रं प्राप्तमिव चाऽभून् । बोधिसत्त्वो नेदमपि सम्बोधिस्थानं भविष्यतीति अज्ञासीत् । ततोपि प्रदक्षिणीकुर्व्वन् पूर्व्वदिशाभागं गत्वा पश्चिमाभिमुखस्तस्थौ । पूर्व्वदिशाभागे सकलानां सम्बुद्धानां पर्य्यङ्कस्थानं नैव मुच्यते न कम्पते।

* स्वस्तियो वा ॥

अथ स बोधिसत्त्वो महाटव्या गोचराभिमुख मुरुचिरदेहशोभा समुज्वल केशरभारसमाकीर्णे सिंहो मृगेन्द्र इव षड्दन्तदहतीरे सुपुष्पितविशालशालवन प्रविष्टो विगलितसमग्रामरण षड्दन्तो नाम सिन्धुर इव च पञ्चवर्णमधुकरगणपरिचुम्बितदिव्यगन्धप्रतिम सुगन्धकुसुमनिकरप्राजितशाखाभि समुपेत रमणीय शालवन दिवा विहारार्थं प्रविवेश। स बोधिसत्त्व साय पूर्वोदिग्भागोपगततरुनिकरच्छायेषु अद्यैव सम्बोधिज्ञान प्रतिबुध्यतामिति आह्वयत्सु इव मन्दमारुत प्रकम्पितधरणिरुहाग्रकरेषु सकलपुष्पोपशोभितविविधतरुनिकराणाशाखाग्रनिषण्णपञ्चवर्णभ्रमरसङ्गीतध्वनिषु च प्रवर्त्तमानेषु वृन्तात् परिगलित पञ्चवर्णकुसुमसमाकीर्णे धरणितल शोभयमानो वनप्रदेशान्निष्क्रान्तो मत्तद्विरदपतिरिव विलासातिशयेन दिवा विहारान्निरक्रामत् । तस्मिन् काले मयूरपिच्छकलापैरिव भ्रमरगणोपर्नातैश्छन्नध्वनवप्रवालङ्कारे प्रतिमण्डित कल्पद्रुम इव बोधिद्रुमोपि भ्राजित । ततो बोधिसत्त्वो देवताभि समलङ्कृतेन विंशत्युत्तरैकशतैकसहस्रहस्तविस्तृतेन । मार्गेण सिंह इव विजृम्भमाणो बोधिद्रुममूल समभ्यगात् ।

तदा महाब्रह्मा योजनविस्तृत श्वेतच्छत्र धारयन्नेव अनुयात । सुयामदेवपुत्रस्त्रिगव्यूति दिव्य चामर गृहीत्वा बोधिसत्त्व वीजयमानोपि अगच्छत् । पुरहूत पुरन्दरो गव्यूतिप्रमाण विजयोत्तर नाम शङ्ख धमन् पुरस्तात् अगच्छत् । पञ्चशिखो नाम गन्धर्व्वदेवपुत्रस्त्रिगव्यूति प्रमाण वेलुववर्णां वीणाञ्च वादयन् पुरत अनुयात । कालो नाम नागेन्द्र सार्धैरशीत्या नाटकस्त्रीसहस्रै परिवृत स्तुतिसहस्रमुदीरयन् बोधिसत्त्वमन्वगच्छत् । चत्वारोपि लोकपाला दिव्य छत्र गृहीत्वा बोधिसत्त्वमन्वगच्छन् । विविधा नागयक्षसुपर्णा दिव्यै पुष्पैर्गन्धै पूजयमाना दिव्यसङ्गीती प्रवर्त्तयमाना बोधिसत्त्वमनुयाता । दशसु

चक्रवालसहस्रेषु देवता नानातूर्यैः कुसुमगन्धविलेपनधूपपताकादिभिश्च पूजयमाना दिव्याः सङ्गीतीः प्रवर्त्तयमाना बोधिसत्त्वमन्वगच्छन् ।

अथ महासत्त्वः सुरभिचन्दनचूर्णसमाकुलेषु कुसुमधूपजन्मसुगन्धिषु विविधचामरध्वजमालिषु दशसहस्रचक्रवालेषु बोधिद्रुममूलं समायातोऽभूत् । तस्मिंस्तु समये तृणहारकः *स्वस्तिको नाम द्विजन्मा तृणमादाय सम्मुखे पथि आगच्छत् । स महासत्त्वस्य तदाकृतिं ज्ञात्वा अष्टाभिस्तृणमुष्टिभिस्तं समभ्यर्च्चयामास । बोधिसत्त्वस्तानि तृणानि प्रतिगृह्य बोधिमण्डलमुपसमक्रामत् । बोधिद्रुमस्य दक्षिणदिशाभागे उत्तराभिमुखस्तृणानि गृहीत्वा तस्थौ । तत्क्षणे दक्षिणचक्रवालमवसद्य अधः अवीचिं सम्प्राप्तमिव च उत्तरचक्रवालमुल्लङ्घ्य उपरि भवाग्रं सम्प्राप्तमिव चाभूत् । अज्ञासीच्च बोधिसत्त्वो नेदं सम्बोधिस्थानं भविष्यतीति । ततो महासत्त्वो बोधिद्रुमं प्रदक्षिणीकुर्व्वन् पश्चिमदिशाभागं गत्वा पुरस्तादभिमुखस्तस्थौ । तदा पश्चिमचक्रवालमवसद्य अधः अवीचिं सम्प्राप्तमिव पूर्व्वचक्रवालमुल्लङ्घ्य उपरि भवाग्रं प्राप्तमिव चाऽभूत् । बोधिसत्त्व इदमपि सम्बोधिस्थानं न भविष्यतीति अज्ञासीत् । ततोपि प्रदक्षिणीकुर्व्वन्नुत्तरदिशाभागं गत्वा दक्षिणाभिमुखस्तस्थौ । तदा उत्तरचक्रवालमवसद्य अधः अवीचिं संप्राप्तमिव च दक्षिणचक्रवालमुल्लङ्घ्य उपरिभवाग्रं प्राप्तमिव चाऽभूत् । बोधिसत्त्वो नेदमपि सम्बोधिस्थानं भविष्यतीति अज्ञासीत् । ततोपि प्रदक्षिणीकुर्व्वन् पूर्व्वादिशाभागं गत्वा पश्चिमाभिमुखस्तस्थौ । पूर्व्वदिशाभागे सकलानां सम्बुद्धानां पर्य्यङ्कस्थानं नैव मुच्यते न कम्पते।

* स्वस्तियो वा ॥

अथ महासत्त्व इद सम्बोधिस्थान नाम विहितम् । अचलस्थानम् । क्लेशपञ्जरविध्वसनस्थानमिति अज्ञासीत् । स पुनस्तत्र तानि तृणानि अग्रेषु गृहीत्वा चालयित्वा चास्थात् । यद्यह सर्वज्ञताज्ञान लप्स्ये अत्राऽचलपर्य्यङ्को मे उत्पद्यता इति सत्यवचनमपि अब्रवीच्च । तदनन्तर तेन महासत्त्वेन सम्भृतदशपारमितानामानुभावेन रत्नसमुज्ज्वल चतुर्दशहस्तमात्र वज्रासनमुदपतत् । स बोधिसत्त्वश्चतुरङ्गसमन्वागत वीर्य्याधिष्ठान कृत्वा कायश्च ऋजु प्रणिधाय पारमुख स्मृतिमुपस्थाप्य च दृढमानसो भूत्वा बोधिद्रुमे पृष्ठ सधृत्य पूर्वदिशाभिमुखो निषसाद । स वै त्वक्स्नाय्वस्थीनि भिद्यन्ता वा मासशोणिते मच्छरीरे अवशुष्यता वा नाह सम्बोधिमभाप्य[1] इद पर्य्यङ्कवर भेत्स्यामीति च । यावदाश्रवा मच्चित्तमनुपादाय मुञ्चन्ति । तावदशनिशतसहस्राणा पातादपि चालयितुमशक्यमपराजितपर्य्यङ्कमाभुज्य तस्मिन्निषसाद । तत्र हि निषण्णो बोधिसत्त्वो बोधिद्रुममूले पुरस्तादभिमुख एव रजत वर्णस्कध सुवर्णवर्णपत्रमुच्चै पञ्चाशद्हस्त बोधिद्रुम पृष्ठे निधाय उपरिमणिच्छत्रेणेव बोधिशाखया प्रतिच्छाद्यमानो महती श्रिय बभार। तस्य सुवर्णवर्णे चीवरे पतन्ति बोध्यङ्कुराणि कनकवर्णपृष्ठे निहिता प्रवाला इव विरेजु ।

अथ स बोधिसत्त्वो हस्तप्राप्त चक्रवर्त्तिश्रीविभव प्रहाय प्रव्रज्य ईदृशमतिदुष्कर प्रधानवीर्य्य किमर्थ कृतवानिति । क्लेशस्कन्धाभिसंस्कारमृत्युदेवपुत्रसङ्घाताना पञ्चाना माराणा विजयार्थम् । स हि महासत्त्व अग्रमार्गस्यार्हन्मार्गस्यानुत्पन्नकाले सानुशयाना चित्तसन्तान यैर्मार्गैर्मारयितव्यम् । पुन पुन पीडयितव्यम् । तेषा क्लेशमाराणाम-प्रमार्गस्य अर्हन्मार्गस्य उत्पन्नक्षणे विजितत्वात्प्रहीणत्वाच्च तस्मिन्नेव काले एकोनविंशतिप्रतिसन्धिविपाकस्कन्धसङ्घातैश्च असज्ञासत्त्वेषु

रूपप्रतिसन्धिस्कन्धसङ्घातैश्च यैः स्कन्धैर्य एव सत्त्वा अनागतभवसङ्घाते भवावर्त्ते पुनः पुनरवगाहेरंस्तेषां स्कन्धमाराणामग्रमार्गभूतस्य अर्हन्मार्गस्य उत्पन्नक्षणे विजितत्वात् पुनः पुनरनुत्पादितत्वाच्च । तस्मिन्नेव काले यैः कुशलाकुशलसङ्घातैरभिसंस्कारैः सत्वाः अनागते भवबृत्ते पुनः पुनः सञ्जनयितव्याः प्रवर्त्तयितव्याः । तेषामभिसंस्कारमाराणामग्रमार्गस्य अर्हन्मार्गस्य उत्पन्नक्षणेविजितत्वात्प्रहीणत्वाच्च तस्मिन्नेव काले अनागतैरेकोनविंशतिविपाकच्युतिसङ्घाते रूपच्युतिसङ्घातैश्च यैर्धर्मैस्त एव सत्त्वाः पुनः पुनः प्रतिसन्ध्यमुत्पत्तिभावेन अनागतभवेषु मारयितव्याः घातयितव्याः । तेषां मृत्युमाराणामग्रमार्गभूतस्य अर्हन्मार्गस्य उत्पन्नक्षणे विजितत्वात् प्रहीणत्वाच । तस्मिन्नेव काले येन देवपुत्रमारेण वशवर्त्तिषु वसता तेषामेव सत्त्वानां मार्गफलानि उत्पन्नैः स्वानुभावैर्मारयितव्यानि पीडयितव्यानि । तस्य तेषामेव मार्गफलधर्माणामन्तरायं कुर्व्वतः अग्रमार्गभूतस्य अर्हन्मार्गस्य उत्पन्नक्षणे उत्कृष्टवशेन जितत्वान्निवृत्तत्वाच तान् मारान् सर्वथैव जितवानेव । तेषां हि माराणां विजयनं किमर्थमिति । तिषु बुद्धक्षेत्रेषु त्रीणि श्वेतच्छत्राणि उच्छ्रित्य सम्बुद्धराज्यग्रहणार्थम् । बुद्धराज्यग्रहणं किमर्थमिति ? । समग्रजगतामववादानुशासनीकरणार्थम् । अववादानुशासनीकरणं किमर्थमिति ? । ज्ञानदर्शनप्रतिलाभार्थम् । ज्ञानदर्शनप्रतिलाभः किमर्थमिति ? । अनुत्पादात्परिनिर्वाणार्थम् ।

ततश्चायं महासत्त्वो विविधाकृतीनां सर्व्वेषां सत्त्वानाञ्च अनुत्पादात्परिनिर्वाणं साधयन् जातिक्षेत्राज्ञाक्षेत्रविषयक्षेत्रसङ्घातेषु त्रिषु बुद्धक्षेत्रेषु मानुष्यश्वेतच्छत्रं दिव्यश्वेतच्छत्रं विमुक्तिश्वेतच्छत्रमिति त्रीणि श्वेतच्छत्राणि उच्छ्रित्य बुद्धराज्यं ग्रहीतुं सार्द्धं मारैः संयुध्य मारान् अजैषीत् । तस्यापि महासत्त्वस्य जातिक्षेत्रं दशसहस्रचक्रवालाः ।

आज्ञाक्षेत्रं कोटिशतसहस्रचक्रवालाः । विषयक्षेत्रमपर्यन्तचक्रवाला इति । एवं राज्ञा शुद्धोदनेन स्वं राज्यं दत्वा नमस्यता मानुष्यश्वेतच्छत्रं समभ्यर्चितम् । स महासत्त्वस्तदपि जहौ । महाब्रह्मा सार्धं देवब्रह्मभिः स्वविषयराज्यं प्रदायापि दिव्यश्वेतच्छत्रेण समभ्यर्चयामास। तमपि महासत्त्वो जहौ । पुनः नारायणबलोपेतः स महासत्त्वः पण्डितप्रशंसनीयस्य नरदेवैः शिरसि अञ्जलिं प्रतिष्ठाप्य वर्णितैरात्मना समुपार्चितैः कुशलसम्भारैर्निष्पादितस्य सर्वज्ञताज्ञानस्य उपकरणभूतमर्हत्फलसङ्ख्यातं विमुक्तिश्वेतच्छत्रं समभिधर्तुकामोभूत् । स महासत्त्वः कोटिशतानां हस्तिनां बलं दधानः आत्मनः शरीरबलेन च समन्वागतः अनेककोटिशतसहस्रमारानभिभवितुं समर्थाभिज्ञाबलेषु च पारं प्राप्तः । सकलस्यापि सत्त्वलोकस्य विजयं ग्रहीतुं बोधिद्रुममूले अपराजितपर्य्यङ्कवरमुपगतः ।

इहैवेदं नारायणबलं दर्शयामि । तद्यथा कालावकः गाङ्गेयः पण्डरः ताम्रः पिङ्गलः गन्धः मङ्गलः हेमः उपोषितः षड्दन्तश्चेति हस्तिनो दशविधा भवन्ति । तत्र दशानां मध्यमपुरुषाणां बलं एकस्य कालावकस्य हस्तिनो बलं भवति । तथा दशानां कालावकानां बलमेकस्य गाङ्गेयस्य । दशानां गाङ्गेयानां बलमेकस्य पण्डरस्य । दशानां पण्डराणां बलमेकस्य ताम्रस्य । दशानां ताम्राणां बलमेकस्य पिङ्गलस्य । दशानां पिङ्गलानां बलमेकस्य गन्धस्य । दशानां गन्धानां बलमेकस्य मङ्गलस्य । दशानां मङ्गलानां बलमेकस्य हैमस्य । दशानां हेमानां बलमेकस्य उपोषितस्य । दशानामुपोषितानां बलमेकस्य षड्दन्तस्य हस्तिन. । दशानां षड्दन्तहस्तिनां बलं पश्चिमभविकस्य बोधिसत्त्वस्य भवति । पश्चिमभविको हि बोधिसत्त्वः प्रकृतहस्तिगणनात् कोटिशतानां बलं दधाति । मध्यमपुरुषगणनात् कोटिसहस्राणां बलं

दधाति यथाक्रमेणागतमात्मनः प्रकृतिशरीरबलमेव नारायणबलं भवति ।

इदमेतन्नारायणबलं दशबलज्ञानस्य मुनय ऋद्धिविदो दिव्यश्रोत्रं परचित्तविज्ञापकं पूर्व्वनिवासानुस्मृतिर्दिव्यचक्षुश्चेति पञ्चप्रकारमभिज्ञाबल प्रापञ्च । इत्थं महता शरीरबलेन च प्रज्ञाबलेन च समन्वागते महासत्त्वे सर्व्वजगदभिभवनसमर्थस्य सर्व्वज्ञताज्ञानस्य उत्पादनार्थे बोधिद्रुममूले अपराजितपर्य्यङ्के निषण्णे सर्व्वे देवाः समागच्छन् । तेऽपि देवाः पृथिवीतलाद्यावद्ब्रह्मलोकं गृहीतविविधससत्कारहस्ताः समाययुः । केचिद्देवा ध्वजपताकापङ्क्तीः केचिद्देवाः कदलितोरणपङ्क्तीः केचिद्देवा धूपमालाः केचिद्देवाः कुसुममालाः केचिद्देवाः सुवर्णघटमालाः केचिद्देवाः दण्डप्रदीपमालाः केचिद्देवाः श्रीवत्समालाः केचिद्देवाः नन्द्यावर्त्तमालाः केचिद्देवा मत्स्ययुगलमालाः केचिद्देवाः अङ्कुशमालाः केचिद्देवा भद्रपीठमालाः केचिद्देवाश्चामरमालाः केचिद्देवाः शङ्खमालाः केचिद्देवाः पूर्णघटमालाः केचिद्देवा अष्टोत्तरशतमङ्गलपङ्क्तीः केचिद्देवाः रजतदाममालाः केचिद्देवाः सुवर्णमालाः केचिद्देवाः मणिदाममालाः केचिद्देवाः सर्व्वरत्नदाममाला धारयामासुः सर्व्वे दशसहस्रचक्रवालेषु देवाः हृष्टाः महत्या एककोलाहलाश्चाभवन् ।

इति श्रीशीलस्कन्धस्थविरस्य कृतौ सद्धर्ममकरन्दे
बुद्धपूजापरिदीपनो नाम
दशमोऽध्यायः ॥

---

आज्ञाक्षेत्रं कोटिशतसहस्रचक्रवालाः । विषयक्षेत्रमपर्यन्तचक्रवाला इति । एवं राज्ञा शुद्धोदनेन स्वं राज्यं दत्वा नमस्यता मानुष्यश्वेतच्छत्रं समभ्यर्चितम् । स महासत्त्वस्तदपि जहौ । महाब्रह्मा सार्धं देवब्रह्मभिः स्वविषयराज्यं प्रदायापि दिव्यश्वेतच्छत्रेण समभ्यर्चयामास। तमपि महासत्त्वो जहौ । पुनः नारायणबलोपेतः स महासत्त्वः पण्डितप्रशंसनीयस्य नरदेवैः शिरसि अञ्जलिं प्रतिष्ठाप्य वर्णितैरात्मना समुपचितैः कुशलसम्भारैर्निष्पादितस्य सर्वज्ञताज्ञानस्य उपकरणभूतमर्हत्फलसङ्घातं विमुक्तिश्वेतच्छत्रं समभिधर्तुकामोभूत् । स महासत्त्वः कोटिशतानां हस्तिनां बलं दधानः आत्मनः शरीरबलेन च समन्वागतः अनेककोटिशतसहस्रमारानभिभवितुं समर्थोभिज्ञाबलेषु च पारं प्राप्तः । सकलस्यापि सत्त्वलोकस्य विजयं ग्रहीतुं बोधिद्रुममूले अपराजितपर्यङ्कवरमुपगतः ।

इहैवेदं नारायणबलं दर्शयामि । तद्यथा कालावकः गाङ्गेयः पण्डरः ताम्रः पिङ्गलः गन्धः मङ्गलः हैमः उपोषितः षड्दन्तश्चेति हस्तिनो दशविधा भवन्ति । तत्र दशानां मध्यमपुरुषाणां बलं एकस्य कालावकस्य हस्तिनो बलं भवति । तथा दशानां कालावकानां बलमेकस्य गाङ्गेयस्य । दशानां गाङ्गेयानां बलमेकस्य पण्डरस्य । दशानां पण्डराणां बलमेकस्य ताम्रस्य । दशानां ताम्राणां बलमेकस्य पिङ्गलस्य । दशानां पिङ्गलानां बलमेकस्य गन्धस्य । दशानां गन्धानां बलमेकस्य मङ्गलस्य । दशानां मङ्गलानां बलमेकस्य हैमस्य । दशानां हैमानां बलमेकस्य उपोषितस्य । दशानामुपोषितानां बलमेकस्य षड्दन्तस्य हस्तिनः । दशानां षड्दन्तहस्तिनां बलं पश्चिमभविकस्य बोधिसत्त्वस्य भवति । पश्चिमभविको हि बोधिसत्त्वः प्रकृतहस्तिगणनात् कोटिशतानां बलं दधाति । मध्यमपुरुषगणनात् कोटिसहस्राणां बलं

दधाति यथाक्रमेणागतमात्मनः प्रकृतिशरीरबलमेव नारायणबलं भवति ।

इदमेतन्नारायणबलं दशबलज्ञानस्य मुनय ऋद्धिविदो दिव्यश्रोत्रं परचित्तविज्ञापकं पूर्व्वनिवासानुस्मृतिर्दिव्यचक्षुश्चेति पञ्चप्रकारमभिज्ञाबलं प्रापच्च । इत्थं महता शरीरबलेन च प्रज्ञाबलेन च समन्वागते महासत्त्वे सर्व्वजगदभिभवनसमर्थस्य सर्व्वज्ञताज्ञानस्य उत्पादनार्थं बोधिद्रुममूले अपराजितपर्य्यङ्के निषण्णे सर्व्वे देवाः समागच्छन् । तेऽपि देवाः पृथिवीतलाद्यावद्ब्रह्मलोकं गृहीतविविधससत्कारहस्ताः समाययुः । केचिद्देवा ध्वजपताकापङ्क्तीः केचिद्देवाः कदलितोरणपङ्क्तीः केचिद्देवा धूपमालाः केचिद्देवाः कुसुममालाः केचिद्देवाः सुवर्णघटमालाः केचिद्देवाः दण्डप्रदीपमालाः केचिद्देवाः श्रीवत्समालाः केचिद्देवाः नन्द्यावर्त्तमालाः केचिद्देवा मत्स्ययुगलमालाः केचिद्देवाः अङ्कुशमालाः केचिद्देवा भद्रपीठमालाः केचिद्देवाश्चामरमालाः केचिद्देवाः शङ्खमालाः केचिद्देवाः पूर्णघटमालाः केचिद्देवा अष्टोत्तरशतमङ्गलपङ्क्तीः केचिद्देवाः रजतदाममालाः केचिद्देवाः सुवर्णमालाः केचिद्देवाः मणिदाममालाः केचिद्देवाः सर्व्वरत्नदाममाला धारयामासुः सर्व्वे दशसहस्रचक्रवालेषु देवाः हृष्टाः प्रहृष्टा एककोलाहलाश्चाभवन् ।

इति श्रीशीलस्कन्धस्थविरस्य कृतौ सद्धर्म्ममकरन्दे
युद्धपूजापरिदीपनो नाम
दशमोऽध्यायः ॥

---

# अथ एकादशोऽध्यायः

सदा पापीयान् मारः षट्संवत्सराणि प्रधानं प्रदहतो महासत्त्वस्य निस्तरावसरमपेक्ष्यैव विचचार। स मारः सुरगणानां कोलाहलशब्दं श्रुत्वा अयं सिद्धार्थकुमारो मद्विषयान्मोक्तुकाम इति अहोपरिजहाति मद्विषयान् तस्मादस्य अन्तरायं करोमीति चिन्तयामास। स विचिन्त्य तृष्णा च अरतिश्च रागा चेति तिस्रो दुहितॄर्निमन्त्रयामास। वत्साः! गच्छत यूयम्। सिद्धार्थकुमारस्य अन्तरायं कुरुतेति आहस्म। अथ ताः साधु तात! इति सम्प्रतीपुः। सपदि तास्तिस्रो दुहितरः पञ्चशतैः पञ्चशतैः परिवृताः सर्वालङ्कारैर्विभूषिताश्चाभवन्। तासां प्रथमं रागा बोधिसत्त्वस्यान्तिकमुपेत्य एवमब्रवीत्। भो! क्षत्रिय! उत्तिष्ठ मृत्युभीत इति। तच्छ्रुत्वा बोधिसत्त्वोपि आहस्म। त्वं कासीति। अहं रागा नामेति। का तव चेष्टा इति। अहं सर्वलोकं रागपाशेन भन्त्स्यामीति। तच्छ्रुत्वा बोधिसत्त्वोऽवदत्।

> रक्तश्चार्थं न जानाति रक्तो धर्म्मं न पश्यति।
> अन्धं तमस्तदा भवति यं रागः सहते नरम्॥

अहं रागविरागाय व्यायंस्यामि। हा तत इति। सा तच्छ्रुत्वा एकमन्तं तस्थौ।

ततः अरतिरुपगम्य एवमब्रवीत्। राजपुत्र! उत्तिष्ठ अस्मादासनादिति। तच्छ्रुत्वा बोधिसत्त्वोऽवोचत्। त्वं कासीति?। अहं अरतिर्नामेति। का तव चेष्टा इति!। अहं सर्व्वलोकं द्वेषपाशेन भन्त्स्यामीति। तच्छ्रुत्वा बोधिसत्त्व एवमवोचत्।

क्रुद्धश्चार्थं न जानाति क्रुद्धो धर्मं न पश्यति।
अन्धं तमस्तदा भवति यं क्रोधः सहते नरम् ॥

तस्मादहं तानि द्वेषतमांसि निहनिष्यामि। साऽपि तच्छ्रुत्वा एकमन्तं तस्थौ।

ततस्तृष्णा उपगम्य आहस्म। उत्तिष्ठ भो! सिद्धार्थ! अस्मात्पर्यङ्कादिति। तच्छ्रुत्वा बोधिसत्त्वः अब्रवीत्। त्वं कासीति?। अहं तृष्णा नामेति। का तव चेष्टा इति?। अहं सर्व्वं लोकं तृष्णापाशेन भन्त्स्यामीति। तच्छ्रुत्वा बोधिसत्त्व एवमवदत्।

मूढश्चार्थं न जानाति मूढो धर्म्मं न पश्यति।
अन्धं तमस्तदा भवति यं मोहः सहते नरम् ॥

तस्मादहं तं हरिष्यामीति।

अथ बोधिसत्त्वोपि अहमेवं रागद्वेषमोहानां प्रहाणार्थं 'सम्बुद्धो भविष्यामीति उक्त्वा गच्छत यूयमिति अभाषत च। ततः सपरिवारास्तिस्रो मारदुहितरो बोधिसत्त्वस्य पुरस्ताच्छृङ्गाररसिकतादिभिर्नानाकृतिभिश्च बोधिसत्त्वस्य चित्तं ग्रहीतुं समर्थैरुन्मीलननिमीलनप्रेक्ष्यकरणैर्नृत्यन्त्यो गायन्त्यो बोधिसत्त्वस्य चित्तं विक्षेप्तुमसमर्था भग्नमनोरथा निराशा विगतशरीरवर्णा विरूपरूपाः पलितकेशा भग्नदन्ता बीभत्सा लज्जमानाः पलाय्य पितुः सकाशं गत्वा सर्व्वाणि कार्य्याणि दिदिशुः। मारस्तच्छ्रुत्वा एवञ्चाब्रवीत्। वत्साः! महासत्त्वेन जितं रागादिक्लेशजातं पुनर्येनकेनचिज्जेतुं न शक्यते। तेन महासत्त्वेन तत्तन्मार्गाधिगमेन जितं रागादिक्लेशसमूहं जगति किमपि क्लेशजातं नानुगच्छति। तस्मादनन्तगोचरस्य सर्व्वज्ञताज्ञानस्य वशेन अपर्य्यन्तगोचरं भवत्रयेषु परिभ्रमणहेतुभूतानां रागादीनामन्यतर-

पापस्याप्यभावे तं महासत्त्वं यूयं केन कारणेन तस्मादासनान्नेप्यथ। अपि च जालिनी नामा रूपादिषु पञ्चसु अवलम्ब्यनेषु आसक्तविषक्त-भावेन विषक्तिका नामा च रूपतृष्णाऽपि तं महासत्त्वं कुतश्चिन्नेतुं समर्था नास्ति। तस्मादनन्तालम्बनस्य सर्वज्ञताज्ञानस्य वशेन अप-र्य्यन्तगोचरं भवत्रयेषु परिभ्रमणहेतुभूतानां रागादीनामन्यतरपापस्या-प्यभावे तं महासत्त्व यूयं केन कारणेन तस्मादासनान्नेप्यथ इति। स एवमुक्त्वा क्रोधेर्प्याभिभूतो मारघोषणामघोषयच्च । अनेकप्रकारां मारसेनाश्चाभिनिर्म्मापयामास । स तु निष्करुणहृदयो रागद्वेषमोहे-र्प्याभि. समन्वागतः परमदारुणो मारसैन्यमामन्त्रयत् । मारिषाः! अधः अवीचित आपरिभवाग्रात्तिर्य्यक्चापर्य्यन्तासु लोकधातुषु सिद्धा-र्थेन सदृश उत्तमपुरुषो नास्ति। स पुरुषसिंहः। तस्मात्तेन समं स-म्मुखं युद्धं कर्त्तुं न शक्ष्यामः। एकेन पार्श्वेन युद्धं दर्शयाम इति। उत्तरपार्श्वेन मारसेनाया गमनं व्यचारयत्।

स पापीयान् मारः पुनरपि एवमब्रवीत्। भो! भो! यूयं यथामति यथाशक्ति नानायुधा नानाशरीरा नानावर्णा नानासंस्थाना नाना-मुखा भूत्वा तस्य पर्य्यङ्कादुत्थाय पलायनार्थे व्यायामं कुरुतेति सम-न्ताद्योजनशतसहस्रं स्फुरित्वा मारपादः तस्थौ। तेषु च सैनिकेषु केचिन्नी-लशरीरा रक्तमुखाः केचिद्रक्तशरीरा नीलमुखाः केचिच्छ्वेतशरीराः पीत-मुखाः केचित्पीतशरीराः श्वेतमुखाः केचिन्कर्बुरशरीराः कृष्णमुखाः के-चित् कृष्णशरीराः कर्बुरमुखाः केचिन्नीलशरीराः श्वेतमुखाः केचिच्छ्वेत-शरीराः नीलमुखाः केचिच्छ्वेतशरीराः कृष्णमुखाः केचित् कृष्ण-शरीराः श्वेतमुखाः केचिदुपरिकायान्नागशरीरा अध.कायान्मनुष्य-शरीराः केचिदध.कायान्नागशरीरा उपरिकायान्मनुष्यशरीराः केचि-दधःकायात्सुपर्णशरीरा उपरिकायान्नागाः केचिदध.कायाद्व्याघ्रशरीरा

उपरिकायाद्वृषभाः केचिदधःकायाद्वृषभा उपरिकायाद्व्याघ्रशरीराः केचिदधःकायाद्वारणशरीरा उपरिकायाद्धयाः केचिदधःकायाद्धयशरीरा उपरिकायाद्वारणशरीराः केचिदधःकायात्सिंहशरीरा उपरिकायान्महिषशरीराः केचिदधःकायाद्गृध्रशरीरा उपरिकायात् काकशरीराः केचिदधःकायात् काकशरीरा उपरिकायाद्गृध्रशरीराश्च बभूवुः ।

केषांचिद्दक्षिणकर्णच्छिद्रं प्रविष्टा घोराः सर्पा वामकर्णच्छिद्रान्निष्क्रम्य फणां कृत्वा तस्थुः । तथा वामकर्णछिद्रात् । केषांचिद्दक्षिणाक्षिप्रविष्टा घोराः सर्पा वामाक्ष्णो निष्क्रम्य फणां कृत्वा तस्थुः । तथा वामाक्ष्णः । केषांचिद्दक्षिणनासिकाछिद्रं प्रविष्टा घोराः सर्पाः वामनासिकाच्छिद्रान्निष्क्रम्य फणां कृत्वा तस्थुः। तथा वामनासिकाछिद्रात् । केषांचिन्मुखं प्रविष्टा घोराः सर्पा मूर्ध्नो निष्क्रम्य फणां कृत्वा तस्थुः । तथा मूर्ध्नः । केषांचिन्नाभेः प्रविष्टा घोराः सर्पा उदरान्निष्क्रम्य फणां कृत्वा तस्थुः । तथोदरात् । केषांचिद्दक्षिणहस्तं वेष्टयन्तो नागाः जानुमस्तके फणां कृत्वा तस्थुः । तथा वामहस्तम् । एवमपि ग्रीवोरस्तलोदरकटिबाह्वादिषु वेष्टिता वृश्चिकजलव्यालडुण्डुभाऽजगरादयोपि द्रष्टव्याः । नितरां दीप्ताग्निसदृशबहिर्निष्क्रान्तपिङ्गललोचनाः खरकूर्चभ्रुवः श्मश्रुविप्रकीर्णमुखा भुग्ननासास्तीव्रदीर्घनखास्ताम्रवर्णलोमानो दुःसंस्थाना विवर्णकेशा विकच्छकप्ररूढदारुणविरूपप्रभा नानायुधहस्ता गव्यूत्युद्गतशरीरा द्वियोजनोद्गतशरीरास्त्रियोजनोद्गतशरीराश्च । योजनसहस्रात्प्रभृति पृथिव्युन्दनमेघाशनिध्वनिरिव च चक्रवालोध्दतमहासमुद्रनिर्घोषाभिभवनतुमुलनिर्घोषाश्चाभवन् । अपरचक्रवालाद्रिं भित्त्वा इदं चक्रवालं मर्दितुमागच्छन्त इतरचक्रवालसमुद्रघोषा इव सकलोर्व्वीं परिमर्दितुमागच्छन्तः पर्वतघटा इव च मारसेना महाबोधिमण्डमवस्तृणत्य इवागच्छन्ति स्म ।

अथ पापीयान् मार एवं विचारितसेनायाः गमनं सज्जीकृत्य पञ्चाशदधिकयोजनशतमूर्द्धानं गिरिमेखलं नाम कुञ्जरवरमभिरुरोह । निर्म्मितैर्बाहुसहस्रैरसिच्छुरिकाधनुःशरलिप्तकतोमरशङ्कुभिन्दिपाल-फलककुन्तचक्रशङ्खकुशगदापाषाणाद्दिपाशमुरलाङ्कलपरशुत्रिशूलादि-भेदानि नानायुधानि गृहीतानि । पुरतः षट्त्रिंशद्योजनाः सेनाः पश्चिमचक्रवालपर्य्यन्तं अभूवन् । ते मारकिङ्कराः सिद्धार्थकुमारं गृह्णीत बध्नीत हत नाशयत विध्यत उत्त्रासयत तस्य हृदयं मर्द्दयत उरः फालयत पदयोर्गृहीत्वा परमसमुद्रे क्षिपतेति आज्ञापयन्त एवा-सेदुः । भूमावपि अनेकानि रुद्राणि अनिष्टाणि दुर्निमित्तानि प्रादुर्भूतानि । एवमनेकेषु दुर्निमित्तेषु पापीयान् मार आगत्य बोधिमण्डं प्रवेष्टुमसमर्थो दूरे तस्थौ । मारसेनाः समन्तात्परिवारया-मासुः । ततः स्वां सेनामवलोक्य एत गृह्णीत इत्याघयदत् । प्रज्ज्वलितमयोमयपिण्डं मक्षिकेव बोधिमण्डं प्रवेष्टुं समर्थो नाम नाभूत् ।

तत्क्षणे छत्रवेशं गृहीत्वा बोधिसत्त्वं परिवृत्य स्थिता दशसहस्र-चक्रवालेषु देवताः मारनिर्घोषं श्रुत्वा उत्तरां दिशां विलोकयामासुः । तत्क्षणे आगच्छन्तीं मारसेनां दृष्ट्वा मार आगत इति ज्ञात्वा भीता-स्त्रस्ताः सम्मुखस्थानादेव बोधिसत्वमेकमेव विहाय पलायामासुः । पुरुहूतो विजयोत्तरं नाम शङ्खं पृष्ठतः कृत्वा पलायिष्ट । महाकालो नाम नागराजो पञ्चशतयोजनं माञ्जेरिकं नाम नागभवनं गत्वा श्रीगर्भं प्रविश्य उभाभ्यां हस्ताभ्यां मुखं प्रच्छाद्य न्यपद्यत । विभु-रपि श्वेतच्छत्रमग्रे गृहीत्वा ब्रह्मभवनमगच्छत् । तदापि शेषा देवाः स्थातुं समर्था नाभवन् । महासत्त्वः शून्ये विमाने ब्रह्मा इव एक एव निषसाद । महासत्त्वः सर्व्वेषां देवानां पलायितत्वान्निःशब्दं

शून्यं प्रदेशमवलोक्य पुनरुत्तरां दिशां व्यलोकयत् । बोधिमण्डमवस्तृणतीमिव आयान्तीं मारसेनां दृष्ट्वा एवं चिन्तयामास । इमे एतावन्तो जनाः मामेकं सन्धाय महान्तं व्यायामं कुर्व्वन्ति । अस्मिंस्तु स्थाने मत्सहायो भूत्वा मारसेनाभिः सार्द्धं युध्यमानः पिता वा भ्राता वा नास्ति । देवा अपि पलायिताः । विना दशपारमीः नान्यन्मम शरणमस्ति ।

अथ महासत्त्वस्तस्यां वेलायां दशपारमीरनुस्मरन्नेवमाह स । आयान्तु इह भवत्यो दानशीलनैष्कर्म्यप्रज्ञावीर्य्यक्षान्तिसत्याधिष्ठानमैत्र्युपेक्षाः । युद्धाय युष्माकमायुधानि गृह्णीतेति । अथ समत्रिंशत् पारम्यो योधपुरुषा इव समभ्युपेत्य अर्थादेवं दिदिशुः । देव! त्वया धनधान्यराज्यपुत्रभार्य्यामांसशोणिततयनप्रदानाद्वयं चिरात्परिपालिताः । तस्मात्त्वदर्थं प्राणान् परित्यज्य मारेण समं योत्स्यामह इति । अथ समत्रिंशत्पारमीयोधा बोधिसत्त्वं परिवृत्य तस्थुः । ततो बोधिसत्त्वस्य श्रद्धाबलं वीर्य्यबलं स्मृतिबलं समाधिबलं प्रज्ञाबलं ह्रीबलमपत्रपाबलञ्चेति सप्तविधा योधपुरुषाः समभिगम्य देव! त्वया चिराद्वयं पोषिता अन्नपानवस्त्राभरणहस्त्यश्वरथप्रदानात् । तस्मात् अस्माकं कार्य्यं पश्य इति भाषमाणा इव बोधिसत्त्वस्य पुरस्तात्तस्थुः । बोधिसत्त्वो हि स्वानां पारमीयोधानां तद्वचनं समाकर्ण्य साधु पश्यामीति वदन्निव दृढवीर्य्यहस्तिनमभिरुह्य शीलपारमीपृथिव्यां प्रतिष्ठाय प्रज्ञापारमीकृपाणं श्रद्धाहस्तेन गृहीत्वा शेषपारमीः फलकं कृत्वा पर्य्यङ्कादनुत्थाय मारसैन्यं विध्वंसितुमर्हतीति चिन्तयामास । ततः स बोधिसत्त्वः पारमीयोधानुपरि क्षिपन् पुरस्तादभिमुखश्चतुरङ्गसमन्वागतं मैत्र्यादिकर्म्मस्थानं पुरःसरं कृत्वा वीर्य्याधिष्ठानमधिष्ठाय निर्भीको निषसाद ।

तदा मारो निर्भयं निषण्णं बोधिसत्त्वमवलोक्य क्रोधज्वलितनयनः क्रूरपारुष्यवचनैः स्वां सेनामाज्ञापयन् सत्वरमुपयात इमं हत इमं बध्नीत इमं विध्यतेत्यब्रवीत् । अथ ते मारकिङ्करगणाः नानाविधगजतुरङ्गमृगसिंहखड्गव्याघ्रशार्दूलतरक्षुमहूकमहिषवराहशृगालध्वबकबलाकध्वाङ्क्षवायसारात्युलूकपारावतकपोतश्येनगृध्रनकुला बोधिसत्त्वं परिवृत्य सन्तर्जयामासुः । अपरे तोमरतरुपाषाणमुसलहस्ता ज्वलितकेशा अन्तरिक्षे स्थिता बोधिसत्त्वं सन्तर्ज्जयामासुः । एवं मारः सपरिवारो महासत्त्वे भयमुत्पादयितुमशक्नुवन् क्रोधाभिभूतो नवविधां महावृष्टिं वर्षयितुमचिन्तयत् ।

अथ मारः अर्द्धयोजनद्वियोजनत्रियोजनप्रमाणानां पर्वतकूटानां प्रचलनसमर्थां पूर्वदिशादिप्रभेदां वातवृष्टिञ्च तथा वन्यानां वृक्षाणामुपरिगतां महामेघप्रवृत्तपङ्कवृष्टिधाराया वेगेन पृथिवीं छिद्रमयीं कुर्वाणामिव भीषणां क्षारवृष्टिञ्च धूमायन्तीं प्रज्वलन्तीमन्तरिक्षेण गच्छन्तीं महतीं दारुणपाषाणवृष्टिञ्च धूमायन्तीं प्रज्वलन्तीमेकधारोभयतोधारादिप्रभेदामतितीक्ष्णखड्गधनुः शरतोमरादिप्रहरणवृष्टिञ्च विगतधूमजालां रक्तस्फटिकमणिप्रतिभागां पलाशकुसुमवर्णप्रभासमुज्वलामङ्गारवृष्टिञ्च अत्युष्णवह्निप्रभानिर्गतभस्मसदृशीमतिदारुणतेजस्विनीं भस्मवृष्टिञ्च अतिसूक्ष्मां धूमायन्तीं वालुकावृष्टिञ्च धूमायन्तीं पङ्कवृष्टिञ्च चतुरङ्गसमन्वागतां भीषणामन्धकारवृष्टिं चेति नवविधां वृष्टिं समुदस्थापयत् । तानि नव लोकोत्तरधर्म्माणां प्रतिभागनिमित्तं दर्शयन्तीव बोधिसत्त्वस्यानुभावेन दिव्यकुसुममालादामसुगन्धकर्द्दमचन्दनचूर्णादिभावं प्रतिपद्यान्तर्हितानि । अथ मारोप्याभिर्नवविधाभिर्वृष्टिभिर्बोधिसत्त्वं पलाययितुमशक्नुवन् यूयं कस्मात्तिष्ठत इमं सिद्धार्थकुमारं गृह्णीत धावयत पलाययतेति सेनामाज्ञापयत् । मारोपि

पुनर्बोधिसत्त्वं प्रोवाच । सिद्धार्थ! त्वं कस्मान्मय्यायत्ते आसने निषण्णोसि अस्मादासनादुत्तिष्ठ । नोचेत्तव हृदयं विदारयामीति । अथ स बोधिसत्त्वः पादमूले क्रीडन्तं तरुणं पुत्रमवलोकयन्निव पिता मैत्रीमान् दयालुर्मारमवलोकयामास ।

एवं स मैत्रीकोष्ठकं बध्वा निषण्णः सिंहनादं ननाद । अयं पापीयान् मारो महासभावं न जानाति । अहं हि सकललोकानां ज्येष्ठोऽस्मि । अनन्तेषु लोकधातुषु सर्व्वैः कृतानि सर्व्वसुकृतानि मामेकं प्राप्य षोडशीं कलां नार्हन्ति । अहं हि पुरा तिर्य्यक् शशो भूत्वा समीपागतमेकमर्थिनं दृष्ट्वा स्वं मांसं विपच्य दातुं महति प्रज्वलति वह्नौ न्यपतम् । को हि ईदृशं दुष्करं कार्य्यं कर्तुं समर्थोऽस्ति । एवं प्राक्तनसञ्चितैरनन्तसुकृतैः सिद्धमिमं देहं यथाभूतमजानन्नेष मारो मां मनुष्य इति जानाति । नाहं मनुष्यः । न अमनुष्यः । न ब्रह्मा । न देवः । अहं हि सर्व्वेभ्यो जगद्भ्यो जरामरणं दर्शयितुमिहागतो लोकैरनुपलिप्तः अनन्तजिनः । बोधिद्रुममूले सम्बुद्धो भूत्वा बहुं जनतां संसारात् तारयिष्यामीति ।

अथ मारो बोधिसत्त्वस्य सुकृतपारगतं भावं श्रुत्वा क्रोधमसहिष्णुः स्वयं गिरिमेखलं नाम गजपतिमारुह्य चक्रायुधं गृहीत्वा बोधिसत्त्वं समुपागच्छत् । अभाषत चैवम् । भोः सिद्धार्थ! त्वमेतस्मात्पर्य्यङ्कान्नोत्तिष्ठसि । कस्मादत्र निषण्णोसि । नायं पर्य्यङ्कस्तवानुरूपः एष पर्य्यङ्को ममानुरूपः । त्वं न स्मृतिमान् । अहं तु स्मृतिमान् । त्वं दुर्बलः । अहं बलवान् । त्वमनीश्वरः । अहमीश्वरः । त्वमनभिभूः । अहमभिभूः । तस्मान्ममार्थमेव अयं पर्य्यङ्क उत्पन्नः । न तवार्थमिति ।

वियुक्त आत्मभावो मारेण दूषित इति नेति विलोकयामासुः । अथ बोधिसत्त्वो मार! त्वया अस्य पर्यङ्कस्य हेतुभूतस्य कुशलकर्मणः कृतभावे कस्तव साक्षीत्यवोचत् । मारः—सिद्धार्थ! नैकः न द्वौ एते सर्वे जनाः साक्षिण इति सेनाभिमुखं हस्तं प्रसारयामास । तस्मिन् क्षणे मारपरिच्छदा देव! अहं साक्षी अहं साक्षीति महीविभेदसदृशं महान्तं शब्दमुद्धारयामासुः । अथ मार उवाच । इमे तावन्मम साक्षिणः । सिद्धार्थ! कस्तव साक्षीति । बोधिसत्त्वो ममास्मिन्स्थाने सचेतना साक्षिणो न सन्ति । अनया विचेतनया पृथिव्या साक्ष्यं कारयिष्यामीति । बोधिसत्त्वः साक्षिणं दर्शयन्नेवमब्रवीत् । अयं पर्य्यङ्को ममार्थमुत्पन्नः । भावे किमन्येन साक्षिणा । मदीदृश्या दाने कम्पिता इयं पृथिवी साक्षीभवति इति । स च मार! मयाऽमुं पर्य्यङ्कं साधयमानेन संसारे अपरिमाणासु जातिषु अदत्तं नाम दानं नास्ति । अरक्षितं शीलं नाम नास्ति । विहाय चान्यान्येकस्मिन्नेव विश्वान्तरात्मभावे महादेवीदानप्रमुखं कृत्वा सप्तवारं कम्पिता इयं पृथिवी इदानीं मय्यस्मिन् पर्य्यङ्के सर्वलोकविजयार्थं निषण्णे मारसेनायामुत्पन्नयुद्धे वर्त्तमाने कस्मात्तूष्णीम्भूता । मारः स्वया सेनया कलकलशब्दमकारयत् । इयं महोर्वी तव वचनं प्रवेशयमानापि चेतनापि सहसा ममैव साक्षीभवत्विति रक्ताम्बुधरगर्भाभ्यन्तराद्विप्रकाशमानसौवर्णविद्युल्लतेव शीतलगर्भान्तरात्मयान्तवर्णरक्तनखराजितं परिस्फारमहस्तं चक्राङ्कितं दक्षिणहस्तं निर्हृत्य पृथिव्यभिमुखं कृत्वा अब्रवीत् भो! अवनि! मया समत्रिंशत्पारमीः पूरयता विश्वान्तरात्मभावे स्थित्वा पुत्रदारपरित्यागं कृत्वा सप्तशतमहादानानि दत्तान्यपि स्वयं वा आत्मना वा साक्षिणः कृता न सन्ति । भो! अवनि! इदानीं त्वं कस्मात्तूष्णीं भवसीति ।

तदा भूसुन्दरी बोधिसत्त्वस्य पारमितासम्भारानुभावान्निश्चलं स्थातुमशक्नुवती स्वतलादुद्धृत्य महिलाविलासेन बोधिसत्त्वस्याग्रे स्थित्वा तात महापुरुष अहं तव पारमितासम्भारं जानामि । तव दक्षिणोदकैर्ममकेशाः प्रवहन्ति । इदानीं परिवर्तयिष्यामीति वदन्ती सपदि स्वान् केशान् परिवर्तयामास । तस्याः केशतो गङ्गोदकवत्स्रोतः प्रावर्तत । अथ ताः मारसेनास्तत्र स्थातुमशक्नुवत्यः पलायामासुः । गिरिमेखलो नाम करी प्रस्खलितपादः पपात । स च आसमुद्रान्तं प्रविवेश । छत्रध्वजचामरादीनि चूर्णविचूर्णान्यभवन् । मारस्तदाश्चर्य्यमवलोक्य विस्मयमापन्नो बभूव । तस्मिन् क्षणे इयं वसुन्धरा कुलालचक्रमिव भ्रमन्ती महारावमकरोत् । महीयासं शब्दं श्रुत्वा अन्तरिक्षे मेघध्वनिरिव महानादो बभूव । सप्तकूटशिलोच्चया अपि महारावमरुवन् । सकलचक्रवालगर्भो वह्निना प्रदीप्तमरण्यमिव महानादं विदधौ । तप्तकपाले क्षिप्ता व्रीहिलाजा इव सकलगगनतले देवदुन्दुभयो नेदुः । प्रदीप्ताङ्गारवह्निस्फुरन्त्योऽशनयः प्रपतन्तिस्म । तयोः पृथिव्यन्तरिक्षयोरन्तर्गतो मारो दुर्बलः अशरणस्त्रस्तः महाभयप्राप्तः स्वमपाविर्य्यं प्रकाशयन् सञ्जातसंवेगः अहो दानस्य विशेषः अहो दानस्य विपाकः अहो सिद्धार्थकुमारस्य महर्द्धिः अहो प्रार्थनासमृद्धिः इति प्रशस्य प्रसादस्फुरितहृदयः सर्वाणि आयुधानि परित्यज्य बाहुसहस्रमपि सम्मृज्य नंस्यन् सविनयं प्रोवाच ।

नमस्ते पुरुषश्रेष्ठ! नमस्ते पुरुषोत्तम! ।  
सत्यमेव हि लोकेऽस्मिन्नास्ति त्वत्सदृशः पुमान् ॥  
त्वञ्च बुद्धस्त्वञ्च शास्ता त्वञ्च माराभिभूर्मुनिः ।  
त्वमप्यनुशयांश्छित्वा तीर्णः सन्तारय प्रजाः ॥

नाम देवपुत्रो वीणां वादयंस्तस्थौ । चत्वारो लोकपालाश्चतुर्षु दिक्षु तस्थुः । अष्टाविंशतिर्यक्षसेनापतयः समन्तात् खड्गहस्तास्तस्थुः । षट्त्रिंशद्देवकुमार्य्यः सुवर्णरजतप्रवालादीनां समुद्गान् पूरयित्वा दिव्यैः कुसुमैः पूजयमाना वियति तस्थुः । सुयामो नाम देवपुत्रः सुवर्णदण्ड-चामरादिभिर्वीजयंस्तस्थौ । सन्तुषितो नाम देवपुत्रस्तालवृन्तं गृहीत्वा तस्थौ । शेषा देवा नानाविधान्यभिषेकोपकरणानि गृहीत्वा तस्थुः । सकलेषु दशसहस्रचक्रवालेषु देवा उत्सववेशं गृहीत्वा यावदकनिष्ठ-ब्रह्मलोकान्नैरन्तर्य्येण तस्थुः ।

इत्थं सवितरि अनस्तमित एव बोधिसत्त्वः ससैन्यं मारं विद्राव्य मरूद्भैर्बोधिद्रुमाङ्कुरैः पूज्यमानः प्रथमयामे सम्प्राप्त एव अष्टसमापत्तीर्निर्वर्तयामास । स तु पुनरभिज्ञाबलेन पूर्वनिवासमनुस्मर्त्तुमारेभे । स चानुस्मरन् प्रतिलोमात्पश्चिमासनतः प्रभृति सस्मार । कथम् । इदं स्थानं कुत आगतोस्मीत्युपपरीक्षमाणो नैरञ्जनायास्तीरादा-गतोस्मीत्यद्राक्षीत् । तत् स्थानं क्षीरपायसप्रतिगृहीतस्थानात् । तत् स्थानं पञ्चमहास्वप्नदृष्टस्थानात् । तत् स्थानमाहारपरिभुक्तस्थानात् । तत् स्थानं प्रधानभूमावुद्दकरामपुत्रसमयावबोधात् । तत् स्थानमा-लारकालामसमयावबोधात् । तत् स्थानं राज्ञो बिम्बिसारस्य प्रतिज्ञा-दत्तस्थानात् । तत् स्थानमनुप्रियाख्याम्रवनात् । तत् स्थानमनोमाया नद्यास्तीरे प्रव्रजितस्थानात् । तत् स्थानं कपिलवस्तुनगरात् । तत् स्थानं लुम्बिनीवने जातस्थानात् । तत् स्थानं मातृगर्भात् । तत् स्थानं प्रतिसन्धिग्रहणस्थानात् । तत् स्थानं तुषितपुरात् । तत् स्थानं विश्वन्तरात्मभावात् । तत् स्थानं पारमितः । तत् स्थानं भगवतो दीपङ्करस्य पादमूले अभिनिर्हारकृतस्थानादागतोस्मीति । एवं कल्पशतसहस्राधिकेषु चतुर्ष्वऽसङ्ख्येषु कालेषु तेषु तेष्वाऽत्म-

भावेषु योनिषु गतिषु विज्ञानस्थितिषु पूर्वमतीतन्युषितस्कन्धसन्तानांश्चानुस्मरंस्तत्सम्प्रयुक्तं तदालम्बनं पूर्वनिवासानुस्मृतिज्ञानं समुत्पादयामास ।

स एवमनुस्मरंश्चानेकविधं पूर्वनिवासं सस्मार । कथम् । एकामपि जातिम् । द्वे अपि जाती । तिस्रोपि जातीः । चतस्रोपि जातीः पञ्चापि जातीः । दशापि जातीः । विंशतिमपि जातीः । पञ्चाशदपि जातीः । जातिशतम् । जातिसहस्रम् । अनेकान्यपि जातिसहस्राणि । अमुत्रासमेवं नामा । एवंवर्णः । एवंगोत्रः । एवमाहारः । एवं सुखःदुखे प्रतिसमविन्दन् । एवमायुःपर्य्यन्तः । सोहमिहोत्पन्नः । इति साकारं सोद्देशमनेकविधं पूर्व्वनिवासमनुस्मार । एवं बोधिसत्त्वः प्रथमे यामे पूर्वनिवासं सस्मार । मध्यमे यामे दिव्यं श्रोत्रं विशोध्य प्रत्यूषे आचीर्णे प्रत्ययाकारे ज्ञानमवतार्य प्रतीत्यसमुत्पादं सममृशत् । कथम् । अविद्याप्रत्ययात् संस्कारः । संस्कारप्रत्ययाद्विज्ञानम् । विज्ञानप्रत्ययान्नामरूपे । नामरूपप्रत्ययात् षडायतनानि । षडायतनप्रत्ययात् स्पर्शः । स्पर्शप्रत्ययाद्वेदनाः । वेदनाप्रत्ययात्तृष्णा । तृष्णाप्रत्ययादुपादानम् । उपादानप्रत्ययाद्भवः । भवप्रत्ययाज्जातिःजातिप्रत्ययाज्जरामरणशोकपरिदेवनदुःखदौर्मनस्यो–पायासाः सम्भवन्ति । एवं बोधिसत्त्वः प्रतीत्यसमुत्पादमनुलोमतः सममृशत् । कथं प्रतिलोमतः सममृशच्च ? । इमे जरामरणे असंस्कृते भवतः । परं निर्वृत्ताः स्कन्धा जीर्णा भिद्यन्ते । तस्माज्जात्यां सत्यां जरामरणे भवत इति समम्यैक्षत । जातिर्हि किम्प्रभवा किन्निदाना किंहेतुरिति । कामरूपारूपभवेषु कर्म्मणा निर्वृत्ता । भवे सति जातिर्भवतीत्यद्राक्षीत् । भवो हि किम्प्रभवः किन्निदानः किं हेतुरिति । कामरूपारूपभवेषु उपादानेन निर्वृत्तः । उपादाने सति भवः भस्तीत्यद्राक्षीत् । कामदृष्टिशीलव्रतात्मवादोपादानेषु चतुर्विधेषु

सत्सु भवश्चासीदिति सम्प्रैक्षत। उपादानं हि किम्प्रभवं किन्निदानं किंहेत्विति। रूपशब्दगन्धरसप्रष्टव्यधर्म्मतृष्णासु सतीषु भवतीत्यद्राक्षीत्। तृष्णा हि किम्प्रभवा किन्निदाना किं हेतुरिति। रूपादिषु नानालम्बनेषु त्रिविधायां वेदनायां सत्यां तृष्णा भवतीत्यऽद्राक्षीत्। वेदना हि किम्प्रभवा किन्निदाना किं हेतुरिति। चक्षुः स्पर्शादौ सति वेदना भवतीत्यद्राक्षीत्। स्पर्शो हि किम्प्रभवः किन्निदानः किं हेतुरिति। चक्षुरायतनादिषु षट्स्वायतनेषु सत्सु स्पर्शो भवतीत्यद्राक्षीत्। षडायतनं हि किम्प्रभवं किन्निदानं किंहेत्विति। चतुर्महाभूतयोर्नामरूपयोः सतोः षडायतनं भवतीत्यद्राक्षीत्। नामरूपे हि किम्प्रभवे किन्निदाने किं हेतुनी इति। कुशलाकुशलेषु विपाकेषु चतुर्षु योनिषु पञ्चगतिषु नवसत्त्वावासेषु सप्तविज्ञानस्थितिषु सत्सु नामरूपे भवत इत्यद्राक्षीत्। विज्ञानं हि किम्प्रभवं किन्निदानं किं हेत्विति। कायवाङ्मनःसंस्कारेषु सत्सु विज्ञानं भवतीत्यद्राक्षीत्। संस्कारा हि किम्प्रभवाः किन्निदानाः किं हेतव इति। अविद्याप्रभवाः अविद्यानिदानाः अविद्या हेतवः। अविद्याप्रत्ययात् संस्कारा भवन्तीत्यद्राक्षीत्। एवं बोधिसत्त्वः प्रतीत्यसमुत्पादं प्रतिलोमतोपि समसृक्षत्। इत्थं त्रयोध्वं त्रिसन्धिं चतुःसंक्षेपं विंशदाकारं प्रतीत्यसमुत्पादं सममृशच्च। स च बोधिसत्त्वः प्रत्यूषे समुद्गत एवारुणे अनेकेष्वाश्चर्याद्भुतसहस्रेषु सर्वज्ञताज्ञानं प्रतिबुध्य बुद्धसिंहनादं ननाद।

अनेकजात्यां संसारे सन्धावियमनिर्विशम्।
गृहकारकं गवेषंश्च दुःखा जातीः पुनःपुनः।
गृहकारको दृष्टोऽमूः पुनर्गेहं न करिष्यसि॥
सर्वा ते पाशुका भग्ना गृहकूटं विसंस्कृतम्।
विसंस्कारगतं चित्तं तृष्णानां क्षयमध्यगम्॥

अस्यार्थः—पुनः पुनर्जननं दुःखम् । अहं हि संसारे अनेकासु जातिष्वस्य स्कन्धपुञ्जगृहस्य कारकं गवेषयन् सम्बोधिज्ञानमप्रविश्य भवगतिवशेन समधावम् । मया तृष्णागृहकारको दृष्ट आसीः । त्वं पुनर्मच्छरीरगेहं न करिष्यसि । तव सर्वाणि गृहोपकरणानि भग्नानि । गृहकर्णिका च विसंस्कृता । मच्चितं निर्वृतिविसंस्कारं गतम् । अहं तृष्णाक्षयमर्हत्फलविमुक्तिं समभ्यगामिति ।

इत्थं स भगवान् गौतमः सिंहनादं नदित्वा एवमचिन्तयत् । मया कल्पशतसहस्राधिकानि चत्वारि असंख्येयानि अङ्गमांसरुधिरजीवितधनपुत्रदारपरित्यागादस्य च वरपर्य्यङ्कस्य हेतुतः पञ्चशताधिकान्सहस्रक्लेशान् क्षिप्त्वा इदञ्च लोकोत्तरधर्म्मं प्रतिलब्धमिति । तस्मिन् क्षणे इयं महोर्व्वी अयोदण्डेन महतकांस्यतालइव रावशतं रावसहस्रं रावशतसहस्रं विमुञ्चन्ती ननाद । समकम्पत च । तदनन्तरं समक्षुभ्यन्मही नदीजलवस्त्रपरिच्छादिता वेलायतजघना वनस्पतिमुकुटविराजितमूर्द्धप्रदेशा प्रमोदजनितनृत्यारम्भेव । क्षोभितायां मह्यां विविधमत्स्यतिमितिमिङ्गिलमकरादिविचरिततुमुलप्रचण्डभुजङ्गपतिनिवाससम्भूतः परमभीषणवातजालमुत्तुङ्गतरतरङ्गश्रेणीसमाकीर्णो विविधविचित्रमहार्घरत्नसमूहोपशोभितो महासमुद्रोऽपि अक्षुभ्यत् । संक्षुब्धे च मकरालये सप्तरत्नसमुज्ज्वलितमाणिक्यप्रभानिरन्तरविभूषितो महाश्चर्य्योद्भुतदिव्यविमानविविधविचित्रफलपुष्पपल्लवतालितलम्बितविकसितकुसुममालासञ्चितपृथुललिततरवरजलवासितजलधरदिव्योद्यानभ्राजितो महामेरुः सुसेवितत्तरुणः कोमलवेत्राङ्कुर इव ननाम ।

सद्यः क्षणिकवर्षमवर्षत् । कुसमवृष्टिः प्रापतत् । उपशेमुर्दहनाः । न ववुश्च मारुताः । विचकाशिरे च पुष्पाणि पुष्करिणीषु । न प्रावहंश्च पञ्च

वर्णैः कुसुमैर्व्यभ्राजन्त च नद्यः। नेदुर्वारणाः। नेदुः सिंहाः। समन्हेषंश्च तुरङ्गमाः। समैक्षन्तान्धाः। शुश्रुवुर्बधिराः। लेपुश्च मूकाः। कुब्जा ऋजुगात्रा अभवन्। जग्मुः पदाभ्यां पङ्गवः। भेजुः सौहार्दं नित्यवैरिणः। नामवर्द्धीतिः सत्त्वानाम्। व्युपशेमुश्च वियोगशोकाः। विजग्मतुः सपदि सुरयुत्पती। विदधुश्च परस्परमैत्रीचित्तं सर्वे जनाः। निववरुर्नरकामयः। शुष्काश्च क्षारनद्यः। उपशेमुर्वैतरिणीः। पपात शिम्बली। बभञ्जलोहकुम्भी। बभञ्ज कालसूत्रः। चिच्छिदुःशृङ्खलाः। चिच्छिदुश्च काराः। व्युपशेमुः प्रेतविषयेषु क्षुत्पिपासाः। नाभवत्तिरश्चां भीतिः। व्युपाशमीत्सर्वेषां सत्वानां क्लेशाग्निः। अभवंश्च सर्वे सत्वाः प्रियवादिनः। उपागमन्स्वं विषयं परविषयगता जनाः। समज्वलन्विविधरत्नाभरणनिकराः। अभवच्च लवणजलं मधुरम्। मुमुचुः सर्वाणि तूर्याणि स्वं स्वं निनादम्। अरुवन्मनुष्याणां हस्तोपगग्रीवोपगानि अघर्षितानि नानाभरणानि। अभवन् कुसुमाकीर्णा दिशः। ववृपुरकालमेघाः। अजूघुषन् सुरदुन्दुभयः। अजपन्मन्त्रम् पितराः। वादयामासुर्गन्धर्वाः। जगुश्च किन्नरकिन्नर्य्यः। ननृतुः सुरसुन्दर्य्यः। अपूजयन्नमानयंश्च शास्तारं देवाः। अधमच्छङ्खमिन्द्रः। दधुः सर्वे फलोपगा वृक्षाः फलानि च पुष्पोपगा वृक्षाः पुष्पाणि च। अवलम्बिरे मूरुहाग्रस्थितेषु पत्रेषु पत्रपद्मानि शाखासु शाखापद्मानि अङ्कुरेष्वङ्कुरपद्मानि स्कन्धेषु स्कन्धपद्मानि मूलेषु मूलपद्मानि च। अवलम्बिरे लतासु लतापद्मानि अन्तरिक्षेऽवलम्बकपद्मानि। शैलेषु फुलपद्मानि। अभवच्च महासमुद्रः समाकीर्णः पञ्चवर्णैर्नीलोत्पलैः। अभवन् सकलदशदिशश्च सहसचक्रवालाश्च तत्र तत्र निबद्धमालादामा विस्यन्दमालाविप्रकीर्णनानावर्णकुसुमसमुज्ज्वला नन्दनवन चित्रलतावनमिश्रकवनपारुपकवनानीव।

प्राचीनचक्रवालमूर्ध्नि उच्छ्रितध्वजाः पश्चिमचक्रवालमूर्ध्नि अभिहन्यन्ते। पश्चिमचक्रवालमूर्ध्नि उच्छ्रितध्वजाः प्राचीनचक्रवालमूर्ध्नि अभिहन्यन्ते। दक्षिणचक्रवालमूर्ध्नि उच्छ्रितध्वजा उत्तरचक्रवालमूर्ध्नि अभिहन्यन्ते। उत्तरचक्रवालमूर्ध्नि उच्छ्रितध्वजा दक्षिणचक्रवालमूर्ध्नि अभिहन्यन्ते। एवं परस्परं चक्रवालाः श्रीविभूतिसम्पन्नाश्चाभूवन्। विरेजुर्दिवा तारानिकराः। न ययुः पक्षिणः वियति। धेनवो वत्ससहिताः। तोयावासः कुसुमभरितः। दधुः सत्कारभाराः परस्परम्। परस्परं संसर्गिणो देवासुरनागसुपर्णगन्धर्वकिन्नरयक्षसिद्धविद्याधरसुरपतयो भगवतो गौतमस्य दर्शने व्यापृता अभवन्। स भगवान् गौतमः सार्द्धं महदाश्चर्याद्भुतैः अरुणोद्गमनसमनन्तरमेव दशबलचतुर्वैशारद्यादि विविधगुणगणप्रदायकं सर्वज्ञताज्ञानं समभ्यगात्।

तदाऽधस्तात् पृथिवीतलाद्यावद्ब्रह्मलोकादेककोलाहलोऽभूत्। दशापि देवा विंशतिरपि देवाः त्रिंशदपि देवाः चत्वारिंशदपि देवाः पञ्चाशदपि देवाः सहस्रमपि देवाः शतसहस्रमपि देवाः अनेककोटिशतसहस्रमपि देवा अणुपरमाणुवत् सूक्ष्मशरीराणि निर्माय दशसहस्रचक्रवालेभ्य आगत्य अस्मिन्नेव चक्रवाले समन्वपानातुः। अपरेऽपि ऋद्धिमन्तो महानुभावा देवगणा भगवतो गौतमस्य दर्शनार्थं पूजनार्थं वन्दनार्थं सत्कारार्थं इत्थमेव एकचक्रवाले समन्वयुः। यथाक्रमं देवानामन्तरे यक्षास्तस्थुः। यक्षाणामन्तरे गन्धर्वास्तस्थुः। गन्धर्वाणामन्तरे नागास्तस्थुः। नागानामन्तरे वैनतेयास्तस्थुः। वैनतेयानामन्तरे किन्नरास्तस्थुः। किन्नराणामन्तरे किंपुरुषास्तस्थुः। किंपुरुषाणामन्तरे छत्राणि च छत्राणामन्तरे सुवर्णचामराश्च सुवर्णचामराणामन्तरे ध्वजाश्च ध्वजानामन्तरे पताकाश्च [illegible]।

तदा इयं महोर्वी अचलं स्थातुमशक्नुवती रावशतं रावसहस्रं रावशतसहस्रं च विमुञ्चन्ती विरराव ।

इति श्रीशीलस्कन्धस्थविरस्य कृतौ सद्धर्ममकरन्दे
सम्बोधिपरिदीपनो नाम
द्वादशोऽध्यायः ।

# अथ त्रयोदशोऽध्यायः ।

अथ भगवान् शाक्यमुनिर्धर्म्मप्रीत्या विमुक्तिसुखं प्रतिसंविन्दन् सप्ताहं तस्मिन्नेव पर्य्यङ्के निषसाद । ततः सप्ताहातिक्रमे पर्य्यङ्कादीषत्पूर्वोत्तरस्यां दिशि स्थित्वा नीलोत्पलदलनिभाभ्यां नयनाभ्यां बोधिद्रुमं समभ्यर्च्चयन् सप्तदिवसान् निमिषेण तस्थौ । अथ केषांचिद्देवतानां किंनु तावदस्याऽन्यो बुद्धकारकधर्म्मः अस्तीति शङ्का उदपद्यत । भगवान् गौतमोऽपि तां च देवतानां शङ्कां ज्ञात्वा तस्या विनोदनार्थं प्रातिहार्य्यं कर्तुकामो बोधितरोरुत्तरपार्श्वेन पूर्वपश्चिमयोर्दिशयोर्दशसहस्रचक्रवालमेव सुविशुद्धं रत्नच्छदनं दशसहस्रसुमेरव एव काञ्चनस्तम्भाः दशसहस्रसागरतीर्थानां वालुका एव आस्तरणं दशसहस्रचक्रवालेषु सूर्याचन्द्रमसावेवप्रज्वलितौ प्रदीपौ । दशसहस्रचक्रवालेषु तारागण एव कनकताराविभूषितमुल्लोचं रत्नचङ्क्रमणं निरमात् । स च तन्निर्म्माय अनेकविधप्रातिहार्य्याणि दर्शयंस्तत्र सप्तदिवसमचङ्क्रम्यत । एवं त्रिषु सप्ताहेषु एकविंशत्यां च दिवसेष्वऽपि भगवतो गौतमस्य शरीराद्रश्मयो न निर्गच्छन्ति स्म । स भगवान् चतुर्थे तु सप्ताहे पश्चिमोत्तरदिशयोरन्तरे रत्नगृहे निषसाद । तद्रत्नगृहं नाम अभिधर्म्मपिटके सप्तानां प्रकरणानां संमर्पितस्थानमिति केचिद्वदन्ति । तत्तु रत्नगृहं स्मृतिप्रस्थानप्रवरधरणीतले ऋद्धिपादस्तम्भान्समारोप्य ध्यानसंघर्षणैः सम्यक् प्रधानरश्मिभिर्विनयभित्तिश्चोच्छ्रित्य सूत्रान्तवलभीः समारोप्याऽभिधर्म्मपटलेन सञ्छादितं त्रिपिटकधर्म्ममयं रश्मिकदम्बसमुत्पादितस्थानमिति ज्ञातव्यम् ।

अथ भगवान् गौतमस्तस्मिन् रत्नगृहे निषद्य त्रीणि पिटकानि चतुर आगमान् पञ्च निकायान् सूत्रादीनि नवाङ्गानि चतुरशीतिसहस्रधर्मस्कन्धांश्च सममृशत् । ततश्च धर्म्मसङ्गणी विभङ्गो धातुकथा पुद्गलप्रज्ञप्तिः कथावत्तु यमकमित्येतानि षट् प्रकरणानि संमृशतो भगवतः शरीराद्रश्मयो नोत्पेदिरे । तदा भगवान् जलान्तर्गतः सूर्य्यप्रतिबिम्बसदृशोऽभूत् । यथा तिमिङ्गिलो नाम महामत्स्यः समुद्रकुक्षौ शतयोजनप्रदेशे शीर्षमुत्क्षिप्य चलितुमसमर्थो द्वौ कर्णौ चालयति । स तिमिङ्गिलः शतयोजनप्रदेशे शीर्षमुत्क्षिप्य क्रीडितुमारब्धेऽसमर्थो भवेत् उद्याने आरोपितमिवोदकं प्रस्खलति च । यथा तिमिङ्गिलो नाम मत्स्यश्चतुरशीतियोजनसहस्रप्रगाणे गम्भीरे महासमुद्रे अवकाशं प्रतिलभ्य द्वौ कर्णौ प्रचाल्य अङ्गुष्ठेनोदकं प्रहृत्य क्रीडितुं समर्थो भवति । एवमपि भगवतः शाक्यमुनेः प्रस्थानमहाप्रकरणे अवकाशं लब्ध्वा यथा सुखमर्थान् संमृशतो हृदयवस्तु अभिप्रसन्नमभूत् । हृदयवस्तुनः अभिप्रसन्नतया तस्य भगवतः काये शोणितं प्रकृत्या लाक्षारसवर्णं विहाय अच्छं विप्रसन्नमनाविलं पाण्डुरं परिशुद्धञ्चाऽभूत् । रुधिरस्य च प्रसन्नतया नव मांसपेशिशतानि नवधमनीशतानि सप्तशिराशतानीति सकलञ्च शरीरं पर्यशुध्यत् । अथ तस्य भगवतः सकलाच्छरीरात् षड्वर्णरश्मयो निश्चक्रमुः ।

तद्यथा । नीलवर्णशरीरप्रदेशान्नीलाञ्जनमेघपटलनीलोत्पलभ्रमरपक्षसदृशाः नीलवर्णरश्मयश्च तथा पीतवर्णशरीरप्रदेशात् सुवर्णमनःशिलाकर्णिकारराजवृक्षकुसुमप्रसारितकाञ्चनपट्टसदृशाः पीतवर्णरश्मयश्च शोणितवर्णशरीरप्रदेशाद्रक्तकमलकुसुम्भकुसुमलोहितपत्रबालसूर्यसदृशा लोहितवर्णरश्मयश्च धवलावदातवर्णशरीरप्रदेशाद्रजत-

शङ्खचूर्णक्षीरोदधिश्वेतवस्त्रौषधितारकासदृशाः पाण्डुरवर्णरश्मयश्च ईषद्रक्तवर्णशरीरप्रदेशाद्रक्तचन्दनमञ्जिष्ठासदृशा माञ्जिष्ठवर्णरश्मयश्च तथा प्रभास्वरवर्णशरीरप्रदेशाच्छ्वेतस्फटिकवैदूर्य्यधवलकुसुमसदृशाः प्रभास्वरवर्णा रश्मयश्च दिक्षु विदिक्षु यावदकनिष्ठब्रह्मलोकात् संप्रासरन् । एवं भगवतः शाक्यसिंहस्य शरीरे षड्वर्णरश्मयः समन्ताद्द्वादशहस्तप्रमाणमच्छिन्नघनाः शरीरं परिवृत्य चन्द्रसूर्य्यनक्षत्रताराणां प्रभाः प्रवेष्टुं नाशक्नुवन् ।

एवं भगवान् शाक्यमुनिर्यस्मिन् रत्नगृहे सप्तदिवसांस्त्रिपिटकं समभार्क्षीत् । तदपि रत्नगृहचैत्यं नाम जातम् । पञ्चमे सप्ताहे बोधिद्रुमात्पूर्वदिशायामजपालो नाम न्यग्रोधः अस्ति । तन्मूले सप्तदिवसमेकपर्य्यङ्के निषसाद विमुक्तिसुखं प्रतिसंविन्दन् । ततो भगवान् सप्ताहस्यातिक्रमे तस्मादजपालमूलाद्यत्र निचुलेन्द्रस्तत्रोपसंक्रम्य निचुलेन्द्रमूले सप्तदिवसं विमुक्तिसुखं प्रतिसंविन्दन्नेकपर्य्यङ्केन निषण्णः । तस्मिन् समये सकलचक्रवालगर्भं परिपूर्य्य अकालमेघः उदपादिष्ट । अथ महानुभावो निचुलेन्द्रो नाम नागराजो निचुलेन्द्र सन्निधावेकस्यां पुष्करिण्यां निर्वृत्तः । किन्तु स [illegible] बुद्धमहानागं दृष्ट्वा स्वीये भवने स्थातुमशक्नुवंस्तस्माद्भवना[illegible] । स च नागो अमिततेजसा सुरगरुडगन्धर्वादीनभिभूय [illegible] नागमद्राक्षीत् ।

दृष्ट्वैव तस्यैवं चित्तेऽभूत् । एष किं शोभते ! [illegible] वलपुलिनतले अन्यानभिभवन् शुशुभे । [illegible] षड्वर्णकिरणवतस्तस्य सम्बुद्धभावो मे [illegible] मन्ये मयेति । एष इदानीं सम्यक् सम्बुद्धो [illegible]

नामनुकम्पायै ममावासमागतः । अहो लाभवन्तो मनुष्याश्च देवासुरमहोरगाश्च सम्बुद्धं समभ्यैक्षिपत नाम सर्वलोकशिवङ्करम् । यन्नूनमहमिदानीमस्य मुनेः कञ्चनाधिकारं कुर्य्यामिति । एवं विचिन्त्य स निचुलेन्द्रनागराजो भगवतः कायं सप्तवारं भोगेन परिवेष्ट्य उपरि महतीं फणां कृत्वा तस्थौ । मा भगवन्तं शीतं वा उष्णं वा पीडयेत् । मा भगवन्तं बाधयेद्दंशो वा मशको वा वातातपाहिसंस्पर्शो वेति । अथ निचुलेन्द्रो नाम नागराजः सप्ताहातिक्रमेण विगतमेघं नभः समवलोक्य भगवतः कायादुन्मुच्य भोगं स्वं वर्णं निर्म्माय भगवतः पुरस्तात्प्राञ्जलिर्नमस्यमानस्तस्थौ अथ भगवान् सप्ताहातिक्रमेण तस्मात् समाधेरुत्थाय उदानमुदानयत् ।

सुखं विवेको बुद्धस्य श्रुतधर्म्मस्य पश्यतः ।
अव्यापादं सुखं लोके प्राणभूतेषु संयमः ॥
सुखं विरागता लोके कामानां समतिक्रमः ।
अस्मि मानस्य विनय एतद्वै परमं सुखम् ॥ इति ॥

एवमुक्त्वा भगवान् निचुलेन्द्रमूलाद्दक्षिणदिशायां प्रतिष्ठितं राजादनतरुमुपसंक्रम्य राजादनमूले विमुक्तिसुखं प्रतिसंविन्दन् सप्ताहमेकपर्य्यङ्के निषसाद । ततो भगवान् सप्तदिवसातिक्रमेण अरुणोद्गमनवेलायां समाधित उत्थाय राजादनतरुमूल एव तस्थौ । तस्मिन् काले पुरुहूतो देवराजो मनुष्यलोकं विलोकयन् भगवन्तं राजादनतरुमूले निषण्णमद्राक्षीत् । दृष्ट्वैवमचिन्तयच्च । अयमेव भगवान् शाक्यमुनिः सम्बोधितः प्रभृति एकोनपञ्चाशद्दिवसान्न किञ्चित् परिभुक्तवान् । इदानीमनेन परिभोक्तुमर्हमिति विचिन्त्य तत्कालमेव दिव्यौषधं हरीतकीमाहृत्य भगवते उपजहार । भगवान् तत्परिभुक्तवान् । परिभुक्तवत एव भगवतः शरीरकृत्यमभवत् । तत शक्रो

देवराजो मुखोदकं मादात् । भगवान् मुखं संशोध्य तस्मिन्नेव राजादनवृक्षमूले निषण्णः । भगवति तस्मिन्निषण्णे सविता उद्गच्छति स्म ।

तदानीं तपस्सुभल्लिकनामानौ द्वौ वणिजौ कनीष्ठभ्रातरौ उत्कलदेशं दीर्घमध्वानं प्रतिपेदाते स्म । अथ तयोस्तपस्सुभल्लिकयोर्वणिजोः पुराणज्ञातिर्देवता मार्गाविदूर एकस्मिन् वृक्षे निर्वृत्ता सार्द्धं पञ्चशतशकटैरायन्तौ तौ वणिजौ समालोक्य एवं चिन्तयामास । इमौ द्वौ तपस्सुभल्लिकौ वणिजौ मत्पूर्वज्ञातिकौ चिरादेव संसारे निमग्नौ । इदानीमेव मां संश्रित्य बुद्धोत्पादश्रवणं लप्स्येते । एतौ तच्छ्रुत्वा बुद्धं शरणं गमिष्यत इति विचिन्त्य तस्यानुभावात्तत्कालमेव गच्छतां तेषां पञ्चशतशकटानां गमनं न्यवारयत् । अथ ते भीतास्त्रस्ताः किमिदमिति मार्गदेवताया बलिपूजाञ्चक्रुः । तेषां बलिकर्मणा सा देवता समक्षं तपस्सुभल्लिकौ वणिजौ प्रोवाच । अयं मारिषौ ! भगवान् शाक्यसिंहो राजादनतरुमूले विहरति प्रथमाभिसम्बुद्धः । युवां गच्छतम् । तस्मै भगवते मन्थेन च मधुपिण्डेन समभ्यर्चयतम् । तद्वां भविष्यति दीर्घरात्रमर्थाय हिताय चेत्युऽक्त्वा तिरोदधौ ।

तदानीं तपस्सुभल्लिकौ वणिजौ बुद्धोत्पादस्य श्रवणाद्देवतारूपदर्शनात्परमं विस्मयमापन्नावितश्चेतश्च विलोकयन्तौ राजादनमूले निषण्णं भगवन्तमपश्यताम् । द्वात्रिंशद्वरमहापुरुषलक्षणैः प्रतिमण्डितमशीत्यनुव्यञ्जनरञ्जितं षड्विधरश्मिकदम्बैः परिवृतम् । तदुत्तमतमं बुद्धरूपं दृष्ट्वा अहो कथं सम्यक् सम्बुद्धो लोके समुत्पन्नः । अहो परमदर्शनीयो भगवानिति विचिन्त्य सञ्जातप्रमोदौ लाभवन्तावावामिति मत्वा मन्थञ्च मधुपिण्डकञ्चादाय भगवान् गौतमो यत्रासीनस्तत्र मन्थेसञ्चमक्रतुः । उपसङ्क्रम्य भगवन्तं गौतमं समभिवन्द्य एकान्ते तस्थतुः । एकान्ते

स्थितौ तौ तपस्सुभल्लिकौ वणिजौ भगवन्तं गौतममेतदवोचताम् । प्रतिगृह्णातु भगवान् मन्थञ्च मधुपिण्टकञ्चावयोर्दीर्घकालं हिताय सुखाय चेति । अथ भगवतः शाक्यमुनेर्मनस्येतदभूत् । नास्ति मत्पात्रम् । पुरिमका अपि तथागताः हस्तेन पिण्डपातं न प्रतिजगृहुः । अहमिदानीं केन नु प्रतिगृह्णामि मन्थञ्च मधुपिण्डकञ्चेति । अत्रापि भगवान् शाक्यमुनिः कस्मान्न्वेवमचिन्तयत् । यदा भगवते प्रधानयोगमनुविचरते घटीकारेण महाब्रम्हणा यत् पात्रं दत्तं तच्चैवान्तर्हितम् । सुजातया क्षीरपायसं दातुमागतया श्रेष्ठिदुहित्रा या सुवर्णपात्रिर्दत्ता सा तदहन्येव कालनागराजभवने निमज्जिता । भगवान् गौतमः सुजातया दत्तात्पायसभोजनाद् एकोनपञ्चाशद्दिवसान् नैव बुभुक्षुर्न तृष्णावान् शरीरदुर्बलश्चाऽभूत् । स भगवांस्तपस्सुभल्लिकाभ्यां वणिग्भ्यां दत्तं मन्थञ्च मधुपिण्डकञ्च तयोर्द्वयोरनुग्रहार्थमेव प्रतिजग्राह । तस्मादेवं चिन्तयामास ।

तस्मिन् समये चत्वारो लोकपाला भगवतश्चेतसि परिवितर्कं चेतसा समभिज्ञाय चतुर्भिर्दिशाभिश्चत्वारि मुद्गवर्णानि पात्राणि चादाय भगवते शाक्यमुनये प्रदुः । प्रतिगृह्णातु भगवानेभिः पात्रैर्मन्थञ्च मधुपिण्डकञ्चेति । भगवांस्तानि चत्वारि पात्राणि जग्राह च तेषां प्रसादनार्थं । नैव तु महेच्छतया । यथा स्यात्तेषां चतुर्णां पात्राणामेकं पात्रं तथैवाधिष्ठानञ्चकार ।

ततो भगवान् शाक्यमुनिस्तेनैव पात्रेण तपस्सुभल्लिकाभ्यां द्वाभ्यां वणिग्भ्यां दत्तं मन्थञ्च मधुपिण्डकञ्च प्रतिजग्राह । भगवांस्तत् प्रतिगृह्य भुक्तवांश्च । अथ तपस्सुभल्लिकौ द्वौ वणिजौ भगवन्तमेतदवोचताम् । आवां भवन्! भगवन्तं गौतमं शरणं गच्छावः ।

उपासकावावां भगवान् धत्तामद्यप्रभृति प्राणोपेतं शरणं गताविति। तौ पुनर्भगवन्तमेतदवोचताम्। कस्मै इदानीं भगवन्! आवाभ्यामद्यप्रभृति अभिवादनादीनि कर्त्तव्यानीति। अथ भगवान् शीर्षं परामृक्षत्। तदा इन्द्रनीलमाणिक्यभ्रमरवर्णसदृशाः कुन्तला हस्ते उपागुः। इमान् युवां परिहारं कुरुतेति ताभ्यां प्रददौ*। तौ द्वौ कुन्तलधातून् लब्ध्वा प्रहृष्टहृदयौ भगवन्तमभिवन्द्य प्रचक्रमतुः। तदा तौ द्वौ लोके प्रथमोपासकौ बभूवतुः।

इति श्रीशीलस्कन्धस्थविरस्य कृतौ सद्धर्ममकरन्दे सप्तसप्ताहवृत्तिकमपरिदीपनो नाम त्रयोदशोऽध्यायः।

---

* तपस्सुभल्लिकाभ्यां वणिग्भ्यां दत्तांस्तान् कुन्तलधातून् निधाय कृतं चैत्यमेतर्हि जम्बूद्वीपे रंगूननामके नगरे श्वेतगुं नाम्ना प्रतीतम्।

अहं हि धर्म्मं दिशेयम्। परे धर्म्मं न जानीयुः। तेन च मम स्यात् क्लमः। सा मम स्याद्विहिंसेति विचिन्तयामास। स भगवान् पुनरेवमचिन्तयत्।

मया कृच्छ्रेणाधिगतं निर्देष्टुमधुना ह्यलम्।
रागद्वेषपरैस्तैस्तु धर्म्मो नाऽयं सुबुध्यते॥
प्रतिस्रोतोगामिनं निपुणं गम्भीरं सूक्ष्म दर्शनम्।
रागरक्ता न द्रक्ष्यन्ति तमःस्कन्धेन चावृताः॥

इमाः प्रजाः किण्वपूर्णा अलाबुरिव पूतितक्रभरितपातिरिव वसा-तैलप्रलिप्तकर्पट इव अञ्जनमक्षितहस्त इव क्लेशभरिताः संक्लिष्टा रागेण रक्ता द्वेषेण दूषिता मोहेन मूढाः किन्तु प्रतिभोत्स्यन्ते। इमं धर्म्मं प्रतिबोद्धुं व्यायच्छता मया अदत्तं दानं नाम नास्ति। अरक्षितं शीलं नाम नास्ति अभाविता भावना नाम नास्ति। अपूरिता पारमी नाम नास्ति। मम सायं निरुत्साहं मारसैन्यं विजयमानस्य प्रथमे यामे पूर्वस्मिन् निवासमनुस्मरतः मध्यमयामे दिव्यचक्षुर्दिव्यश्रोत्रं प्रतिलभमानस्य द्व्यङ्गुलमात्रं पृथिवी नाकम्पत। पश्चिमे यामे प्रत्यूषे व्यध्वं त्रिसन्धि चतुःसंक्षेपं विंशदाकारं प्रतीत्यसमुत्पादं समुदयनिरोधवशेन संमृशतो मे महोर्वी समकम्पत। ईदृशेनापि संमृशता तीक्ष्णज्ञानेन मया कृच्छ्रेणायं धर्म्मः प्रतिबुद्धः। तं धर्म्मं किं लौकिका जना भोत्स्यन्ते?। इत्थं धर्म्मगम्भीरत्वञ्च सत्त्वानां चित्तग्रहणतां च प्रत्यवेक्ष्याल्पोत्साहतायै चित्तं ननाम। नो धर्म्मदेशनायै इति। अहो भगवतो दशबलधारिणश्चित्तमिदं विरुद्धमिव केचिन्मन्यन्ते। केन सार्द्धं विरुद्धम्। पूर्वचित्तेन सह विरुद्धम्। किं चित्तं तस्य भगवतो गौतमस्य पूर्वमभवच्च। स च पूर्वं सुमेधा नाम तापसो भूत्वा रमणीयां रम्यवतीं नगरीं प्रविशन्तं लोकहितं सश्रावकगणं भगवन्तं

दीपङ्करं समवलोक्य स्वहस्तगतमर्हत्फलं प्रहायाऽजिनचर्म्मणी चापहृत्य कर्दमपृष्ठे इन्द्रनीलमणिशयने आरोपितसुवर्णस्कन्ध इव निपद्य एवं चिन्तयामास ।

किं मर्यकेन तीर्णेन पुरुषेण स्थामदर्शिना ।
प्राप्य सर्वज्ञतां लोकांस्तारयिष्ये भवार्णवात्॥

पूर्वं चित्तमिदं ननु समुदपादि । अथ कस्मादेतर्हि धर्म्मवरं लब्ध्वा देष्टुमल्पोत्साहो जातः । प्रमूढन्तु पुर्व्वचित्तम् । न खलु वीतमोहस्य सकललोकनाथस्य भगवतः शाक्यमुनेस्तादृशी सम्मोहिता स्यात् । सा किं कारणात् ? । यया करुणया पूर्व्वजन्मनि आत्मा पर्व्वतशिखराद्राक्षसमुखे प्रपातितः तां करुणां तस्मिन् काले सकलधर्मगुणैर्विगतामपि न किमकार्षीच । यदि हि तस्य करुणा स्यात् कथं बन्धुस्नेहं नागणयत् ? । कथं राज्यविभूतिं परित्यक्तवान् कथं राहुलजननीं नापालयत् ? । कथं जातमात्रं राहुलं पुत्रं पर्यत्यजत् ? । कथमन्यैरकृतां दुष्करां क्रियामकार्षीत् । केनेदृशं कर्म्म करुणया कृतम् ? । एतानि सर्वाणि करुणाचित्तेनैव कृतानि । यदेतत् करुणायाः कर्म्म । कथमेवं धर्म्मगम्भीरत्वं संदर्शितमिति ? । स्वभावो हि एष प्रतिबुद्धधर्म्माणां सर्व्वेषां बुद्धानां यत् धर्म्मगम्भीरत्वञ्च प्रत्यवेक्ष्य अल्पोत्साहतायै चित्ते प्रणते महाब्रह्मा आगत्य धर्म्मदेशनां याचिष्यते । कस्मादीदृशमायाचनं करोति ? । इमे सत्वा ब्रह्माणं गुरुं कुर्वन्ति । तेषां सत्वानां धर्म्मं देष्टुकामो ब्रह्मा स्वयं याचित्वा एव देक्ष्यति । तस्मात् कारणाद्भगवता गौतमस्य अल्पोत्साहतायै चित्तं ननाम नो धर्म्मदेशनायै इति सिद्धान्तः ।

तस्मिन् काले ब्रह्मा सहाम्पतिर्ब्रह्मलोके स्थितः सन् भगवतः शाक्यमुनेश्चित्तोपरि वितर्कमात्मनश्चेतसा समभिज्ञाय एवं चिन्तयामास ।

दशबलस्य गौतमस्य अधिगतधर्मस्यापि अदेष्टुकामतायामपह्-तविकसितकुसुमग्रथितमालेनेव तादृशेन मया अयाचिते लोकस्य अप्रतिशरणं भवेदिति । तस्माद्दशबलं सिद्धार्थं जिनं धर्म्मदेश-नार्थं याचिष्ये इति विचिन्त्य ब्रह्मलोक एव स्थितः त्रिषु वारेषु तुमुलां घोषणां व्याहरत् । भो! नशिष्यति बत लोकः भो! विनङ्क्ष्यति बत लोक इति । तदा दशसहस्रचक्रवालवासिनो ब्रह्माणस्तस्य महाब्रह्मणः सहाम्पतेः समुद्गतं शब्दं श्रुत्वा सञ्जातचित्तोत्त्रासा अविदितकारणा-स्त्वरितगमनेन महाब्रह्माणं सहाम्पतिमुपसङ्क्रम्य पप्रच्छुः । कस्मान्मा-रिष! शब्दमुदीरितवानसि । तं निशमयतामस्माकं भयं जातम् । मारिष! किमुत्पत्स्यते लोके इति । अथ ब्रह्मा सहाम्पतिस्तेभ्य एतद्वोचत् । मारिषाः! महाविनाशो ननु प्रादुर्भविष्यतीति । ब्र०—मारिष! को नामायं विनाश इति? । म० ब्र०—पुनः पुनर्जातिजरामरणमिति । ब्र०—मारिष! यः अस्माभिर्जातिजरामरणैः सम एव स्थितः । स इदानीं शिखां प्राप्तो नन्विति । एतच्च कस्मादुत्पद्यते? तस्य भगवतो गौतमस्य विनाय इति । म०ब्र०—किं मारिषाः! यूयं न जानीथ धर्म्मगम्भीरत्वं प्रत्यवेक्षमाणस्य भगवतो गौतमस्य अल्पोत्साहतायै चित्तस्य नमनं नो धर्म्मदेशनायै इति । यत्प्रतीत्य मया शब्दः श्रावितस्तदेतदिति । तस्माद्धि मारिषाः! वयं सर्वे भगवन्तं गौतमं धर्म्मदेशनार्थं निमन्त्रयिष्याम इति ।

एवमिति च ब्रह्मा सहाम्पतिरेकांसमुत्तरासङ्गं कृत्वा विविधमत्का-रहस्तो ब्रह्मलोकात् तत्क्षणमेवोत्तीर्य भगवतो गौतमस्य पुरस्तात् आ-त्मनः प्रतिष्ठानार्थं पृथिवीं निर्म्माय दक्षिणं जानुमण्डलं पृथिव्यां निहत्य दशनखसमुज्ज्वलदलाञ्चितं प्रवरकरकमलं मूर्ध्नि समारोप्य

ससमादरबहुमानः अर्हन्तं सम्बुद्धं गौतमं सविनयं प्रोवाच । दिशतु भवान् भगवान् धर्म्मम् । दिशतु भवान् सुगतो धर्म्मम् । सन्ति भगवन् ! सत्वा अल्परजस्कजातीयाः । अश्रोतारो धर्म्मस्य परिहास्यन्ते अज्ञातारश्च । पूर्वेषु बुद्धेषु कृताधिकाराः परिपक्वज्ञानाः सूर्यरश्मि सम्पर्कमागच्छन्ति पद्मानीव धर्म्मदेशनां श्रोतकामाश्चतुष्पदिकायाः गाथाया अवसाने आर्य्यभूमेरवक्रमणार्हा भवन्ति । नैकस्य न द्वयोः अपि तु अनेकशतसहस्राणां धर्म्माभिसमयो भविष्यति । भवन् सकललोकानां संसारोद्धरणार्थं कल्पशतसहस्राधिकाश्चतस्रोऽसङ्ख्येयाः पारमीः परिपूर्य्य इदानीं सर्वज्ञतां प्राप्यापि अल्पोत्साहो भूत्वा कस्माद्धर्म्मं न देक्ष्यसि ? । त्वयि धर्म्ममदेक्ष्यति कोऽन्यो लोकानां प्रतिशरणं भविष्यतीति । इति भगवन्तं धर्म्मदेशनायै आयाचनञ्चकार ।

अथ भगवान् शाक्यसिंहो ब्रह्मणः सहाम्पतेर्वचनं श्रुत्वा सत्त्वेषु कारुण्यं प्रतीत्याचिन्तयत् । एष महाब्रह्मा सर्वसत्त्वहितार्थं याचते । इयं हि सर्वेषां बुद्धानां धर्म्मिता धर्म्मदेशनार्थं याच्ञालाभः । तस्मादहं याच्ञयाधर्म्मं देक्ष्यामीति । ततो भगवान् शाक्यमुनिः पश्चिमयामातिक्रमे दिव्येन चक्षुषा विनेयान् जनान् विलोकयामास । स ददर्श अल्परजस्कान् महारजस्कांस्तीक्ष्णेन्द्रियान् मृद्विन्द्रियान् दुराकारान् स्वाकारान् दुर्विज्ञाप्यान् सुविज्ञाप्यान् भव्यानभव्यांश्च सत्त्वान् । कांश्चित् परलोकभयदर्शिनो विचरतश्च । यथाहि उत्पलिन्यां वा कुमुदिन्यां वा पद्मिन्यां वा कानिचिन्नीलोत्पलानि वा पुण्डरीकाणि वा पद्मानि वा उदके जातानि उदके संवृद्धानि कानिचिदुदके निमग्नानि अन्तर्निमग्नपोषितानि कानिचित् समोदके स्थितानि कानिचिदुदकादुच्छ्रित्य उदकेनानुपलिप्तानि च तिष्ठन्ति । यानि तत्र पद्मानि उदकादुच्छ्रित्य स्थितानि तानि सूर्य्यरश्मिस्पर्शमा-

गच्छन्ति स्थितानि । यानि समोदके स्थितानि तानि श्वः विकाशनीयानि भवन्ति । यानि उदके निमग्नानि वा अन्तर्निमग्नपोषितानि तानि तृतीयेऽहनि विकाशनीयानि भवन्ति । यानि उदकादनुद्गतानि अन्यानि पद्मानि तानि तावन्न पुष्यन्ति । तानि मत्स्यकूर्मादिभिर्भक्ष्याणि भवन्ति । यानि उदकादुद्गतानि तानि सत्वरं पुष्यन्ति । यथैव पद्मानि चतुर्विधानि भवन्ति । एवमपि उद्घटितज्ञो विपचितज्ञो ज्ञेयः पदपरम इति चत्वारः पुद्गला भवन्ति । तत्र कतम उद्घटितज्ञः । यस्य पुद्गलस्य धर्मे उदाह्रियमाण एव क्षिप्रं धर्माभिसमयो भवति स पुद्गल उद्घटितज्ञः । यस्य पुद्गलस्य संक्षिप्तेन भाषितस्य विस्तरेण अर्थे विभज्यमाने धर्माभिसमयो भवति अयं पुद्गलो विपचितज्ञः । यस्य पुद्गलस्य उपदिष्टमनिशं मनसि कुर्वाणस्य कल्याणमित्राणि सेवमानस्य भजमानस्य पर्युपासीनस्य च धर्माभिसमयो भवति अयं पुद्गलो ज्ञेयो नाम । यस्य पुद्गलस्य बहूनपि सेवमानस्य बहूनपि भजमानस्य बहूनपि वदतस्तस्यां जात्यां न धर्माभिसमयो भवति अयं पुद्गलः पदपरम इति । एवं भगवान् शाक्यमुनिर्दशसहस्रलोकधातुं समवलोकयन् पद्मिन्यादिषु सद्योविकसत्पद्मानीव उद्घटितज्ञानश्वोविकसनपद्मानीव विपचितज्ञान् अपरेद्युर्विकसनपद्मानीव ज्ञेयान् मत्स्यभक्ष्यपद्मानीव पदपरमांश्च विलोकयामास । एतावन्तो अल्परजस्का एतावन्तो महारजस्का एतावन्त उद्घटितज्ञाः एतावन्तो विपचितज्ञा एतावन्तो ज्ञेया एतावन्तः पदपरमा एतावन्तो रागचरिता एतावन्तो द्वेषचरिता एतावन्तो मोहचरिता एतावन्तो वितर्कचरिता एतावन्तः श्रद्धाचरिता एतावन्तो बुद्धिचरिता इति विचिन्त्य गाथया ब्रह्माणं सहाम्पतिं समभ्यभाषत ।

अपावृतास्ते अमृतस्य द्वारः ये श्रोतवन्तः प्रमुञ्चन्तु श्रद्धाम् ।
विहिंससंज्ञो प्रगुणं न कार्षीः धर्म्मं प्रणीतं मनुजेषु ब्रह्मन् ॥ इति

अथ ब्रह्मा सहाम्पतिर्भगवतः शाक्यमुनेरधिवासनं विदित्वा भगवन्तं गौतमं समभिवन्द्य त्रिवारं प्रदक्षिणीकृत्य सार्द्धं ब्रह्मपरिच्छैर्ब्रह्मलोकमेव जगाम ।

इति श्रीशीलस्कन्धस्थविरस्य कृतौ सद्धर्म्ममकरन्दे
ब्रह्माराधनापरिदीपनो नाम
चतुर्दशोऽध्यायः ।



# अथ पञ्चदशोऽध्यायः।

ततश्चानन्तरं भगवतः सिद्धार्थस्य मनस्येतदभूत्। कस्मै न्वऽहं प्रथमं धर्म्मं दिशेयम्। क इमं धर्म्मं क्षिप्रमेव ज्ञास्यतीति। तस्य भगवतो गौतमस्य एवं चित्ते वभूव। अयं हि आलारः कालामो नाम पण्डितो मेधावी दीर्घरात्रमल्परजस्कजातीयः। तन्नूनमहम् आलारकालामनाम्ने तापसाय प्रथमं धर्म्मं दिशेयम्। स च इमं धर्मं सत्वरं ज्ञास्यतीति। अथान्यतरा देवता भगवन्तं गौतममुपसङ्क्रम्य सविनयं प्रोवाच। भगवन्! अतः सप्तदिवसादुपरि आलारः कालामः कालधर्ममेष्यतीति। भगवान् शाक्यमुनिर्देवतायास्तद्वचनं श्रुत्वा दिव्येन चक्षुषा व्यलोकयत्। ददर्श च सः अतः सप्तदिवसादुपरि कालधर्मं गत्वा आकिञ्चन्यायतननाम्नि अरूपलोके निर्वर्त्स्यतीति। तदनन्तरं तस्यैतदभून्मनसि महाहानिर्वत आलारस्य कालामस्य। स तु अतः सप्तदिवसादुपरि लब्धव्यान्मार्गफलात् परिहीनो भविष्यति। यदि स इमं धर्म्मं निशामयेत् सत्वरमेव ज्ञास्यतीति।

पुनरपि तस्य भगवतः शाक्यसिंहस्य एवं चित्तमभूत्। यन्नूनमहं उद्रकरामपुत्रनाम्ने तापसाय प्रथमं धर्म्मं दिशेयम्। स इमं धर्म्ममाशु भोत्स्यत इति। सपदि तथैव एका देवता आगत्य भगवते गौतमाय आरोचयत्। भगवन्! उद्रको रामपुत्रः प्रदोषे कालङ्करिष्यति इति। तदा भगवान् शौद्धोदनिर्दिव्यं ज्ञानं प्रविश्य विलोकयामास। अद्राक्षीच्च तस्य कालङ्कृत्वा नैव संज्ञानासंज्ञायतने अरूपलोके निर्वृत्तभावम्। दृष्ट्वा च तस्य एतदभून्मनसि। अहो महाहानिर्हि तस्य उद्रकस्य रामपुत्रस्य। यदि स धर्म्मं शृणुयात् क्षिप्रमेव ज्ञास्यतीति। ननु भगवान् शाक्य-

न शृणोति स तु धर्म्मात् परिहीनो बहिर्भूतो भवति । तस्माद्भगवान् शाक्यजिनस्तयोरालारकालामोद्रकरामपुत्रयोर्महाहानिरिति चिन्तयामास ।

ततश्चानन्तरं तस्य भगवतः शौद्धोदनेरेतदभून्मनसि । कस्मैन्वहं प्रथमं धर्म्मं दिशेयम् । क इमं धर्म्मं क्षिप्रं ज्ञास्यतीति । ददर्श च स भगवान् सूर्य्यबन्धुः पञ्चवर्गीयांश्च भिक्षून् । पञ्चवर्गीया हि भिक्षवो मम बहूपकर्तारः । ये पञ्चवर्गीया भिक्षवः प्रधानानुयोगं कुर्व्वन्तं मां बहुलमुपतस्थुश्च । यन्नूनमहं पञ्चवर्गीयेभ्यो भिक्षुभ्यः प्रथमं धर्म्मं दिशेयमिति । कथं हि भगवान् सर्वार्थसिद्धिर्बहूपकर्तारो मे पञ्चवर्गीया भिक्षव इति चित्ते चकार । किं भगवान् मायादेवीसुतः उपकारसम्पन्नेभ्य एव धर्म्ममदिशत् नो निरुपकारकेभ्य इति । यदि भगवान् शाक्यवंशेश्वरो निरुपकारकेभ्यो धर्म्मं नादिशच्च । को गुणो देवदत्तेन प्रलम्बितानां धनुर्भृताम् । को गुणो मन्त्राणिपुत्रस्य अङ्गुलिमालस्य । को गुणो राज्ञः अजातशत्रोः । को गुणो यक्षस्य आलवकस्य । तेभ्योपि धर्म्मं न दिशेन्ननु । यदि भगवान् शाक्यपुङ्गवस्तेभ्यो धर्म्मं न दिशेच्च औरसपुत्रे राहुले वधकारके देवदत्ते च समचित्तो भगवान् शाक्यसिंह इति वचनमपि वितथम् । यदि स भगवान् शाक्यमुनिरुपकारसम्पन्नेभ्य एव धर्म्ममदेक्ष्यत् एकान्तेन मातापितृभ्यामेव प्रथमं धर्म्ममदेक्ष्यत् । मातापित्रोर्गुणं जानन् बोधिसत्त्वेन सदृशोऽन्यः पूर्वं नाऽभूत् । एवं सति कस्मात् ताभ्यां प्रथमं धर्म्मं नादिशच्च । किं तेषां पञ्चवर्गीयाणां भिक्षूणां गुणो गुरुगुणादधिक इति । नाधिकः । एवं सति बहूपकारका मे पञ्चवर्गीया भिक्षव इति कस्माद्भगवान् शाक्यमुनिश्चित्ते चकार ? । कृतगुणस्य ज्ञातत्वात् । किं कृतगुणम् । तैः पूर्वकृतस्य गुणस्य प्रतिकारार्थम् ।

अस्मिन् बुद्धक्षेत्रे अन्यत्र स्थविरं कौण्डिण्यं प्रथमं धर्म्मं प्रतिबोधयितुं समर्थः अपरो नाम नास्ति । तस्यैव सुकृतकर्म्मविपाकः ।

एष विपाकः पुरा अग्रसस्यसम्प्रदानस्य । तेनैवाग्र एव धर्म्म-प्रतिबोधस्य हेतुरभूच्च । एष तेन कारणेन अग्रधर्मस्य प्रतिबोध-समर्थः अभवत् । तस्माद्भगवान् सर्वार्थसिद्धिः समुपधारयन् कौण्डिण्यप्रमुखान् पञ्चवर्गीयान् भिक्षून् समन्वैक्षिष्ट । ते पञ्चवर्गीया भिक्षव एतर्हि कुत्र वसन्तीति दिव्येन चक्षुषा समवालोकत । ददर्श च भगवान् शाक्यमुनिस्तेषां पञ्चवर्गीयाणां भिक्षूणां वाराणस्यामृषिपतने मृगदाये विहरणम् । दृष्ट्वा एवं चिन्तयामास । सम्बोधिसमधिगमात् प्रभृति यावदस्मात् सप्ताहात् षट्पञ्चाशद्दिवसा भवन्ति । अथ त्रयो-दिवसाः शिष्टाः । अहं हि श्वः आषाढचतुर्दश्यां वाराणसीं* गमिष्यामीति विचिन्त्य भगवान् शाक्यमुनिः प्रभातायां रजन्यां पात्रचीवराणि चादाय निरगात् ।

स च गत्वा यत्र उरुवेलायां सेनानीनिगमस्तत्र भिक्षाटनं चकार । तत्रापि कृतभोजनकृत्यो भगवान् शाक्यमुनिरष्टादशयोजन-मार्गां वाराणसीं पद्भ्यामेवगन्तुमैच्छत् । पौर्विकाः सर्व्वे सम्बुद्धा अन्तरिक्षगमनेनैव संगत्य ऋषिपतने मृगदाये अवतीर्य्य धर्म्मं दिदिशुर्ननु । भगवान् गौतमः कस्मात् पद्भ्यामेव गन्तुमैच्छत् ? । उपकस्य नाम आजीवकस्य उपनिश्रयं दृष्ट्वेति । भगवान् गौतम एवं चिन्तयामास । स मया सार्द्धं संलप्य पुनः प्रव्रज्यां लप्स्यते किं मे ऋद्धिगमनेन भवतु मम कायपरिश्रमः । यद्यहमाकाशेन गच्छेयम् उपको मां न द्रक्ष्यति । भूमौ गच्छन्तं मामुपको विलोकिष्यते । मम पादौ क्लमिष्यतः । लोकहितकरणार्थं हि मया पारम्यः पूरिता

---

* वाराणसी असिवरणानद्योर्मध्यवर्त्तिनी ।

इति मत्वा सलिलनिधिगिरिपतिदिवस्पतिशशभृन्मण्डलाभिरञ्जिताभ्यां चक्रलक्षणप्रतिमण्डिताभ्यां पादतलाभ्यां वसुमतीं मर्दयन् वाराणस्यभिमुखं प्रायात् ।

गच्छतश्च भगवतः शाक्यमुनेः कायात् षड्वर्णरश्मयो निष्क्रान्ताः। तदा नीलपीतलोहितावदातमाञ्जिष्ठप्रभास्वरप्रभेदा रश्मिज्वाला बुद्धोत्पादमुद्घोषयन्त्य इव मार्गस्थासु महीरुहशाखासु षड्वर्णध्वजपताका बन्धन्त्य इव प्राधावन्। अवनीतलं हि चरणयुगलविगलितेन अरुणकिरणेन विकीर्णकुसुममिव पुलिनं विलीनप्रवालरसधाराभिरञ्जितमिव चाभूत्। मार्गोपगाः शरभरुरुमृगसूकरनिकरा विराजमानं भगवन्तं गौतमं समुद्वीक्षमाणास्तस्थुः । अन्तरीक्षे डयमानाः पक्षिणः समुद्गताशेषश्रीविभूतिसमुज्वलं सम्बुद्धं विलोकमानाः सुशिक्षिताकृतिसम्भासा इव तस्थुः। मत्तभ्रमरमधुकरपरभृतनिकरा विनिहतं रागं विध्वस्तं द्वेषं दूरीकृतं मोहं विद्वज्जनमहितं भगवन्तं गौतमं निपुणं पश्यन्तो विचेरुः । वातेरितनिपतितसुरभिकुसुमकिञ्जल्कजालैर्भगवतः शाक्यमुनेर्गमनसत्कारं कुर्वाणा इव धरणीरुहाः संलक्ष्यन्ते स्म।

तदा आजीवकः उपको राजगृहनाम्नो नगरस्य च महाबोधिद्रुमस्य च अन्तराऽध्वनि मार्गं प्रतिपन्नोऽभूत्। स यथानुक्रमगमनेनाऽगच्छन् वनषण्डाभ्यन्तरे प्रकीर्णं षाड्विधरश्मिजालमवलोक्य सम्बुद्धस्य विशुद्धरश्मिभिः संस्पृष्टं स्वीयं कायं पश्यति स्म। कोऽयम्? । किं नामैतज्जातम्। पूर्वं न दृष्टम्। दृष्टमेतर्हि। किमिदम्?। यद्येतत् सलिलम्। न स्तिमितं मच्छरीरम्। किमिदम्?। एष ज्वलितो दहनः। यदि दहनः। न मे कायो दह्यते। किमिदमिति?। इतश्चेतश्च विलोकमानः अनन्तकान्तद्युतिविलासं व्यामप्रभारञ्जितं केतुमालावग्रन्थितशीर्षं षड्वर्णप्रतिम-

तेषां भिक्षूणां चित्तं समभिज्ञाय कारुण्याचेषामन्तिकमाजगाम। अथ ते पञ्चवर्गीया भिक्षवो भगवतः शाक्यमुनेरासन्नतां दृष्ट्वा स्वां स्वां प्रतिज्ञां संमृश्य चिराज्जनकजननीगुरुगौरवफलानुभावादिव समुत्थापिताः प्रत्युद्गत्य केचित्पात्रचीवराणि जगृहुः। केचन पादोदकं प्रादुः। केचिदासनं प्रासीसरन्। केचन व्यजनं गृहीत्वा वीजयामासुः। एवं सुखं निषण्णे भगवति लोकनाथे ते पञ्चवर्गीया भगवन्तं गौतमंमतद्ब्रुवन्। अस्ति भगवन्! गौतम! क्षन्तव्यम्। अस्ति यापनीयम्। न च भवान् क्लाम्यतु पिण्डपातेनेति। भगवान् गौतमस्तेषां वचनं श्रुत्वा इमे पञ्चवर्गीया भिक्षवो द्विजकुलान्निष्क्रम्य प्रव्रजिताः। अहं क्षत्रियकुलात् प्रव्रजितः। ते ममावज्ञामचक्रुरिति अकुपित्वा करुणया मृदुना वचसा तेभ्य एतदब्रवीत्। भिक्षवः! यूयं मा तथागतं नाम्ना समुदाहरत। भिक्षवः! अहं तथागतः अर्हन् सम्यक् सम्बुद्धः उद्धत्त भिक्षवः श्रोत्रम्। अमृतमधिगतम्। अहमनुशासिष्यामि। अहं धर्म्मं देक्ष्यामि। यथानुशिष्टं प्रतिपद्यमाना यस्यार्थे कुलपुत्राः सम्यगेव गृहान्निष्क्रम्य शासने प्रव्रजन्ति। तेन चिरादेव ब्रह्मचर्य्यापर्य्यवसानं तदनुत्तरमिहैव लोके स्वयमभिज्ञाय साक्षात्कृत्य उपसम्पद्य विहरिष्यन्ति। एवमुक्ते पञ्चवर्गीया भिक्षवो भगवन्तं शाक्यमुनिमेतद्ब्रुवन्। भवन्! गौतम! त्वं तया आर्य्यया प्रतिपदया तया आर्य्यया दुष्करक्रियया उत्तरिमनुष्यधर्म्ममलमार्य्यज्ञानदर्शनविशेषं नैवाधिगच्छसि च। भवन् गौतम! त्वं प्रधानाद्विभ्रान्तो बाहुलिको बहुलतायावर्तमानः किमधिगमिष्यसि उत्तरिमनुष्यधर्म्ममलमार्य्यज्ञानदर्शनविशेषमिति।

अथ भगवान् शाक्यमुनिस्तेषां मानशिलोच्चयं प्रज्ञावज्रायुधेन विध्वंसयन्नेवमाह स्म। भिक्षवः! यूयमनुस्मरत अतः पूर्वं एवंरूपं

भाषितमेतदिति । ततस्ते भवन्! नह्येतदिति आहुः स । तस्माद्धि भिक्षवः! उद्धत्त श्रोत्रम् । अमृतमधिगतम् । अहं वो धर्मं देश्यामि । तच्छृणुत साधु मनसि कुरुतेत्युक्त्वा पञ्चवर्गीयेभ्यो भिक्षुभ्यो धर्मं दिशंश्चाष्टाङ्गसमन्वागतं ब्रह्मस्वरं निःसार्य्य द्वाविमौ भिक्षू! अन्तौ प्रव्रजितेन न सेवितव्याविति समभ्यभाषत च ।

अयञ्चाष्टाङ्गसमन्वागतः समुदाहारनिर्घोषः अधो वीचेरुपरि भवाग्रात्तिर्य्यक् सकले मृगदाये च विससार । ततो गव्यूतियोजनावशेन गत्वा त्रिसहस्रयोजनविस्तृते हिमवति च षोडशसु महानगरेषु च त्रिषष्ट्यां नगरसहस्रेषु च नवनवत्यां द्रोणिमुखसहस्रेषु च षण्णवत्यां पट्टनसहस्रेषु च षट्पञ्चाशति रत्नाकरेषु च सकलेषु चक्रवालशतसहस्रेषु चाभ्युत्तीर्य्य प्रावर्त्तत । भौमा देवास्तच्छब्दं शुश्रुवुः । तेषां भौमानां देवानां शब्दं श्रुत्वा चातुर्महाराजिका देवाः शब्दमनुशुश्रुवुः । तेषां शब्दं त्रयस्त्रिंशत् याम्याः तौषित्याः नैर्माणरत्याः पारनिर्म्मितवशवर्त्तिदेवाश्च शुश्रुवुः । एवं यावद्ब्रह्मलोकं परस्परं शब्दमुद्घोषयन्तः उत्सरत मारिषाः! समवसरत मारिषाः! इह लोके तथागत उत्पन्नः । लाभो बतास्माकम् । सुलब्धं बतास्माकम् । अद्य मारिषाः! भगवता गौतमेन ऋषिपत्तने मृगदाये प्रवर्त्तितं शून्यताप्रतिसंयुक्तमन्येन श्रमणेन वा ब्राह्मणेन वा देवेन वा मारेण वा ब्रह्मणा वा केनचिद्वा लोके प्रवर्तयितुमशक्यं धर्मचक्रं श्रोष्याम इति ।

दुर्लभो लोके बुद्धोत्पादः दुर्लभं सद्धर्म्मश्रवणम् । दुर्लभा श्रद्धेति । साधु बत भगवन्तं गौतममुपसङ्क्रम्य जात्या अन्तं जरायाः पर्य्यवसानं मरणस्य परिच्छेदं सम्प्राप्याश्रुसमुद्रं मांसपृथिवीमस्थिभूधरं क्षिप्त्वा रागादिक्लेशप्रत्यनीकानां पृष्ठं पश्येम इति । दीपधूप-

गन्धमाल्यादीनि गृहीत्वा यत्र क्षेमं नाम मृगदायं तत्र गत्वा सूक्ष्मात्मभावान्निर्माय निरवसरं वनषण्डं कृत्वा सन्निपतन्तिस्म । एवं सन्निपतिता देवा दशसहस्रचक्रवालादस्मिन्मङ्गलचक्रवालगर्भे समवसरन्तो भूमितलाद्यावद्ब्रह्मलोकं पृथिव्यन्तरीक्षयोःसंभृताभिः प्रभाभिर्ज्वलन्तस्तस्थुः । तस्मिंस्तु समये आषाढपूर्णिमायामुत्तराषाढनक्षत्रे वर्तमाने बुद्धरूपदर्शनोद्विग्नतयेव पश्चिमाद्रिं समुपयाते सवितरि पूर्वदिशाङ्गनादासभूते भूतहिते बुद्धश्रियं द्रष्टुकाम इव युगन्धरगिरिमूर्ध्नि समुदिते रजनीकरे दशसहस्रदेवतापर्षन्मध्ये विराजमानस्त्रैलोक्यशरणः परमकारुणिको भगवान् शाक्यमुनिर्द्वाविमौ अन्तौ प्रव्रजितेन न सेवितव्यावित्यादि प्रतिमण्डितं धर्मचक्रं प्रवर्तयितुमारेभे ।

कतमौ तौ द्वौ ? । कामसुखाल्लिकानुयोगः आत्मक्लमथानुयोगश्च । कतमश्च कामसुखाल्लिकानुयोगः ? यः कामेषु कामच्छन्दः कामरागः कामनन्दी कामतृष्णः कामपिपासः कामपरिदाहः कामपर्येषणः कामस्तब्धः कामप्रग्रहणः काममूर्च्छः कामाध्येषणः कामातुरः कामाश्लीनः कामगृद्धः कामवितर्कः कामविचारः कामास्वादः पूतिगूथकूपे पतितः शूकर इव कामकर्दमेष्वेव लीयमानो निर्गमेन न रमते । निर्गन्तुं चित्तं न कुरुते । अयं भिक्षवः ! कामसुखाल्लिकानुयोग इत्युच्यते । स हीनो ग्राम्यः पार्थग्जन्यः अनार्य्यः अनर्थसंहितः तदपि न निर्वेदाय न विरागाय नोपशमाय नाभिज्ञायै न सम्बुद्ध्यै न निर्वाणाय संवर्त्तते ।

भिक्षवः ! कतमः आत्मक्लमथानुयोगः । इह कश्चित् पुद्गलः कामेष्वादीनवं दृष्ट्वा नैष्कर्म्ये चानृशंस्यं दृष्ट्वा केशश्मश्रूण्यवहृत्य बाह्येषु पृथुतीर्थायतनेषु प्रव्रज्याऽनेकविधां तीर्थायतनचर्य्यां चरितु-

कामः अचेलको भवति । मुक्ताचारो हस्तावलेख्यो भवति । एकागार्य्यो भवति । एककवलो द्व्यागार्य्यो भवति । एकया स्त्रिया दत्तया कालं यापयति । एकाह्नो दशाह्न आर्द्धमास्य इति पर्य्यायभक्तभोजनः शाकभक्ष्यः फलभक्ष्यः पर्णभक्ष्यः कण्डूलभक्ष्यः कण्टकभक्ष्यः वाकचीरफलकचीरकेशकम्बलोलूकपक्षधारणशैलघर्षणयुक्तः कण्टकशायी रजोजालधर उदकावतरणानुयुक्तो विहरति । भिक्षवः! अयमात्मक्लमथानुयोगो नाम । स हि दुःखमनार्य्यः अनर्थसंहितः । तदपि न निर्विदायै न विरागाय न निरोधाय नोपशमाय नाभिज्ञायै न सम्बुध्यै न निर्वाणाय संवर्त्तते । इमौ द्वावन्तौ अनुपगम्य मध्यमा प्रतिपदा तथागतेनाभिसम्बुद्धा चक्षुष्करणी ज्ञानकरणी उपशमाय अभिज्ञायै सम्बुध्यै निर्वाणाय च संवर्त्तते ।

कतमा? चेयं मध्यमा प्रतिपदा तथागतेनाभिसम्बुद्धा । अयमेवार्य्यः आष्टाङ्गिको मार्गः । स कतमः? । सम्यक् दृष्टिः सम्यक् संकल्पः सम्यग्वाक् सम्यक्कर्मान्तः सम्यगाजीवः सम्यग्व्यायामः सम्यक् स्मृतिः सम्यक् समाधिरिति । भिक्षवः! इयमुच्यते मध्यमा प्रतिपदा तथागतेनाभिसम्बुद्धा चक्षुष्करणी ज्ञानकरणी उपशमाय अभिज्ञायै सम्बुध्यै निर्वाणाय संवर्त्तत इति । भिक्षवः इदमुच्यते दुःखमार्य्यसत्यम् । अयं दुःखसमुदय आर्यसत्यम् । अयं दुःखनिरोध आर्यसत्यम् । अयं दुःखनिरोध आर्य्यसत्यम् । इयं दुःखनिरोधगामिनी प्रतिपदा आर्य्यसत्यम् । एषु चतुर्ष्वार्य्यसत्येषु एकैकस्य चत्वारोऽर्था भवन्ति । यद्यथा प्रथमं दुःखसार्थो हि पीडनार्थः संस्कृतार्थः विपरिणामार्थः सन्तापार्थः । समुदयस्यार्थो हि आयुहनार्थः निदानार्थः संयोगार्थः अविविक्तार्थः । निरोधस्यार्थो हि निःसरणार्थः विविक्तार्थः

असंस्कृतार्थः। मार्गस्यार्थो हि निर्य्याणार्थः हेत्वर्थः दर्शनार्थः आधिपत्यार्थः। एवमेकैकस्य चत्वारोऽर्था भवन्ति। दुःखसत्यं हि स्वकृत्येनैव प्रथमार्थं लभते। एकान्तपरिपीडनार्थेन पीडनार्थो दुःखस्यास्य सम्भवति। दुःखसत्यं तु समुदयसत्यदर्शनेन दुःखस्यार्थः संस्कृतार्थः सम्भवति। निरोधसत्यदर्शनेन दुःखस्यार्थो विपरिणामार्थः सम्भवति। दुःखसत्यं तु मार्गसत्यदर्शनेन दुःखस्यार्थः सन्तापार्थः सम्भवति। एवं समुदयसत्यं हि स्वलक्षणेनैव समुदयार्थः आयुर्हानार्थः सम्भवति। समुदयसत्यं हि दुःखसत्यदर्शनेन समुदयार्थो निदानार्थः सम्भवति। समुदयसत्यं हि निरोधसत्यदर्शनेन समुदयार्थः संयोगार्थः सम्भवति। समुदयसत्यं हि मार्गसत्यदर्शनेन समुदयार्थः अविविक्तार्थः सम्भवति। एवं निरोधसत्यं हि स्वलक्षणेनैव निरोधार्थो निःसरणार्थः सम्भवति। निरोधसत्यं हि दुःखसत्यदर्शनेन निरोधार्थो विविक्तार्थः सम्भवति। निरोधसत्यं हि समुदयसत्यदर्शनेन निरोधार्थः असंस्कृतार्थः सम्भवति। निरोधसत्यं हि मार्गसत्यदर्शनेन निरोधार्थः अमार्गार्थः सम्भवति। मार्गसत्यं हि दुःखसत्यदर्शनेन मार्गार्थो हेत्वर्थः सम्भवति। मार्गसत्यं हि समुदायसत्यदर्शनेन मार्गार्थो दर्शनार्थः सम्भवति। मार्गसत्यं हि निरोधसत्यदर्शनेन मार्गार्थं आधिपत्यार्थः सम्भवति।

इत्थं चतुर्ष्वार्य्यसत्येषु स्वयम्भूतज्ञानं नाम। भिक्षवः! तद्धि दुःखं परिज्ञेयम्। दुःखसमुदयः प्रहातव्यः। दुःखनिरोधः साक्षात्कर्त्तव्यः। दुःखनिरोधगामिनी प्रतिपदा भावितव्येति। एवं कृत्यबोधनं कृत्यज्ञानं नाम। तेष्वेवार्य्यसत्येषु कृतकृत्याविज्ञानं कृतज्ञानं नाम। भिक्षवः! तद्धि दुःखं परिज्ञातम्। दुःसमुदयः परिहीनः।

दुःखनिरोधः साक्षात्कृतः । दुःखनिरोधगामिनी प्रतिपदा भावितेति । एवं तस्य कृत्यस्य कृतभावज्ञानं नाम । षड्ज्ञानविजृम्भणदुःखादावेकैकस्मिन् सत्ये यत्र ज्ञानदर्शनानि चत्वारि ज्ञानानि । चतुर्णां सत्यानां कर्त्तव्यकृत्यपरिज्ञानं पञ्चमज्ञानं नाम । तेष्वेव कृतकृत्यसमवगमनं कृतज्ञानं नाम । एवं द्वादशाकारं त्रयाणामाक्रुतीनां वशेन त्रिपरिवृत्तं षड्ज्ञानविजृम्भणमर्पणज्ञानसङ्ख्यातदर्शनं धर्म्मचक्रसूत्रं भगवान् शाक्यमुनिरेवं कौण्डिण्यस्थविरप्रमुखानामष्टादशकोटीनां ब्रह्मणां मध्ये निषण्णो दिदेश । देशनायाः पर्य्यवसाने कौण्डिण्यस्थविरः सार्द्धमष्टादशकोटिभिर्ब्रह्मभिः श्रोतापत्तिफले प्रतिष्ठापयामास । देवानां धर्म्माभिसमयो गणनेनासंख्येयो बभूव ।

इति श्रीशीलस्कन्धस्थविरस्य कृतौ सद्धर्म्ममकरन्दे
धर्म्मचक्रप्रवर्तनपरिदीपनो नाम
पञ्चदशोऽध्यायः ।



# अथ षोडशोऽध्यायः।

इत्थं कौण्डिण्यो नाम स्थविर आषाढपौर्णमास्यां श्रोतापत्तिफलं प्रतिलेभे। प्रतिपदि वप्रो नाम स्थविरः। द्वितीयेऽहनि महानामा नाम स्थविरः। तृतीयेऽहनि अश्वजिन्नाम स्थविरः। चतुर्थेऽहनि भद्रियो नाम स्थविरः श्रोतापत्तिफलं लेभे। भगवान् शाक्यमुनिराषाढमासस्य पञ्चम्यां तेभ्यः पञ्चवर्गीयेभ्यो भिक्षुभ्यः अनात्मलक्षणं नाम सूत्रं दिष्ट्वा सर्वांश्च अर्हत्त्वे प्रत्यष्ठापयत्। तस्मिन्नेव दिवसे यशस्य नाम कुलपुत्रस्य उपनिश्रयसम्पत्तिं समवलोक्य तस्यामेव रजन्यां निर्विद्य एहि यश! इति आमन्त्र्य प्रव्रज्यां दत्वा तद्रजन्यामेव श्रोतापत्तिफले प्रतिष्ठाप्य परेद्यवि अर्हत्फलं प्रापयच्च। ॥ यशः पुनः अपरैरपि तत्सहायैर्विमलसुबाहुपूर्णजितवर्म्मतपादिभिश्चतुः पञ्चाशज्जनैः सार्द्धं समागम्य भगवतः शाक्यमुनेः सकाशं एत भिक्षवः! इत्यादिकया प्रव्रज्यया तेभ्यः अर्हत्फलं प्रादापयत्। एवं भगवता गौतमेन सार्द्धमेकषष्ट्यामर्हत्सु लोके समुत्पन्नेषु भगवान् शाक्यसिंहो वाराणस्यां क्षेमे मृगदाये प्रथमं वर्षमुवास। अथ भगवान् शाक्यजिन उषितवर्षः सार्द्धं तैः प्रव्रज्य तेषां भिक्षूणामेतद्वोचत्। चरत भिक्षवः! ग्रामनिगमेषु। दिशत भिक्षवः! धर्म्मम्। सन्ति भिक्षवः! अल्परजस्कजातीयाः सत्त्वाः। धर्म्मस्याश्रोतारः परिहास्यन्ते। भवन्त्यज्ञातारः। मैकेन मार्गेण द्वौ गच्छतम्। अहं भिक्षवः! धर्म्मदेशनार्थमुरुवेलग्राममुपसंक्रमिष्यामीति। एवमुक्त्वा नानाजनपदेषु भिक्षून् प्रेरयत्। स्वयं पात्रचीवरमादाय यत्र उरुवेलग्रामस्तत्र प्रायात्। मार्गस्यान्तरा कार्पासीयवनषण्डे राज्ञः कोशलस्य

वैमात्रेयान् भद्रियप्रमुखांस्त्रिंशन्मात्रान् कुमारान् कन्यागवेषकान् मुक्त्वा एत भिक्षवः ! इति प्रव्रज्यया प्रव्राज्य पश्चिमां दिशं प्रैरयत् । भगवान् शाक्यजिनः स्वयं हि उरुवेलकाश्यपस्य आश्रमपदं उपविश्य सार्द्धानि त्रीणि सहस्राणि प्रातिहार्य्याणि संदर्श्य सहस्रैः परिवारैः समन्वागतांश्च उरुवेलकाश्यपादींस्त्रीन्भ्रातॄञ्जटिलान् व्यनयत् प्राव्राजयच्च ।

अथ भगवान् शाक्यमुनिस्तत्राऽऽदीप्तपर्य्यायसूत्रदेशनया सहस्रान् भिक्षून् अर्हत्त्वे प्रतिष्ठाप्य तस्मिंस्त्रिमासं वासं चकार । पुनर्भगवान् शाक्यमुनिस्तैर्भिक्षुसहस्रैः परिवृतो राज्ञे बिम्बिसाराय दत्तायाः प्रतिज्ञाया मुक्तो भवेयमिति विचिन्त्य पुष्यमासे पौर्णिमास्यां कुसुमपुरं समभ्यगमत् । तत्र लष्टिवनोद्याने सुप्रतिष्ठिते न्यग्रोधवृक्षमूले निषण्ण एकादशायुतान् जनान् श्रोतापत्तिफले च एकायुतान् जनांस्त्रिषु शरणेषु च प्रत्यष्ठापयत् । परेद्यू राजा बिम्बिसारो वेणुवनोद्याने भिक्षुसंघानामनुरूपाणि निवेशनादीनि प्रतिसंस्कृत्य सभिक्षुसंघं भगवन्तं गौतमं निमन्त्र्य अन्नपानादिभिर्भोजयामास ।

कृतभोजनकृत्ये भगवति गौतमे राजा बिम्बिसारो वेणुवनं नाम विहारं भगवते शाक्यमुनये स्पर्शयित्वा एतदब्रवीत । भवन् अहं वेणुवनोद्यानं चातुर्देशिकेभ्यो बुद्धप्रमुखेभ्यो भिक्षुसंघेभ्यो वितरामीत्युक्त्वा दक्षिणोऽदकं पातयामास । तावदेव उदकपर्य्यन्तं पृथिवी प्राकम्पत । भगवान् गौतमस्तस्मिन् राज्ञि बिम्बिसारे अनुकम्पायै वेणुवनोद्यानं प्रत्यग्रहीत् । विहारदाने अनुशंसां चाकथयत् । भाष्यमाणायां च विहारदानानुशंसायां चतुरशीतिसहस्राणां प्राणिनां धर्म्माभिसमयोऽभूत् । तृतीयेऽहनि सभिक्षुसंघो भवान् गौतमो भो-

जनकृत्यं परिसमाप्य तिरोकुड्ड्सूत्रेण अनुमोदनमकार्षीत्। तदवसाने चतुरशीत्याः प्राणिनां धर्म्माभिसमयोऽभवत्। चतुर्थे दिवसे शारिपुत्रमौद्गल्यानाख्यौ द्वावग्रश्रावकौ पञ्चाशदधिकैर्द्विशतपरिव्राजकैः सार्द्धमागतौ। तदहनि तान् परिवारानर्हत्फले प्रत्यष्ठापयत्। पश्चाद्वावग्रश्रावकौ च।

एवं भगवान् सर्व्वार्थसिद्धिर्व्यग्रश्रावकप्रमुखैः पञ्चाशदुत्तरद्विशताधिकसहस्रैर्भिक्षुगणैः परिवृतो धर्म्मदेशनया लोकानुग्रहं कुर्व्वन् द्वयोर्वार्षयोर्वेणुवनोद्यान एव उवास। तत्र बुद्धस्य शाक्यमुनेः पिता राजा शुद्धोदनः सिद्धार्थकुमारः अभिसम्बोधिं प्राप्य पुष्पपुरमुपनिश्रित्य वेणुवने विहरतीति श्रुत्वा एकं प्रेष्ठममात्यमामन्त्र्य एतदब्रवीत्। वत्स त्वं सहस्रपरिवृतो राजगृहं नाम नगरं गत्वा भगवन्तं गौतममुपसङ्क्रम्य मद्वृद्धभावं पुत्रवियोगदुःखस्यास्य असहिष्णुतां च इदं कपिलवस्तु नाम नगरं श्मशानमिव निःश्रीकतामुपेतमिति तद्वार्त्तां मातृष्वसुः प्रजापतिगौतम्याः हतवत्साया गोरिव रोदनपरायणाया अनाथत्वरूपनं जनपदकल्याण्या यशोधराया देव्याः सप्तमासाधिकेषु अष्टादशसंवत्सरेषु च समात्तव्रतनियमाया अवस्थानं बलवत्पितृस्नेहं समजानतो राहुलस्य नाम कुमारस्य अनाथभावं च निवेदय इति। त्वया यथा दृष्टनियमेनैव समादिश्य पुनरपि मद्वचनेन भवन् गौतम तव पिता महाराजस्त्वां द्रष्टुकाम इति चोक्त्वा क्षिप्रमिहागमनार्थं भगवन्तं गौतमं सविनयमादेश्यमिति प्रैरयत्।

स चामात्यो राज्ञः शुद्धोदनस्य तद्वचनं सादरं सविनयं च समाकर्ण्य सार्द्धं पुरुषसहस्रैः षष्टियोजनं मार्गमतिक्रम्य राजगृहं नाम नगरं गत्वा भगवतः शाक्यमुनेः सकाशे धर्म्मं श्रुत्वा प्रसन्नः सन् प्रव्रज्यां ययाचे। अथ भगवान् गौतम एहि भि-

क्षुभावया प्रव्रज्यया प्रव्राज्य तं अर्हत्त्वे प्रतिष्ठापयामास । एतेनैव क्रमेण नवसु वारेषु नवभिरमात्यैःसह पुरुषाणां नवसहस्राणि प्रैरयत् । ते सर्व्वेपि स्वं कृत्यं परिनिष्ठाप्य तूष्णीमभवन् । ततो राजा शुद्धोदनोऽचिन्तयत् । एतावन्तो नाम जना मयि स्नेहाभावाद्भगवते गौतमाय इहागमनार्थं किञ्चिद्वचनं न तावदादिदिशुः । को न्वत्र स्वामिभक्तिगुणयुक्तो मद्वचनं करिष्यतीति चिन्तयन् कालोदायिनं नाम एकं सचिवमद्राक्षीत् । अयञ्चोदायी मत्पुत्रेण समवयस्कः सहपांशुक्रीडनेनैव एकतो वृद्धः । ममापि अतीव प्रियः अतीव विश्वास्यः अभ्यन्तरीयश्च । अन्तरा उदायिनं मत्पुत्रमिहानेतुं समर्थोऽन्यो न भवेदिति । एवं विचिन्त्य राजा शुद्धोदन उदायिनं निमन्त्रयामास । वत्स ! उदायिन् ! अहं मत्पुत्रं द्रष्टुकामो नवसहस्राणि पुरुषान् नववारान् प्रैषयम् । ते सर्वे रत्नाकरैर्गृहीताः स्रवन्त्य इव अद्य यावन्नैव निर्वर्त्तन्ते । दुर्ज्ञायो मे जीवितान्तरायः । अहं जीवन्नु द्रष्टुं न लभे । शक्ष्यसि नु वत्स ! मम पुत्रं दर्शयितुमिति । उदायी —देव ! यद्यहं प्रव्रजितुं लप्स्ये शक्ष्यामि ते पुत्रमिहानेतुमिति । अथ राजा शुद्धोदन आहस्म । वत्स ! त्वं प्रव्रजितो वा नो वा मम पुत्रं दर्शय इति । स उदायी साधु देव ! इत्युक्त्वा तद्वचनं समाकर्ण्य सहस्रैः पुरुषैः सार्द्धं कुसुमपुरमगमत् । स तत्र गत्वा भगवति गौतमे धर्म्मं दिशति पर्षत्पर्य्यन्ते स्थित्वा धर्म्मं शुश्राव । स तु सपरिवारः अर्हत्त्वं प्राप्य भगवन्तं प्रव्राज्यां ययाचे । भगवान् गौतमस्तान् सर्वान् एत भिक्षव ! इति प्रव्रज्यया प्राव्राजयच्च । स तु उदायी स्थविरो भगवतो गौतमस्य सकाशे लब्धप्रव्रज्य उपसम्पन्मार्गफलानि-समधिगतो नैव तावद्दशबलस्य शाक्यमुनेः कुलनगरे गन्तुमेष काल इति फाल्गुनपौर्णमास्यां चिन्तयामास । अथातिक्रान्तो हेमन्तः । अनु-

प्राप्तो वसन्तकालः । मनुष्यैः सस्यानि उद्धृतानि । सम्मुखसम्मुखेषु स्थानेषु मार्गानिम्नाः। हरिततृणसञ्छादिता उर्वी। सुपुष्पिता वनषण्डाः। प्रतिपादनक्षमा मार्गाः । इदानीं दशबलस्य शाक्यजिनस्य ज्ञातीनां सङ्ग्रहं कर्तुं काल इति विचिन्त्य भगवन्तं सर्वार्थसिद्धिमुपसङ्क्रम्य पञ्चप्रतिष्ठितेन समभिवन्द्य पृथिव्यां जानुनी निहत्य कृताञ्जलिरेवं मार्गवर्णनां चकार ।

अङ्गारिताः सर्वद्रुमा इदानीं फलैशिनश्छदनं विप्रहीय ।
ते अर्चिष्मन्त इव प्रज्वलन्ते समयो महावीर!*भगीरथानाम्॥

*  *  *  *

नातिशीतं नात्युष्णं नातिदुर्भिक्षकारकम् ।
शाद्वलाहरिता भूमिरेषकालो महामुने! ॥ इति

ईदृग्भिः षष्टिमात्राभिर्गाथाभिर्दशबलस्य शाक्यमुनेः कुलनगरस्य गमनार्थं मार्गवर्णनामवर्णयच्च । अथ भगवान् शाक्यजिनः कस्मात्त्व-मुदायिन्! अतिमधुरेण गमनमार्गं वर्णयसीति? पप्रच्छ । स आह भगवन्! युष्माकं पिता राजा शुद्धोदनस्तु एतर्हि जीर्णो दुर्बलः युष्माकं वियोगशोकाभिभूतः कृशविशुष्कशरीरः । स भगवन्तं द्रष्टु-कामो मां प्रेरयत् । भवन्! त्वमिदानीं ज्ञातीनां सङ्ग्रहं कुरु इति । शा० सिं–साधु साधु उदायिन्! ज्ञातीनां सङ्ग्रहं करिष्यामि । त्वं भिक्षुसङ्घेभ्य आदिशेति । ततः स स्थविर उदायी भिक्षुसङ्घेभ्यः समादिदेश ।

अथ भगवान् शाक्यमुनिर्विंशत्सहस्रैः क्षीणाश्रवैः परिवृतः अनुपमया बुद्धलीलया अनुपमेन बुद्धश्रीविलासेन च षष्टियोजनं मार्गमतिक्रम्य कपिलवस्तुपुरं सम्प्रापत् । अथ ते शुद्धोदनप्रमुखाः

* क्वचित् ' अङ्गीरसाना ' मिति दृश्यते ।

शाक्यराजा भगवतः शाक्यमुनेरागमनप्रवृत्तिं श्रुत्वा तुष्टमनसः सन्निपत्य भगवतः शाक्यजिनस्य निवासार्थं न्यग्रोधारामं नाम न्यग्रोधस्य शाक्यराजस्य प्रासादमलञ्चक्रुः । सपरिवारस्य भगवतः शाक्यमुनेः रात्रिस्थानदिवास्थानादीनि सज्जीकृत्य मार्गं समतलं कृत्वा ध्वजपताकादीनि च उच्छ्रित्य पञ्चवर्णानि कुसुमानि चावकीर्य्य भगवतः प्रत्युद्गमनार्थं सर्वालङ्कारैः प्रतिमण्डितान् दहरान् दहरान् राजकुमारांश्च राजकुमारीश्च गन्धपुष्पादिहस्तान् प्रथमं प्रैरयन् । तेषां पश्चात् ते राजानो भगवतः शाक्यमुनेः प्रत्युद्गमनं चक्रुः । अथ सपरिवारो भगवान् शाक्यपुङ्गवस्तत्र स्थापितां संहतनावमारुरोह । अशीत्यनुव्यञ्जनद्वात्रिंशद्वरमहापुरुषलक्षणैः समलङ्कृतस्तत्रत्ये तटे तस्थौ च । कपिलवस्तुदेवदहसुप्रवासनीलम्बापुरवासिभिः शाक्य-कोलियवंशसम्भवैरशीतिकुलसहस्रैर्ज्ञातिगणैः प्रवर्तितैः स्तुतिवचन-शतसहस्रमुखैरुपशोभितरूपविलासो भगवान् शाक्यसिंहो नावा समुत्तीर्य्य ज्ञातीनां प्रसादजननार्थं स्वां रूपश्रियं दर्शयन् षड्वर्ण-रश्मीन् विसर्ज्जयंस्तरुणकेशरः सिंह इव शोभमानो विंशतिसहस्रैः क्षीणाश्रवैः परिवृतो न्यग्रोधारामं प्रविश्य सुसज्जिते वरबुद्धासने निषसाद ।

तदा शुद्धोदनप्रमुखाः शाक्यराजा मानात्मानो मानस्तब्धाः स्वं स्वं वृद्धभावमेव चिन्तयन्तः अयं सर्वार्थसिद्धिकुमारः अस्मदतीव दहरः अस्माकं कनीयान् भागिनेयः पुत्रः । नप्ता इति विचिन्त्य भगवन्तं गौतममनभिवन्द्यैव निषण्णाः । अथ भगवान् शाक्यमुनिस्ते-षामभिप्रायं विदित्वा न मां ज्ञातयो वन्दन्ते कथं तैर्वन्दनं कारयि-ष्यामीति चिन्तयामास । ततो भगवान् शाक्यजिनः अनन्यसाधरणं यमकप्रातिहार्य्यं कर्तुकामः पूर्वापरायतं दशसहस्रचक्रवालविस्तृतं

रत्नचङ्क्रमं निर्माप्य तदनन्तरमभिज्ञापादकं चतुर्थं ध्यानं समापद्य पृथिवीकायिणा परिकर्म्मकरणेन अन्तरिक्षे स्थित्वा परस्परमचङ्क्रम्यत। भगवान् शाक्यमुनिर्यदा स्वयं चङ्क्रम्यते निर्मितबुद्धस्तदा तिष्ठति। भगवान् गौतमो यदा स्वयं पृच्छति तदा निर्मितबुद्धस्ताद्विसर्ज्जयति। भगवान् शाक्यमुनिर्यदा स्वयं तिष्ठति निर्मितबुद्धस्तदा शय्यां करोति। भगवान् शाक्यसिंहो यदा स्वयं सूर्य्यचन्द्रौ परामृशति निर्मितबुद्धस्तदा धर्म्मं दिशति। इत्थं तस्य भगवतो गौतमस्य अनेकप्रकारं प्रातिहार्य्यं कुर्व्वतः पादपांशवस्तेषां ज्ञातिगणानामुपरिशीर्षे अवकीर्यमाणा इव अभवन्।

अथ राजा शुद्धोदनस्तत्प्रतिहार्य्यसंदर्शनेन प्रीतिप्रमोदानिरंतरितहृदयस्तामधिवासयिमतुद्यमवन् स्वदोषक्षमापनार्थं शिरसि अञ्जलिं प्रणिधाय भगवन्तं गौतममेतदब्रवीत्। अभिवन्देहं भगवतं गौतमम्। अहं भवन्! मोघजीर्णे इति जानामि। दोषो मां भवन्! अध्यगमत् यथाबालं यथामूढं तथैव यूयं मां जानीत तथागते अर्हति सम्यक्सम्बुद्धे। क्षमतां भगवान् गौतमः अस्मासु अनुकम्पामुपादाय। इयं भगवते शाक्यमुनये मम तृतीया वन्दना। पूर्व्वंहि कालदेवलाय ऋषये वन्दितुकामो भवन्तं त्वां गृहीत्वा समुपस्थितः तदा चक्रभ्रम इव पादौ ते परिवृत्य ऋषेः कालदेवलस्य शीर्षोपरि अलंङ्कारौ जातौ। तदवलोक्य अधिगतसौमनस्यस्तव पादौ गृहीत्वा शिरसि प्रत्यष्ठापयम्। इयं भवन् मे प्रथमा वन्दना। तथा त्वय्येकवर्षीये जाते वापनमङ्गलदिवसे जम्बुच्छायायामघटनीयमाश्चर्य्यं दृष्ट्वा भवच्चरणौ मच्छिरसिप्रतिष्ठाप्यावन्दिषि इयं भवन्! मम द्वितीया वन्दना। भवन्! भगवन्! इदानीं तथा अदृष्टपूर्व्वं प्रातिहार्य्यं दृष्ट्वा तव पादौ वन्दे। इयं भवन्! मम तृतीया वन्दना। अथ राजा शुद्धोदन एषोहं भवन्! बुद्धं

शरणं गच्छामि धर्म्मं शरणं गच्छामि सङ्घं शरणं गच्छामीत्युक्त्वा अवन्दत । वन्दितवति च राजनि शुद्धोदने सर्वेऽपि राजानो ववन्दिरे । इत्थं भगवान् शाक्यमुनिर्ज्ञातिभिर्वन्दनां कारयित्वा नभस्तलादवतीर्य्य सज्जिते वरबुद्धासने निषण्णः । तत्क्षणेऽपि पुष्करवृष्टिः पपात । तत्र भगवान् शाक्यजिनः पुष्करवृष्टिमारभ्य महाविश्वन्तरजातकं समभाषत । देशनापर्य्यवसाने शुद्धोदनमहाराजप्रमुखा अपरे च शाक्यराजा अश्रुतपूर्वदेशनाविलासं श्रुत्वा एकान्तेन प्रहृष्टमनसो निजासनेभ्यः समुत्थाय भगवन्तं गौतमं वन्दित्वा प्रचक्रमुः । तेषां सर्वेषामेतदभून्मनसि । ससङ्घो भगवान् शाक्यमुनिः श्वः पितृ राज्ञः शुद्धोदनस्य मन्दिर एव भोजनं करिष्यतीति । तस्मात् कश्चित् ससङ्घं भगवन्तं गौतमं परेद्युर्भोजनार्थं न न्यमन्त्रयत् ।

अपरेद्युर्भगवान् शाक्यपुङ्गवो भिक्षाटनकाले विंशतिसहस्रभिक्षुभिः परिवृतः अष्टौ संवत्सरान् श्मशानमिव निर्लक्ष्मीकदर्शनं कपिलवस्तुपुरवरं प्रवरषड्वर्णरश्मिविसरान् विसृज्य नूतननगरमिव अलङ्कुर्वन् पात्र चीवरमादाय पिण्डाय प्रायात् । अथ भगवान् शाक्यमुनिर्नगरप्रमुखे इन्द्रकीले स्थित्वा आवर्ज्जयत् । कथं नु पूर्वे सम्बुद्धाः स्वकुलनगरे भिक्षामटन्तः प्रथमतरं भिक्षां जगृहुरिति । आवर्ज्जनसमये गङ्गापुलिनोपमानां तेषां पूर्वेषां बुद्धानामेकोपि बुद्धो गृहपरिपाटीमुल्लिङ्घ्य न गत इति अद्राक्षीत् । दृष्ट्वा च मयापि इदानीं स्वं वंशं स्वं व्रतं च रक्षयता गृहपरिपाटीचर्य्यया गन्तव्यम् । पश्चात् मम श्रावका अपि मामनुसरन्तो भिक्षाटनव्रतं परिपूरयिष्यन्ति इति विचिन्त्य अग्रेस्थितगृहात्प्रभृति परिपाट्या भिक्षाटनं चकार ।

प्रविवेश । निषसाद च तत्र समुच्छ्रितधवलच्छत्रे रत्नमये पर्य्यङ्के । तस्या देव्याः स्नेहमहत्त्वं निश्चित्य चन्द्रकिन्नरजातककथया तस्याः शोकं विनोद्य श्रोतापत्तिफले प्रत्यष्ठापयत् । ततश्चानन्तरं भगवान् गौतमस्तस्य कनीयांसं मातृष्वसुः पुत्रं नन्दं नाम कुमारं च स्वं पुत्रं राहुलं नाम कुमारञ्च प्रव्राज्य तावादाय पुनः कुसुमपुरमेव अगमत् । भगवान् शाक्यसिंहः सार्द्धं भिक्षुसङ्घैः राजगृहनगरमुपनिश्रित्य वेणुवननाम्नि महाविहारे विहरन् संसारसागरे निमग्नान् वैनेयजनान् समुद्धरंस्तत्रैव वेणुवने चतुर्थं वर्षमुवास । पञ्चमे खलु वर्षे भगवान् शाक्यमुनिः पञ्चशतैर्भिक्षुभिः सार्द्धं राजगृहनगरान्निष्क्रम्य यत्र वैशाली तत्रोपगम्य वैशालिनगरमुपनिश्रित्य महावने कूटागारशालायां विजहार । स तत्र विहरन् वैनेयजनेष्वनुकम्पया तत्रैव कूटागारशालायां वर्षमुवास । तस्मिन्नेव संवत्सरे बुद्धपितृ राज्ञः शुद्धोदनस्य बलवान् रोग उदपादिष्ट । अथ ते शाक्यराजा महाप्रजापतिप्रमुखा अन्तःपुरीयाश्च तं रोगं व्युपशमयितुं न शक्नुवते स्म । राजा शुद्धोदनो महता व्याधिना परिपीडितः सन् दृढतररोगातुर आसीत् । कृशतरः शिथिलगात्रो मरणमञ्चे निपन्नः । अहो दुःखं अहो दुःखमिति तत इतः परिवर्त्तमानः भगवन्तं गौतमं सस्मार । अहो आर्य्यपुत्रः सम्यक्सम्बुद्ध इहागतो दृढवेदनं मच्छीर्षं परिमर्द्दयति आनन्दनन्दौ च उभयोः पार्श्वयोः राहुलश्च मे पृष्ठं परिमर्द्दयतीति उक्त्वा श्रीशयने निपेदे ।

तस्मिंस्तु समये सकलमलपरिशुद्धो धौतकमलोपमो लोकान्तदर्शी करुणार्णवपारगो दयार्द्रचित्तः शाक्यकुलमृगेन्द्रो भगवान् गौतमो वैशालीमुपनिश्रित्य महावने कूटागारशालायां विहरन् प्रत्यूषे सिंहशय्याया उत्थाय महाकरुणासमापत्तिज्ञानं सम्पाद्य ततश्चोत्थाय

पूर्वबुद्धेषु कृताधिकारसम्पन्नान् सत्त्वान् विलोकयामास । एवं विलोकिते दृढतरग्लानस्य मरणमञ्चे निपन्नस्य राज्ञः शुद्धोदनस्य अतीवदारुणां वेदनां समवलोक्याचिन्तयत् । अहो मत्पिता महाराजः अद्यैव तीव्ररोगो मदागमनं प्रार्थयते । कालो ममेदानीं गन्तुमित्यधिष्ठितादासनादुत्थाय आनन्दमामन्त्र्य एतदब्रवीत् । आनन्द ! अद्य मत्पिता महाराजस्तीव्ररोगो मदागमनं प्रार्थयते । याम आनन्द ! तं पितरं पश्याम एवंरूपश्चानन्द ! पिता दुर्लभः । तस्येदं पश्चिमं दर्शनम् । गच्छानन्द ! यत्र यत्र क्षीणाश्रवा भिक्षवो वसन्ति तेभ्य आदिश । अथ स आनन्दः साधु भगवन् ! इति आसनादुत्थाय यत्र यत्र क्षीणाश्रवा भिक्षवो वसन्ति तत्र तत्र गत्वा एवमाहस्म । भवन्तः ! भगवान् गौतमः कपिलवस्तुपुरं गत्वा स्वं पितरं द्रष्टुकाम इति । अथ ते शारिपुत्रमौद्गल्यायनप्रमुखाः क्षीणाश्रवा आनन्दस्य तद्वचनं समाकर्ण्य स्वात् स्वात् स्थानात् पात्रचीवराण्यादाय सन्निपतन्ति स्म ।

तदनन्तरमायुष्मान् आनन्दो भगवन्तं गौतमं न्यवेदयत् । सन्निपतितो भवन् ! भिक्षुसङ्घ इति । ततो भगवान् शाक्यमुनिर्भिक्षुसङ्घेभ्य एवमाहस्म । भिक्षवः ! मत्पितुः राज्ञः शुद्धोदनस्य इदं पश्चिमं दर्शनम् । तस्माद्यूयं सार्धं मया मत्पितुर्दर्शनार्थमागच्छतेति । अथ भगवान् शाक्यमुनिः पञ्चशतैः क्षीणाश्रवैः परिवृतो बुद्धानुभावादन्तरिक्षमभ्युद्गत्य नवतिहंससहस्रपरिवृतो धृतराष्ट्रो हंसराज इव कपिलवस्तुपुरं समागत्य स्वपितुर्मन्दिरं प्रविवेश । सभिक्षुसंघो भगवान् गौतमो राजभवनं गत्वा राज्ञः शुद्धोदनस्य शयनमञ्चस्य उच्छीर्षे निषण्णः कृशं शैथिल्ययुतशरीरं राजानं दृष्ट्वा अतीव संविग्नं समुपस्थाय राजानमेतदब्रवीत् । महाराज ! कच्चित् क्षमणीयम् । काचन दुःखवेदना अभिवर्द्धते नोपशाम्यतीति । राजा

प्रविवेश । निषसाद च तत्र समुच्छ्रितधवलच्छत्रे रत्नमये पर्य्यङ्के । तस्या देव्याः स्नेहमहत्त्वं निश्चित्य चन्द्रकिन्नरजातककथया तस्याः शोकं विनोद्य श्रोतापत्तिफले प्रत्यष्ठापयत् । ततश्चानन्तरं भगवान् गौतमस्तस्य कनीयांसं मातृष्वसुः पुत्रं नन्दं नाम कुमारं च स्वं पुत्रं राहुलं नाम कुमारञ्च प्रव्राज्य तावादाय पुनः कुसुमपुरमेव अगमत् । भगवान् शाक्यसिंहः सार्द्धं भिक्षुसङ्घैः राजगृहनगरमुपनिश्रित्य वेणुवननाम्नि महाविहारे विहरन् संसारसागरे निमग्नान् वैनेयजनान् समुद्धरंस्तत्रैव वेणुवने चतुर्थं वर्षमुवास । पञ्चमे खलु वर्षे भगवान् शाक्यमुनिः पञ्चशतैर्भिक्षुभिः सार्द्धं राजगृहनगरान्निष्क्रम्य यत्र वैशाली तत्रोपगम्य वैशालिनगरमुपनिश्रित्य महावने कूटागारशालायां विजहार । स तत्र विहरन् वैनेयजनेष्वनुकम्पया तत्रैव कूटागारशालायां वर्षमुवास । तस्मिन्नेव संवत्सरे बुद्धपितुः राज्ञः शुद्धोदनस्य बलवान् रोग उदपादिष्ट । अथ ते शाक्यराजा महाप्रजापतिप्रमुखा अन्तःपुरीयाश्च तं रोगं व्युपशमयितुं न शक्नुवते स्म । राजा शुद्धोदनो महता व्याधिना परिपीडितः सन् दृढतररोगातुर आसीत् । कृशतरः शिथिलगात्रो मरणमञ्चे निपन्नः । अहो दुःखं अहो दुःखमिति तत इतः परिवर्त्तमानः भगवन्तं गौतमं सस्मार । अहो आर्य्यपुत्रः सम्यक्सम्बुद्ध इहागतो दृढवेदनं मच्छीर्षं परिमर्द्दयति आनन्दनन्दौ च उभयोः पार्श्वयोः राहुलश्च मे पृष्ठं परिमर्द्दयतीति उक्त्वा शीशयने निपेदे ।

तस्मिंस्तु समये सकलमलपरिशुद्धो धौतकमलोपमो लोकान्तदर्शी करुणार्णवपारगो दयार्द्रचित्तः शाक्यकुलमृगेन्द्रो भगवान् गौतमो वैशालीमुपनिश्रित्य महावने कूटागारशालायां विहरन् प्रत्यूषे सिंहशय्याया उत्थाय महाकरुणासमापत्तिज्ञानं सम्पाद्य ततश्चोत्थाय

पूर्वबुद्धेषु कृताधिकारसम्पन्नान् सत्त्वान् विलोकयामास । एवं विलोकिते दृढतरग्लानस्य मरणमञ्चे निपन्नस्य राज्ञः शुद्धोदनस्य अतीवदारुणां वेदनां समवलोक्याचिन्तयत् । अहो मत्पिता महाराजः अद्यैव तीव्ररोगो मदागमनं प्रार्थयते । कालो ममेदानीं गन्तुमित्यधिष्ठितादासनादुत्थाय आनन्दमामन्त्र्य एतदब्रवीत् । आनन्द! अद्य मत्पिता महाराजस्तीव्ररोगो मदागमनं प्रार्थयते । याम आनन्द! तं पितरं पश्याम एवंरूपश्चानन्द! पिता दुर्लभः । तस्येदं पश्चिमं दर्शनम् । गच्छानन्द! यत्र यत्र क्षीणाश्रवा भिक्षवो वसन्ति तेभ्य आदिश । अथ स आनन्दः साधु भगवन्! इति आसनादुत्थाय यत्र यत्र क्षीणाश्रवा भिक्षवो वसन्ति तत्र तत्र गत्वा एवमाहस्म । भवन्तः! भगवान् गौतमः कपिलवस्तुपुरं गत्वा स्वं पितरं द्रष्टुकाम इति । अथ ते शारिपुत्रमौद्गल्यासप्रमुखाः क्षीणाश्रवा आनन्दस्य तद्वचनं समाकर्ण्य स्वात् स्वात् स्थानात् पात्रचीवराण्यादाय सन्निपतन्ति स्म ।

तदनन्तरमायुष्मान् आनन्दो भगवन्तं गौतमं न्यवेदयत् । सन्निपतितो भवन्! भिक्षुसङ्घ इति । ततो भगवान् शाक्यमुनिर्भिक्षुसङ्घेभ्य एवमाहस्म । भिक्षवः! मत्पितू राज्ञः शुद्धोदनस्य इदं पश्चिमं दर्शनम् । तस्माद्यूयं सार्धं मया मत्पितुर्दर्शनार्थमागच्छतेति । अथ भगवान् शाक्यमुनिः पञ्चशतैः क्षीणाश्रवैः परिवृतो बुद्धानुभावादन्तरिक्षमभ्युद्गत्य नवतिहंससहस्रपरिवृतो धृतराष्ट्रो हंसराज इव कपिलवस्तुपुरं समागत्य स्वपितुर्मन्दिरं प्रविवेश । सभिक्षुसंघो भगवान् गौतमो राजभवनं गत्वा राज्ञः शुद्धोदनस्य शयनमञ्चस्य उच्छीर्षे निषण्णः कृशं शैथिल्ययुतशरीरं राजानं दृष्ट्वा अतीव संविग्नं समुपस्थाय राजानमेतदब्रवीत् । महाराज! किञ्चित् क्षमणीयम् । काचन दुःखवेदना अभिवर्द्धते नोपशाम्यतीति । राजा

कालं मन्यसे महाराज! इति। तच्छ्रुत्वा सर्व्वे शाक्यराजा महाप्रजापतीप्रमुखा अवरोधगणाश्च केशान् परिकीर्य्य उरांसि प्रहरन्तो रुरुदुः। अथ राजा शुद्धोदनः सर्वान् परिजनान् संशमय्य एतदब्रवीत्। यूयं मा शोचत। मा परिदेवध्वम्। अयं धर्म्मो लोकस्य सर्वैश्च प्रियैर्मनापैर्नानाभावो विनाभावः। यज्जातं भूतं प्रयातं प्रलुप्तधर्म्मं तत् कुतोऽत्रलभ्यमिति। अधिष्ठितादासनादुत्थाय लोकविन्दु शाक्यपुङ्गवमभिवन्द्य एतदवोचत्। भगवन्! लोकनाथ! यत्किञ्चिन्मे अपराद्धं कायकर्म्म मनःकर्म्म वा तत् सर्वं भगवान् गौतमः क्षमताम्। अनुजानीहि भवन्! मां परिनिर्व्वास्यामीत्युक्त्वा श्रीशयने निपन्नः परिनिरवात्*। भगवान् गौतमो राज्ञः शुद्धोदनस्य परिनिर्वाणं ज्ञात्वा धर्म्मसंवेगं जनयन् भिक्षुसङ्घेभ्य एतदवोचत्। पश्यत भिक्षवः! मत्पितरम्। अलं जीवत्ताऽयं मरणधर्म्म इति।

तदा महाप्रजापती च यशोधरा च अवरोधाश्च शाक्यराजाश्च उरांसि प्रहरन्तो रुरुदुः। अथ भगवान् शाक्यमुनिरनित्यादिप्रतिसंयुक्तया धर्म्मकथया तांश्च सर्वान् समाश्वास्य आयुष्मन्तं महाकाश्यपमेतदब्रवीच्च। गच्छ त्वं महाकाश्यप! वयं यत्र पितरं धक्ष्यामस्तं भूमिप्रदेशं जानीहि इति। स साधु भवन्! इति आसनादुत्थाय सह धुताङ्गधरैर्भिक्षुभिः शाक्यराजैश्च महाजनैः परिवृत आदहनस्थानं समभ्यगात्। गत्वा च चितिमकारयत्। तदा दशसहस्रचक्रवालवासिनः पुरुहूतप्रमुखाश्च देवाः पञ्चशतकूटागाराणि दिव्यांश्च चन्दनगन्धादीन् गृहीत्वा समभिगम्य सार्द्धं स्थविरेण महाकाश्यपेन चितिकृत्यं परिन्यष्ठापयन्। परिनिष्ठापितायां चित्यां स्थविरो महाकाश्यपो भगवन्तं गौतमं तन्निवेदयामास। ततश्च

* राजा शुद्धोदनो जातित एकनवतितमेवत्सरे परिनिरवात्।



दशबलः शाक्यपुङ्गवः स्वयमेव राज्ञः शुद्धोदनस्य शीर्षमुत्क्षिप्या शोधयत् परामृशच । स्थविरः शारिपुत्रोऽपि भगवति गौतमे राज्ञः शुद्धोदनस्य शीर्षं शोधयति उदकं निषिषेच । शास्ता राज्ञः शुद्धोदनस्य शिरः परामृशन् शारिपुत्रमभाषत । पश्यसि शारिपुत्र! मत्पितरम् । ये केचित् शारिपुत्र! कल्याणधर्म्माणः पुद्गलाः पुण्यं वा बोधिज्ञानं वा आकाङ्क्षन्ति त एव मातापितरौ पुष्यन्तु । इत्युक्त्वा राजानं शुद्धोदनमुत्क्षिप्य मणिमये च पर्य्यङ्के आरोपयत् । स्वयमेव मञ्चमुत्क्षिप्य सार्द्धं शतसहस्रैराश्चर्य्याद्भुतैश्चितायामारोपयामास ।

तदा शक्रो देवेन्द्रश्चितां प्रदक्षिणीकृत्य महान्तं तेजस्विनं ज्योतीरत्नमणिं गृहीत्वा राज्ञः शुद्धोदनस्य चितां ज्वलयितुकाम आसीत् । अथ भगवान् सर्वार्थसिद्धिराहस्म । देवराज! मत्पितू राज्ञः शुद्धोदनस्य चितामहमेव प्रथमं ज्वलयामि । इत्युक्त्वा भगवान् गौतमः स्वयमेव मणिमादाय पितू राज्ञः शुद्धोदनस्य चिताम्प्राज्वालयत् । ततः शचीपतिप्रमुखा देवा ज्वलयामासुः। तस्यां राज्ञः शुद्धोदनस्य चितायां दह्यमानायां भगवान् शाक्यमुनिस्तत्रापि अनित्यत्वमतिसंयुक्तया धर्म्मकथया शाक्यराजान् महाप्रजापतीप्रमुखांश्च अवरोधगणान् समाश्वासयत् । देशनायाः पर्य्यवसाने चतुरशीत्याः प्राणसहस्राणां धर्म्माभिसमय आसीत् । एवं भगवान् गौतमो पितू राज्ञः शुद्धोदनस्य आदहनकृत्यं कारयित्वा सप्ताहातिक्रमे पुनर्भिक्षुसङ्घैः सह वैशालीमेवागमत् ।

तदा महाप्रजापती गौतमी राज्ञः शुद्धोदनस्य वियोगशोकमसहमाना दुःखेन प्रपीडिता अनुप्रवर्तमाननेत्रजलधारानिपातैः संदर्शितवेदना एवं चिन्तयामास । पुत्रो मे सिद्धार्थः सप्ताहाभ्यन्तरे प्राप्तव्यं चक्रवर्तिराज्यं प्रहाय प्रव्रज्य अशिथिलेन वीर्य्यारम्भेण स्वमनोरथ-

यशोधरा नन्दो राहुलश्चेति सर्वानिमांल्लब्धश्रोतापत्तिफलान् पुनः प्रव्राज्य मोक्षमार्गे प्रत्यष्ठापयम् । अथावशिष्टा मे माता । मातुर्गुण-प्रत्युपकृतिकरणस्येदानीं कालः सम्प्राप्त इति । अथ भगवान् सर्वदर्शी पूर्वे सम्बुद्धाः कथं मातुर्गुणप्रत्युपकृतिं चक्रुरिति चिन्तयामास । ते सर्वे भगवन्तः सम्बुद्धाः सम्बोध्याः सप्तमे वर्षे यमकप्रातिहार्य्यं कृत्वा तीर्थकान् दमयित्वा त्रयस्त्रिंशद्देवभवने देवराजस्य शचीपतेः पाण्डुकम्बलशैलासने निषद्य अभिधर्म्मकथनेन मातुर्गुण प्रत्युपकृतिञ्चक्रुः । अहमपि तथैव करोमीति विचिन्त्य भिक्षुभ्य एतदब्रवीत् अहं भिक्षवः! इतः सप्तमे दिवसे तीर्थकांश्च दमयित्वा आम्रवृक्षमूले यमकप्रातिहार्य्यं करिष्यामीति ।

अथ तीर्थकाः परस्परघोषणेन तच्छ्रुत्वा ततस्ततः स्वान् स्वान् उपस्थातॄन् समादाय शतसहस्रं लब्ध्वा यत्र यत्र आम्रवृक्षाः सन्ति तत्र तत्र गत्वा मूलानि चिच्छिदुः । तदा सर्वे आरामा विगताम्रवृक्षा अभवन् । अथ ते अन्यतीर्थकाः परिव्राजकाः श्रमणो गौतमः श्व. प्रातिहार्य्यं करिष्यति । अपि च विगता आम्रवृक्षाः। कुत्र श्रमणो गौतमः प्रातिहार्य्यं करिष्यति । श्वो द्रक्ष्यामः प्रातिहार्य्यकरणमिति ऊचुः । तदा षड् शास्तारः सन्ति । पूरणः काश्यपः मक्खलिर्गोशालः अजितः केशकम्बलः प्रकुधः कात्यायनः सञ्जयः बिल्वास्थिपुत्रः निर्ग्रन्थो नाथपुत्र इति । तेऽपि हन्त वयं श्रमणस्य गौतमस्य प्रातिहार्य्यं प्रतिकरिष्याम इति स्वैः स्वैरुपस्थायकैः खदिरवृक्षान् नीत्वा मण्डपं निर्म्माप्य तत्र नीलोत्पलकुसुमैश्छदनं कारयामासुः । ते तत्र प्रातिहार्य्यं करिष्याम इति गुल्मगुल्मशः सन्निपेतुः । परेद्युर्भगवान् गौतमो भिक्षाटनवेलायां सुरक्तवर्णं द्विपटनिवासनं निवस्य विद्युल्लता-सन्निभं कायवेष्टनं बध्वा बन्धजीवलाक्षारससन्निभं नवरक्तं पृथिवी-

कम्पनसमर्थं महार्घं पांशुकूलचीवरं परिधाय स्थविरेण आनन्दने समं श्रावस्तीनगरं भिक्षार्थं प्रविवेश ।

तदा राज्ञः प्रसेनजित्कोशलस्य उद्यानपालको गण्डो नाम आसीत् । स तु उद्यान एव वसति । स गण्डः पिङ्गलकैः कृते कूटाभ्यन्तरे पक्वमेकं महान्तं आम्रफलमद्राक्षीत् । स दृष्ट्वा एवमचिन्तयत् । अहो आश्चर्य्यम् अकालजमेतत् पक्वमाम्रफलमिति । अस्मिन्नेव आषाढमासे आम्रफलं कुतो लभ्यमिति । हन्ताहं आम्रफलमिदं राज्ञे प्रसेनजित्कोशलाय पूर्णपात्रं करोमि । राजा प्रसेनजित्कोशलस्तद्दृष्ट्वा तुष्टो मह्यं धनं दास्यतीति विचिन्त्य तद्गृहीत्वा कदलीपत्रे निधाय यत्र श्रावस्ती तत्राभिमुखः प्रायात् । ददर्श च स गण्डः अन्तरा मार्गे आयान्तमशीत्यनुव्यञ्जनरञ्जितं व्यामप्रभाकेतुमालालङ्कृतं स्थविरेण आनन्देनानुगतं भगवन्तं गौतमम् । दृष्ट्वा च एवं चिन्तयामास । अहो आश्चर्य्यं बतेदं बुद्धरूपम् । अहो अद्भुतं बतेदं बुद्धरूपम् । सुन्दरएष विलास इति । प्रीतिभरितहृदयः श्रद्धायुतेन चेतसा पञ्चविधया प्रीत्या स्फुरितसकलशरीर एवमचिन्तयत् । यद्यऽहमिदं आम्रफलं राज्ञे प्रसेनजित्कोशलाय दास्यामि तदा स राजा मह्यमष्ट वा षोडष वा कार्षापणान् दास्यति । तदलमेकस्मिन् जन्मनि मज्जीवितवृत्त्यै । यद्यऽहं भगवते गौतमाय दास्यामि अपर्य्यन्तं कालं विपुलफलं सुखावहञ्च मे भविष्यतीति । एवं विचिन्त्य यत्र भगवान् गौतमस्तत्रोपसङ्क्रम्य आम्रफलं भगवते शाक्यपुङ्गवाय उपानयत् । अथायुष्मान् आनन्दः पात्रं भगवतो गौतमस्य हस्ते प्रत्यष्ठापयत् । भगवान् शाक्यजिनः पात्रमुपनमय्य आम्रफलं प्रत्यग्रहीत् । स भगवांस्तत्रैव निषत्तुं चित्ते चकार । तेन भगवता तथा चेतसि कृते तत्कालमेव महोर्वीउद्भिद्य आसनमुपनिन्ये ।

भगवान् शाक्यमुनिस्तस्योपरि निषसाद ।

अथ गण्डो भगवतो गौतमस्य पात्रेणैव उदकमादाय तस्मै प्रददौ । भगवान् गौतमः पक्वमाम्रफलं संमर्द्य पानकं कारयित्वा पपौ । गण्डाय चैवमाहस । गण्ड! त्वमिदमाम्रबीजं भूमौ पांशुमपहृत्य रोपय । अथ तेन तथा कृते भगवान् शाक्यमुनिस्तस्योपरि स्वं कोमलहस्तं पर्यवर्तयत् । हस्ते परिवर्तितमात्र एव भगवता गौतमेन लाङ्गलशीर्षमात्रस्कन्धो भूत्वा उच्चैः पञ्चाशद्हस्त आम्रवृक्षः समुन्नतः एतस्यैका महाशाखा पञ्चाशद्हस्ता अभवत् । स च आम्रतरुस्तावदेव कुसुमफलसम्पन्नो भूत्वा पक्वानि फलानि च दधौ । पश्चादागताश्च भिक्षवः पक्वानि आम्रफलानि बुभुजिरे । स हि आम्रतरुर्गण्डेन रोपितत्वाद्गण्डाम्रवृक्ष इति लोके विश्रुतः । भगवान् शाक्यमुनिराम्रपानकं पीत्वा पुनर्जेतवनमेव प्रतिन्यवृतत् ।

तदा सहस्राक्षः पुरुहूतो मनुष्यलोकं समभ्यैक्षत । स देवराजो भगवतो गौतमस्य अभिप्रायं ज्ञात्वा मरुद्बलाहकाय देवपुत्राय आज्ञापयत् । भद्र! त्वं वातमण्डलमुत्पादयन् याहीति । पुनश्च चन्द्रसूर्यौ देवपुत्रौ आज्ञापयत् । भद्रौ! युवां तीर्थकानां निवासनं मण्डपमुत्पाटयन्तौ गच्छतम् । तीर्थकान् पलाययत इति प्रैरयत् । तौ साधु देवराज! इति गत्वा सर्वांश्च तीर्थकान् पलाययताम् । अथ शचीपतिः सुरनाथो विश्वकर्म्माणं देवपुत्रं निमन्त्र्य एवमाहस्म । भद्र! त्वं गण्डाम्रतरुमलङ्कुरु । अद्य भगवान् शाक्यमुनिस्तत्र यमकप्रातिहार्य्यं दर्शयिष्यति । स विश्वकर्म्मा साधु शचीपते! इति गत्वा गण्डाम्रतरुवरं विविधकुसुमफलपल्लवरञ्जितशाखं क्षौमदुकूलपट्टकौशेयदिव्यवस्त्रविलसितप्रशाखं वामाङ्गवलयाभरणादिभिरितविलसितकल्पितस्कन्धं कल्पद्रुममिव स्वलङ्कृत्य सुरपुरमेव प्रति-

जगाम ।

तदा भगवान् शाक्यसिंहो गन्धकुट्यां निषण्णः सायं समायस्त्या उत्थाय काल इदानीं यमकप्रातिहार्य्यं कर्तुमिति विचिन्त्य गन्धकुट्या निरक्रामत् । स भगवान् गौतमो भिक्षुसङ्घैः परिवृतो यत्र गण्डाम्रतरुस्तत्रोपगतः । तस्मिन्दिवसे आषाढनक्षत्रं वर्ततेस्म । तदा दशसहस्रचक्रवालवासिनः पुरुहूतप्रमुखाः सर्वे देवा भगवतः शाक्यजिनस्य प्रातिहार्य्यं द्रष्टुकामास्तत्राजग्मुः । तथा नृपवरप्रमुखाः सर्वे नागरिकाः श्रमणब्राह्मणा अन्यतीर्थकाश्च समाजग्मुः तेऽपि सर्वे जनाः परस्परं संघट्टयन्तोभगवतो गौतमस्य प्रातिहार्य्यदर्शनार्थं ततस्ततः सन्निपतन्तिस्म । भगवान् शाक्यमुनिस्तेषां देवमनुष्यनृपतिवरगणानां मध्ये गण्डाम्रतरुमूले निषण्णः।

तदा महामौद्गल्यायनो भगवन्तं गौतमं समभिवन्द्य एवमाहस्म । भवन्! अहं प्रातिहार्य्यं करिष्यामीति । मौद्गल्यायन! त्वं कथं करिष्यसीति भगवान् शाक्यमुनिः पप्रच्छ । मौ०—भवन्! अहं सुमेरुं नगपतिं तात्व्यभ्यन्तरे कृत्वा सर्षपबीजमिव खादिष्यामीति । शा० सिं०—मौद्गल्यायन! त्वमपरं किं करिष्यसि । मौ०—भवन्! अहमिमां वसुन्धरां किलञ्जमिव संहृत्य अङ्गुल्यभ्यन्तरे निक्षेप्स्यामीति । शा० सिं०—मौद्गल्यायन! त्वमन्यत् किं करिष्यसि । मौ०—भवन्! अहमिमां महोर्वीं भस्त्रामिव परिवर्त्य महाजनान् पृथिवीरसं खादयिष्यामीति । शा० सिं०—मौद्गल्यायन! त्वमपरं किं करिष्यसि । मौ०—भवन्! अहमिमां पृथिवीं वामे हस्ते धृत्वा इमान् सकलान् जनान् अस्मिन्नेव द्वीपे प्रतिष्ठाप्य सुमेरुपर्वतं छत्रदण्डं कृत्वा महोर्वीमुत्क्षिप्य काञ्चनशैलमूर्ध्नि स्थित्वा छत्रं धरन्निव इमान् भिक्षून् दक्षिणेन हस्तेनादाय चङ्क्रमिष्य इति ।

तच्छ्रुत्वा भगवान् शाक्यपुङ्गवो जानामि अहं माद्गल्यायन! तवानुभावमिति उक्त्वा तन्निषिषेध ।

अथ १ आयुष्मांश्च कौण्डिण्यः २ आयुष्मांश्च भद्रियः ३ आयुष्मांश्च वप्रः ४ आयुष्मांश्च महानामः ५ आयुष्मांश्च अश्वजी ६ आयुष्मांश्च उपतिष्यः । ७ आयुष्मांश्च पूर्णः ८ आयुष्मांश्च अनुरुद्धः ९ आयुष्मांश्च काश्यपः १० आयुष्मांश्च भद्रियः ११ आयुष्मांश्च किम्बिलः १२ आयुष्मांश्च चुन्दः १३ आयुष्मांश्च नन्दः १४ आयुष्मांश्च आनन्दः १५ आयुष्मांश्च राहुलः १६ आयुष्मांश्च उपसेनः १७ आयुष्मांश्च नालकः १८ आयुष्मांश्च दर्व्यः १९ आयुष्मांश्च सोनः २० आयुष्मांश्च शीवलिः २१ आयुष्मांश्च शोभित. २२ आयुष्मांश्च सुनापरन्तकः २३ आयुष्मांश्च पूर्णः २४ आयुष्मांश्च रेवतः २५ आयुष्मांश्च रेवतः २६ आयुष्मांश्च कुमारकाश्यपः २७ आयुष्मांश्च राधः २८ आयुष्मांश्च यशीसः २९ आयुष्मांश्च शोभितः ३० आयुष्मांश्च भगुः ३१ आयुष्मांश्च सकुलुदायिः ३२ आयुष्मांश्च भद्राली ३३ आयुष्मांश्च भद्रियः ३४ आयुष्मांश्च लकुण्टकः ३५ आयुष्मांश्च तोदेयपुत्रः ३६ आयुष्मांश्च दुभयः ३७ आयुष्माश्च जतुकर्णी ३८ आयुष्मांश्च पेशलः ३९ आयुष्मांश्च पूर्णकः ४० आयुष्माश्च धोतकः ४१ आयुष्मांश्च नन्दः ४२ आयुष्मांश्च उपशीवः ४३ आयुष्मांश्च क्षेमकः ४४ आयुष्मांश्च मोघराजी ४५ आयुष्मांश्च जितः ४६ आयुष्मांश्च तिष्यः ४७ आयुष्मांश्च मैत्रगुः ४८ आयुष्मांश्च पिङ्गियः ४९ आयुष्मांश्च मेघियः ५० आयुष्मांश्च कोष्ठितः ५१ आयुष्मांश्च छन्नः ५२ आयुष्मांश्च उपवानः ५३ आयुष्मांश्च भद्रजी ५४ आयुष्मांश्च कप्पिन' ५५ आयुष्मांश्च महाकप्पिनः ५६ आयुष्मांश्च

राष्ट्रपालः ५७ आयुष्मांश्च वक्ली ५८ आयुष्मांश्च लक्षणः ६० आयुष्मांश्च भारद्वाजः ६१ आयुष्मांश्च गवम्पतिः ६२ आयुष्मांश्च यशः ६३ आयुष्मांश्च पूर्णजी ६४ आयुष्मांश्च कात्यायनः ६५ आयुष्मांश्च प्रान्थकः ६६ आयुष्मांश्च क्षुद्रप्रान्थकः ६७ आयुष्मांश्च पिलिन्दिवत्स्यः ६८ आयुष्मांश्च कुण्डधानः ६९ आयुष्मांश्च बक्कुलः ७० आयुष्मांश्च नदीकाश्यपः ७१ आयुष्मांश्च भद्रायुधः ७२ आयुष्मांश्च अङ्गुलिमालः ७३ आयुष्मांश्च काश्यपः ७४ आयुष्मांश्च गयाकाश्यपः ७५ आयुष्मांश्च अचेलकाश्यपः ७६ आयुष्मांश्च शाक्यपुत्रः ७७ आयुष्मांश्च उरुवेलकाश्यपः ७८ आयुष्मांश्च सुभूतिः ७९ आयुष्मांश्च सभिय इत इमेपि उनाशीति-र्महाश्रावका भूयः परस्परं प्रातिहार्य्यं दर्शयितुं भगवन्तं गौतमं ययाचिरे। इमेपि आयुष्मता मौद्गल्यायनेन सार्द्धमशीतिर्भवन्ति। तान् सर्वान् भगवान् सर्वदर्शी न्यपेधयच्च। आरेभे च भगवान् शाक्यमुनिस्तीर्थकदमनार्थं प्रातिहार्यं दर्शयितुम्। स भगवान् लोकविन्दुः प्रातिहार्य्यं कर्तुकामः पूर्वापरायतं दशसहस्रचक्रवालप्रसारित-सुमेरुं दशसहस्रसुवर्णस्तम्भं दशसहस्रचक्रवालसमुत्थितरत्नपुलिन-संस्तरणं दशसहस्रचक्रवालतारागणविराजितं दशसहस्रचक्रवाल-चन्द्रसूर्य्यसमुज्वलितप्रदीपं चङ्क्रमणं निरमासीत्।

ततश्च भगवान् शाक्यमुनिरभिज्ञापादकं चतुर्थं ध्यानं समापद्य पृथिवीकापिणा परीकर्म्मकरणेन अंतरीक्षे परस्परमचङ्क्रम्यत। भगवान् गौतमः स्वयं चङ्क्रम्यते तदा निर्म्मितबुद्धस्तिष्ठति। भगवान् गौतमः स्वयं प्रश्नं पृच्छति निर्म्मितबुद्धो विसृजति। भगवान् शाक्यमुनिः स्वयं तिष्ठति निर्मितबुद्धः शेते। भगवान् शाक्यजिनश्चन्द्रसूर्य्यौ परामृशति निर्म्मितबुद्धो धर्म्मं दिशति। एवं भगवान् सर्वार्थसिद्धिः

तच्छ्रुत्वा भगवान् शाक्यपुङ्गवो जानामि अहं मौद्गल्यायन! तवानुभावमिति उक्त्वा तन्निषिषेध।

अथ १ आयुष्मांश्च कौण्डिण्यः २ आयुष्मांश्च भद्रियः ३ आयुष्मांश्च वप्रः ४ आयुष्मांश्च महानामः ५ आयुष्मांश्च अश्वजी ६ आयुष्मांश्च उपतिष्यः। ७ आयुष्मांश्च पूर्णः ८ आयुष्मांश्च अनुरुद्धः ९ आयुष्मांश्च काश्यपः १० आयुष्मांश्च भद्रियः ११ आयुष्मांश्च किम्बिलः १२ आयुष्मांश्च चुन्दः १३ आयुष्मांश्च नन्दः १४ आयुष्मांश्च आनन्दः १५ आयुष्मांश्च राहुलः १६ आयुष्मांश्च उपसेनः १७ आयुष्मांश्च नालकः १८ आयुष्मांश्च दर्व्यः १९ आयुष्मांश्च सोनः २० आयुष्मांश्च शीवलिः २१ आयुष्मांश्च शोभित. २२ आयुष्मांश्च सुनापरन्तकः २३ आयुष्मांश्च पूर्णः २४ आयुष्मांश्च रेवतः २५ आयुष्मांश्च रेवतः २६ आयुष्मांश्च कुमारकाश्यपः २७ आयुष्मांश्च राधः २८ आयुष्मांश्च वङ्गीसः २९ आयुष्मांश्च शोभितः ३० आयुष्मांश्च भगुः ३१ आयुष्मांश्च सकुलुदायिः ३२ आयुष्मांश्च भद्राली ३३ आयुष्मांश्च भद्रियः ३४ आयुष्मांश्च लकुण्टकः ३५ आयुष्मांश्च तोदेयपुत्रः ३६ आयुष्मांश्च दुभयः ३७ आयुष्मांश्च जतुकर्णी ३८ आयुष्मांश्च पेशलः ३९ आयुष्मांश्च पूर्णकः ४० आयुष्मांश्च धोतकः ४१ आयुष्मांश्च नन्दः ४२ आयुष्मांश्च उपशीवः ४३ आयुष्मांश्च क्षेमकः ४४ आयुष्मांश्च मोघराजी ४५ आयुष्मांश्च जितः ४६ आयुष्मांश्च तिष्यः ४७ आयुष्मांश्च मैत्रगुः ४८ आयुष्मांश्च पिङ्गियः ४९ आयुष्मांश्च मेधियः ५० आयुष्मांश्च कोष्ठितः ५१ आयुष्मांश्च छन्नः ५२ आयुष्मांश्च उपवानः ५३ आयुष्मांश्च भद्रजी ५४ आयुष्मांश्च कप्पिनः ५५ आयुष्मांश्च महाकप्पिनः ५६ आयुष्मांश्च

समयश्चाभूत् । अथ ते तीर्थकगुणविरहिताः षट् शास्तारः स्वर्ण-गिरिगह्वारान्निष्क्रान्तस्य हरिणेन्द्रस्य भिया मृगगणा इव तत्र तत्र पलायामासुः ।

इति श्रीधर्मस्कन्धस्थविरस्य कृतौ सद्धर्ममकरन्दे
यमकप्रातिहार्य्यपरिदीपनो नाम
षोडशोऽध्यायः ।



## अथ सप्तदशोऽध्यायः।

ततश्च भगवान् सर्वार्थसिद्धिरेवं चिन्तयामास । कुत्र हि पूर्वे सम्बुद्धा यमकप्रातिहार्य्यं कृत्वा वर्षमूपुरिति। ददर्श च भगवांस्त्रयस्त्रिंशद्देवभवने इति । अहो अतीताः सर्वे सम्बुद्धा यमकप्रातिहार्य्यावसाने त्रयस्त्रिंशद्देवलोकं गत्वा मातुर्गुणप्रत्युपकृत्यर्थं त्रिमासं विस्यन्दमानाः स्वर्णदीप्रवाहमिव अभिधर्म्मपिटकं दिदिशुरिति । यत्तन्माता चन्दनचूर्णाभ्यर्चनेन भगवतो विदर्शिनः पादमूले प्रणिधानं कृतं तन्माता भवितुं तदेव प्रणिधानं भगवान् शाक्यमुनिस्तावत् सस्मार । पुनरपि यत् तन्मात्रा पुरुहूतात् शचीपतेर्वरं याचमानया प्रार्थितम्—

पुत्रं लभे शचीपते! या च योग्यममात्सर्य्यम् ।

पूजितं प्रतिराड्भिस्तु कीर्तिमन्तं यशस्विनम् । इति

तदपि भगवान् गौतमः अनुस्मार । अहो बहूपकृतिर्मन्माता इति स भगवान् गौतमो विचिन्त्य गण्डाम्रद्रुममूलादुत्थाय पश्यतामिव देवमनुष्याणां दक्षिणं पादमुत्क्षिप्य गण्डाम्रतरोर्मस्तके निधाय द्वितीयं पादं युगन्धरपर्वतमूर्ध्नि न्यस्तवान् । भगवति गौतमे पादमुत्क्षिपति द्वौ शिलोच्चयौ भवन्! त्वं पादौ मा क्रमय आवां निश्चलौ अकम्पितौ उच्चैरन्येषां भूभृताम् । भवतः पुण्यसम्भारेण वयं पराजितौ । शीर्षहृदयनयनमांसरुधिरपुत्रभार्य्याप्रदानेनापि आवां पराजिताविति भगवते गौतमाय निवेदयमानाविव नेमतुः । इदानीं दृढगम्भीरविपुलोत्कृष्टगुणसमन्वागतया मातुर्गुणप्रत्युपकृतिकामोऽसि । कथमावां तिष्ठाव इति वदन्ताविव युगन्धरऋक्षधरौ एकत्र शीर्षं कृत्वा अवनम्य भगवतो गौतमस्य पादौ सम्प्रतर्पितुः । ततो

भगवति शाक्यसिंहे तृतीयं पादमुत्क्षिपति सुमेरुः पर्वतराजः अवनम्य पादौ सम्प्रतीप्य पुनर्यथास्थानं तस्थौ । एवं भगवान् गौतमः अष्टषष्टियोजनसहस्राण्यतिक्रम्य पारिजातकतरुमूले पाण्डुकम्बलशैलासने निषसाद ।

तदा सहस्राक्षो देवराजः अत्यन्तपरिशुद्धरूपविलासैः शोभमानं सुवर्णवर्णकान्तिविभूत्या पारिजातकमूले निषण्णं भगवन्तं गौतमं ददर्श। दृष्ट्वा च स तुष्टमनाः प्रमुदितचित्तश्चासनादुत्थाय निष्क्रामत मार्षाः! दुर्लभो बुद्धोत्पादः दुर्लभं सद्धर्मश्रवणमिति महता घोषणेन देवश्रेणीं विज्ञापयति स्म। तच्छब्दः दशसहस्रयोजनं देवनगरमुन्नादितं ततान। अथापरे देवा नुन्नशोकः प्रहीणद्वेषः विहतरागो विध्वंसितमोहः सर्वज्ञतां प्रपन्नो भगवान् शाक्यमुनीन्द्रस्त्रिदिवपुरं प्राप्तः कुत्र निषण्ण इति समवलोकमाना इह पारिजातकमूले इति समभीक्षामासुः । तदन्तरमाश्चर्याद्भुतवन्तः सर्वे देवाः परस्परं संज्ञापयामासुः । ते दशसहस्रचक्रवालवासिनो देवा दिव्यानि सत्करणानि गृहीत्वा तत्रागत्य भगवन्तं गौतमं समभिवन्द्य तैश्च सत्कारैः सम्पूज्य निषेदुः ।

एव निषण्णेषु सुरासुरनिकरेषु भगवान् शाक्यमुनिः पारिजातकमूले पाण्डुकम्बलशैलासने अनुपमां रूपश्रियं दधन्मातुरागमनमपेक्षमाणः संनिषण्णः । तत्र समागतानां पुरुहूतप्रमुखानां देवानामन्तरे स्वजननीमपश्यन् पुरन्दर! सम्बुद्धस्य मे माता कुत्रेति सुरपतिमपृच्छत् । एषा तु भगवतो गौतमस्य स्वभावपृच्छा तथा मातुरत्रागमनं प्रख्यापयते। ततः स तच्छ्रुत्वा सुरपतिः सहस्रनयन एवं चिन्तयामास। अयं सम्यक् सम्बुद्धो गौतमो मातुरर्थाय इहागतवान्। अत्र भगवतो गौतमस्य धर्मदेशना भविष्यति । हन्त अहं बुद्धस्य शाक्यमुनेर्मातरं निमन्त्रयिष्यामीति विचिन्त्य आसनादुत्थाय

भगवन्तं गौतममभिवन्द्य तुषितभवनं जगाम। स शचीपतिर्देव्याः सकाशं गत्वा तां समभिवन्द्य न्यवेदयत्। आर्ये देवि त्वं न जानासि भगवतः शाक्यमुनेर्मद्भवने निषण्णभावमिति। स भगवान् गौतमः प्रवरतनुशोभया सर्वं देवपुरं विराजयंस्तवागमनमाकाङ्क्षमाणो धर्म्मं न दिशतीति। सा तु देवी तत् समाकर्ण्य प्रीतिभरितहृदया इन्द्रं पप्रच्छ। सुरराज! कीदृङ्मत्पुत्रस्य विलासः का च आकृतिः किञ्च शीलम् का च शोभा का च श्रीः किं प्रभूतधारी किं ब्रह्मरूपः किं त्वत्स्वरूप इति।

अथ तत् समाकर्ण्य शक्रो दिवस्पतिरेवमाहस्म। देवि! मैवं भाषिष्ठाः यश्चेह तव पुत्रस्य वेशो या च आकृतिर्या च लीला या च शोभा या च श्रीः स च वेशः सा च आकृतिः सा च लीला सा च शोभा सा च श्रीः सदेवकस्य समारस्य सब्रह्मणो लोकस्य च सश्रमणब्राह्मणायाः सदेवमनुष्यायाः प्रजायाः रूपेण गुणेन तेजसा यशसा वर्णेन असदृश्यैवेति। देवी तदपि श्रुत्वा शोभते बत मत्पुत्रः सम्बुद्धः ममार्थाय धर्म्म-देष्टुमद्य इहागत इति। प्रीतिसौमनस्ययुता सहस्राप्सरोभिः सार्द्धं तुषितभवनान्निर्गत्य त्रयस्त्रिंशद्देवभवनं गत्वा यत्र भगवान् गौतमस्तत्रोपसमक्राम्यत्। उपगम्य च भगवन्तं गौतमं समभिवन्द्य दक्षिणस्यां दिशि निषसाद। निषद्य च सा देवी भगवतः शाक्यमुने रूपश्रियं समालोक्य अहमेव पुण्यवती महांश्च मे लाभः सफलं बत मद्गर्भधारणं सहितो मे एवं रूपतनयलाभ इति चिन्तयामास। तदा भगवान् गौतमोऽपि स्वजनन्याः प्रत्युपकारं कर्त्तुकामः केनाहं मातुर्गुणप्रत्युपकृतिं करिष्यामि अनया मयि कृतो गुणो गम्भीरः। उत्तुङ्गगम्भीरत्वाभ्यां महापृथिव्याः पृथुलतरः तस्माद्धर्म्मरेणाभिधर्म्मेण तस्या गुणप्रत्युपकृतिः कर्तुमर्हेति विचिन्त्य

अभिधर्म्मो गम्भीरो मातुर्गुणो गम्भीरः अभिधर्म्मश्चोत्तुङ्गो मातुर्गुणश्चो तुङ्गः अभिधर्म्मश्च सान्द्रो मातुर्गुणश्च सान्द्रः ततो गम्भीरेण गम्भीरमुत्तुङ्गेनोत्तुङ्गं सान्द्रेण सान्द्रं मातुर्गुणं प्रत्युपकरिष्यामीति भगवान् गौतमश्चिन्तयामास। तदहनि एव उत्तमेनोत्तमं प्रणीतेन प्रणीतं महार्घेन महार्घं परिवर्तयन्निव भगवान् शाक्यमुनिः अनेकासु जातिषु क्षीरमूलं दानुकामश्चीवराभ्यन्तरात् चक्रलक्षणलक्षितं वातायनजालसदृशाङ्गुलिविचित्रं दक्षिणं हस्तं प्रसार्य्य एहि मातः तुभ्यं क्षीरमूलं पोषणमूलं दास्यामीति आमन्त्र्य कुशलान् धर्म्मानकुशलान्धर्म्मानव्याकृतान्धर्म्मानित्यभिधर्म्ममातृकां चिक्षेप। तत्तु भगवता गौतमेन पुनश्चित्तविभक्तिः रूपविभक्तिः निक्षेपराशिः अर्थोद्धार इति चतुर्धा विभक्तं त्रयोदशभाणवारप्रतिमण्डितं विस्तार्यमाणमनन्तमपारिमाणं धर्म्मसङ्गिनीप्रकरणमदेशि। तदनन्तरं भगवान् शाक्यजिनो विभङ्गप्रकरणं देष्टुमारेभे। स्कन्धविभागः आयतनविभागः धातुविभागः सत्यविभागः इन्द्रियविभागः प्रत्ययाकारविभागः स्मृतिप्रस्थानविभागः सम्यक्प्रधानविभागः ऋद्धिपादविभागः बोध्यङ्गविभागः मार्गविभागः ध्यानविभागः अप्रमण्याविभागः शिक्षापदविभागः प्रतिसंविद्विभागः ज्ञानवस्तुविभागः क्षुद्रवस्तुविभागः धर्म्महृदयविभागश्चेति। एवमष्टादशधा विभक्त पञ्चत्रिंशद्भाणवारप्रतिमण्डितं विस्तारादनन्तमपरिमाणं विभङ्गप्रकरणं दिष्ट्वा न्यष्ठापयत्।

स भगवान् गौतमस्ततो धातुकथाप्रकरणं देष्टुमारेभे। सङ्ग्रहः असङ्ग्रहः सङ्गृहीतेनासङ्गृहीतं असङ्गृहीतेन सङ्गृहीतं सङ्गृहीतेन सङ्गृहीतम् असङ्गृहीतेनासङ्गृहीतम् सम्प्रयोगो विप्रयोगः सम्प्रयुक्तेन विप्रयुक्तम् विप्रयुक्तेन सम्प्रयुक्तम् सम्प्रयुक्तेन सम्प्रयुक्तम् विप्रयुक्तं विप्रयुक्तेन सङ्गृहीतेन सम्प्रयुक्तं विप्रयुक्तम् असङ्गृहीतेन

सम्प्रयुक्तं विप्रयुक्तं सम्प्रयुक्तेन सङ्गृहीतमसङ्गृहीतं विप्रयुक्तेन सङ्गृहीतमसङ्गृहीतमिति। चतुर्दशधा विभक्तं षड्भानवारप्रतिमण्डितं विस्तरादनन्तमपरिमाणं धातुकथाप्रकरणमपि भगवान् शाक्यमुनिः समभाषत। तदनन्तरं भगवान् सर्वदर्शी पुद्गलप्रज्ञप्तिप्रकरणं देष्टुमारेभे। स्कन्धप्रज्ञप्तिः आयतनप्रज्ञप्तिः धातुप्रज्ञप्तिः सत्यप्रज्ञप्तिः इन्द्रियप्रज्ञप्तिः पुद्गलप्रज्ञप्तिरिति षोढाविभक्तं पञ्चभानवारप्रतिमण्डितं विस्तारादनन्तमपरिमाणं पुद्गलप्रज्ञप्तिप्रकरणं भगवान् शाक्यसिंहो दिदेश। तदनन्तरं भगवान् शाक्यमुनिः* कथावस्तुप्रकरणं देष्टुमारेभे। स्ववादे पञ्चशतानि परवादे पञ्चाशतानीति सूत्रसहस्रं समन्वाहृत्य विभक्तं सङ्गीत्यामारोपितनयने दीर्घनिकायप्रमाणं विस्तारादनन्तपरिमाणं कथावस्तुप्रकरणं भगवान् गौतमो दिदेश।

तदनन्तरं भगवान् शाक्यसिंहो यमकप्रकरणं देष्टुमारेभे। मूलयमकं स्कन्धयमकं आयतनयमकं धातुयमकं सत्ययमकं इन्द्रिययमकं संस्कारयमकं अनुशययमकं चित्तयमकं धर्म्मयमकमिति। दशधा विभक्तं चतुर्विंशद्भानवारप्रतिमण्डितं यमकप्रकरणं दिदेश। तदन्तरं भगवान् शाक्यमुनिः प्रस्थानप्रकरणं देष्टुमारेभे। हेतुप्रत्ययः आलम्बनप्रत्ययः अधिपतिप्रत्ययः अनन्तरप्रत्ययः समनान्तरप्रत्ययः सहजातप्रत्ययः अन्योन्यप्रत्ययः निश्रयप्रत्ययः उपनिश्रयप्रत्ययः पुरोजातप्रत्ययः पश्चाज्जातप्रत्ययः आसेवनप्रत्ययः कर्मप्रत्ययः विपाकप्रत्ययः आहारप्रत्ययः इन्द्रियप्रत्ययः ध्यानप्रत्ययः मार्गप्रत्ययः सम्प्रयुक्तप्रत्ययः विप्रयुक्तप्रत्ययः अस्तिप्रत्ययः नास्तिप्रत्ययः विगतप्रत्ययः

* एतत् कथावस्तुप्रकरणम् अस्मिन् स्थाने भगवता गौतमेन नयदानवशेनोक्तम्। पुनरेतत् आयुष्मता मौद्गलिपुत्रतिष्येण महास्थविरेण तृतीयधर्म्मसङ्गीतिकाले विस्तारेणोक्तमिति आचार्या वदन्ति।

अभिधर्म्मो गम्भीरो मातुर्गुणो गम्भीरः अभिधर्म्मश्चोत्तुङ्गो मातुर्गुणश्चो तुङ्गः अभिधर्म्मश्च सान्द्रो मातुर्गुणश्च सान्द्रः ततो गम्भीरेण गम्भीरमुत्तुङ्गेनोत्तुङ्गं सान्द्रेण सान्द्रं मातुर्गुणं प्रत्युपकरिष्यामीति भगवान् गौतमश्चिन्तयामास । तदहनि एव उत्तमेनोत्तमं प्रणीतेन प्रणीतं महार्घेण महार्घं परिवर्तयन्निव भगवान् शाक्यमुनिः अनेकासु जातिषु क्षीरमूल्यं दातुकामश्चीवराभ्यन्तरात् चक्रलक्षणलक्षितं वातायनजालसदृशाङ्गुलिविचित्रं दक्षिणं हस्तं प्रसार्य्य एहि मातः तुभ्यं क्षीरमूल्यं पोषणमूल्यं दास्यामीति आमन्त्र्य कुशलान् धर्म्मानकुशलान्धर्म्मानव्याकृतान्धर्म्मानित्यभिधर्म्ममातृकां चिक्षेप । तत्तु भगवता गौतमेन पुनश्चित्तविभक्तिः रूपविभक्तिः निक्षेपराशिः अर्थोद्धार इति चतुर्धा विभक्तं त्रयोदशभाणवारप्रतिमण्डितं विस्तार्यमाणमनन्तमपारिमाणं धर्म्मसङ्गिनीप्रकरणमदेशि । तदनन्तरं भगवान् शाक्यजिनो विभङ्गप्रकरणं देष्टुमारेभे । स्कन्धविभागः आयतनविभागः धातुविभागः सत्यविभागः इन्द्रियविभागः प्रत्ययाकारविभागः स्मृतिप्रस्थानविभागः सम्यक्प्रधानविभागः ऋद्धिपादविभागः बोध्यङ्गविभागः मार्गविभागः ध्यानविभागः अप्रमण्याविभागः शिक्षापदविभागः प्रतिसंविद्विभागः ज्ञानवस्तुविभागः क्षुद्रवस्तुविभागः धर्म्महृदयविभागश्चेति । एवमष्टादशधा विभक्तं पञ्चत्रिंशद्भाणवारप्रतिमण्डितं विस्तरादनन्तमपरिमाणं विभङ्गप्रकरणं दिष्ट्वा न्यष्ठापयत् ।

स भगवान् गौतमस्ततो धातुकथाप्रकरणं देष्टुमारेभे । सङ्ग्रहः असङ्ग्रहः सङ्गृहीतेनासङ्गृहीतं असङ्गृहीतेन सङ्गृहीतं सङ्गृहीतेन सङ्गृहीतम् असङ्गृहीतेनासङ्गृहीतम् सम्प्रयोगो विप्रयोगः सम्प्रयुक्तेन विप्रयुक्तम् विप्रयुक्तेन सम्प्रयुक्तम् सम्प्रयुक्तेन सम्प्रयुक्तम् विप्रयुक्तं विप्रयुक्तेन सङ्गृहीतेन सम्प्रयुक्तं विप्रयुक्तम् असङ्गृहीतेन

देवनगरं गतः । अगमच्छनैः शनैः पितुर्नगरम् व्यतिक्रमेणागमन्मातुः सकाशम् । एकया गाथया जनकाय राज्ञे धर्म्ममदिशत् । जनन्याः सप्तप्रकरणैर्भिक्षाटनकाल एव पितुर्गुणप्रत्युपकृतिश्चकार । नवतिलुद्धैर्नवतिदिवसेषु जनन्याः प्रत्युपकृतिश्चक्रे । कथमेवञ्चकार । मन्दो नु मातृस्नेहात्पितृस्नेहः । मैवं चिन्तयितव्यम् । मातापित्रोर्गुणं जानन् बोधिसत्त्वेन सदृशोऽन्यो नास्ति । यतो हि राज्ञः शुद्धोदनस्य अपरिपक्के ज्ञाने ज्ञानस्य परिपक्कतामागमयमानस्तेन निमन्त्रितोपदेशेन शनैः शनैरगच्छत् । यथा हि आमफलं 'तरुं दण्डमुद्गरादिभिर्मनुष्येषु प्रहरत्सु शाखा भिन्नविभिन्नाः कुर्व्वत्सु फलानि कदाचित्पतन्ति कदाचिन्न पतन्ति । यथाहि परिपक्कफलं तरुं मन्दमारुतेपि कम्पयति फलानि ध्रुवं पतन्ति । एवमपि भगवान् गौतमो राज्ञः शुद्धोदनस्य ज्ञानपरिपक्कतामागमयमानस्तस्य सकाशं शनैः शनैरगच्छच्च । न पितुः स्नेहमन्दतया एकां गाथामकथयत् । प्रथमगमनेन न्यग्रोधस्य नाम शाक्यस्य भवने प्रातिहार्य्यदर्शनावसाने गाथासहस्रप्रतिमण्डितं विश्वन्तरजातकमपि अकथयत् । निरुपकृते राज्ञे अजातशत्रवे प्रदोपायाः प्रभृति यावत्प्रत्यूषं श्रामण्यफलं नाम सूत्रमभाषत । एवं सति जिनस्य शाक्यमुनेः को गुणः । पितुः कथमेकां गाथा मभाषत देशना न प्रमाणम् । मार्गफलोत्पाद एव प्रमाणम् । न पितुर्गुणमन्दभावेन वीथ्यन्तरे तस्य गुणप्रत्युपकृतिमकार्षीत् । अपि चैतत् राज्ञो मार्गफलप्रतिलाभस्थानम् । तस्माद्भगवान् सर्वदर्शी वीथ्यन्तरे स्थित्वा राज्ञे एकां गाथामभाषत ।

किन्तु मार्गफलानां प्रतिलाभस्थानमस्ति नु । आम् अस्ति भगवान् शाक्यमुनिः पारमितासागरपारं गतोपि पश्चिमभवे स्थितः

रथ शारिपुत्रमौद्गल्यायनौ च । ते सर्व्वे नृलोक एव ननु समुत्पेदिरे । बुद्धभावार्थं प्रथमं व्याकरणमेव नृलोके कर्दमपृष्ठे ननु लब्धम् । एवं सति भगवान् स्वयम्भूः कथमवन्यामभिधर्म्मं न दिदेश । महीमण्डलवासिनां हि गुणो न भारः । ऋणमुक्तिस्थाने शैलासने निपद्य स भगवान् अभिधर्म्मं दिदेश च । न हि पर्व्वतः शक्यते धर्म्मं धर्तुम् । न शक्यते सरसचित्तं धर्तुम् । न शक्यते धर्म्मगुणं धर्तुम् । यद्येवं कस्माद्भगवान् शाक्यमुनिर्देवलोके अभिधर्म्मं बभाष । ऋणमुक्त्यर्थम् । ऋणिनो हि स्वामिनमुपसङ्क्रमणं नैसर्गिकम् । न स्वामिन ऋणिनमुपसङ्क्रमणम् तस्माद्भगवान् सर्वदर्शी व्यतिक्रमं कृत्वा पाण्डुकम्बलशैलासने निपद्य अभिधर्म्मं दिदेश । एवं सति भगवान् गौतमस्तुषितभवने कथं नादिशत्? मातुरनुग्रहार्थं धर्म्मश्रवणायागतायास्तस्याः कुशलसञ्जननार्थञ्च । किं पुण्यं धर्म्मश्रवणायागमने? ।

शतं हस्तिनः शतमश्वाः शतमश्वतरीरथाः ।<br>
शतं कन्याः सहस्राणि आयुक्तमणिकुण्डलाः ।<br>
एकस्य पदवारस्य कलां नार्हन्ति षोडशीम् ॥ इति ॥

एवं भगवान् शाक्यमुनिर्मातुरनुग्रहार्थं तत्र तुषितदेवलोके अभिधर्म्मं न दिदेश । न केवलं भगवतो गौतमस्य एवधर्मिता । एषा सर्वेषामेव बुद्धानां प्रवेणी । पूर्वीयाः सर्वे सम्बुद्धा यमकप्रातिहार्य्यावसाने त्रयस्त्रिंशद्देवभवनं गत्वा पारिजातद्रुममूले पाण्डुकम्बलशैलासने निपद्य सप्तप्रकरणादि दिदिशुः तस्माद्भगवान् गौतमोऽपि सर्वबुद्धानां प्रवेणिं समवलोक्य तत्रैव पाण्डुकम्बलशैलासने निपण्णः सन् सप्त प्रकरणानि कथयामास । स भगवान् धर्म्मं त्रिपञ्चवर्ति बुद्धान् निर्माय आदेशयत् । पश्यत यूयं भगवता गौतमेन कृतम् । पुनः पुनर्निमन्त्रितोऽपि पितुर्नगरं कपिलवस्तुपुरं गतः । अनिमन्त्रितोऽपि

देवनगरं गतः । अगमच्छनैः शनैः पितुर्नगरम् व्यतिक्रमेणागमन्मातुः सकाशम् । एकया गाथया जनकाय राज्ञे धर्म्ममदिशत् । जनन्याः सप्तप्रकरणैर्भिक्षादनकाल एव पितुर्गुणप्रत्युपकृतिश्चकार । नवतिबुद्धैर्नवतिदिवसेषु जनन्याः प्रत्युपकृतिश्चक्रे । कथमेवञ्चकार । मन्दो नु मातृस्नेहात्पितृस्नेहः । मैवं चिन्तयितव्यम् । मातापित्रोर्गुणं जानन् बोधिसत्त्वेन सदृशोऽन्यो नास्ति । यतो हि राज्ञः शुद्धोदनस्य अपरिपक्के ज्ञाने ज्ञानस्य परिपक्कतामागमयमानस्तेन निमन्त्रितोपदेशेन शनैः शनैरगच्छत् । यथा हि आमफलं तरुं दण्डमुद्गरादिभिर्मनुष्येषु प्रहरत्सु शाखा भिन्नविभिन्नाः कुर्व्वत्सु फलानि कदाचित्पतन्ति कदाचिन्न पतन्ति । यथाहि परिपक्कफलं तरुं मन्दमारुतेपि कम्पयति फलानि ध्रुवं पतन्ति । एवमपि भगवान् गौतमो राज्ञः शुद्धोदनस्य ज्ञानपरिपक्कतामागमयमानस्तस्य सकाशं शनैः शनैरगच्छच्च । न पितुः स्नेहमन्दतया एकां गाथामकथयत् । प्रथमगमनेन न्यग्रोधस्य नाम शाक्यस्य भवने प्रातिहार्य्यदर्शनावसाने गाथासहस्रप्रतिमण्डितं विश्वन्तरजातकमपि अकथयत् । निरुपकृते राज्ञे अजातशत्रवे प्रदोषायाः प्रभृति यावत्प्रत्यूषं श्रामण्यफलं नाम सूत्रमभाषत । एवं सति जिनस्य शाक्यमुनेः को गुणः । पितुः कथमेकां गाथा मभाषत देशना न प्रमाणम् । मार्गफलोत्पाद एव प्रमाणम् । न पितुर्गुणमन्दभावेन वीथ्यन्तरे तस्य गुणप्रत्युपकृतिमकार्षीत् । अपि चैतत् राज्ञो मार्गफलप्रतिलाभस्थानम् । तस्माद्भगवान् सर्वदर्शी वीथ्यन्तरे स्थित्वा राज्ञे एकां गाथामभाषत ।

किन्तु मार्गफलानां प्रतिलाभस्थानमस्ति नु । आम् अस्ति भगवान् शाक्यमुनिः पारमितासागरपारं गतोपि पश्चिमभवे स्थितः

सन् प्रथमं जातशाल्वनान्निष्क्रम्य अश्वत्थद्रुमं प्रहाय नान्यत्र लेभे जिनभावम् । पुरस्तादभिमुखो भूत्वा निषद्यैव जिनभावं प्राप्तो ननु । तानि कृशतृणानि धर्तुं दक्षिणपश्चिमोत्तरा दिशा ननु न शेकुः । ततो भगवान् शाक्यजिनो वीथ्यन्तरे पितुर्गुणप्रत्युपकृतिं कृतवान् । तयोर्द्वयोर्मातापित्रोर्गुणाः सदृशाः । गंभीरोत्तुङ्गविशालगुणसमन्वागताया मातुर्गुणप्रत्युपकृत्यर्थं नवलोकोत्तरप्रदायकम् अभिधर्म्मं प्रदिशत् । देशनापर्य्यवसाने महामाया नाम देवी सहस्रनयमतिमण्डितं श्रोतापत्तिफलं समभ्यगात् । तस्याः श्रोतापत्तिफलसम्प्राप्त्या सह अशीतिकोटीनां देवानां धर्म्माभिसमयः अभवच्च । ततो भगवान् शाक्यजिनः अरुणे उदिते त्रिमासातिक्रमेण आश्वयुजपौर्णमास्यां सम्प्राप्तायां महाप्रवारणदिवसे ऋद्धिमतो द्वितीयाग्रश्रावकस्य महामौद्गल्यायनस्य निमन्त्रणं प्रतिगृह्य मनुष्यलोकं गमिष्यामीति देवराजाय पुरुहूताय समज्ञापयत् । अथ सुरपतिः शतमन्युर्भगवतो गौतमस्य देवलोकावरोहणार्थं स्वर्णमयं कलधौतमयं मणिमयमिति त्रीणि सोपानानि निरमासीत् । तेषां शीर्षाणि सुमेरुमस्तके स्थितानि । पादाः संकश्यनाम्नि नगरे प्रतिष्ठिताः षट्त्रिंशद्योजनिकैः परिच्छदैः सार्द्धं दशसहस्रचक्रवालेषु देवगणेषु समवसरत्सु सत्कारपरिपूर्णः सकलचक्रवालगर्भोऽभवत् । आश्चर्य्येषु जायमानेषु सुवर्णपद्मसञ्छन्नो महासमुद्रः अवलम्बविकाशितपद्ममन्तरिक्षञ्चासीत् । तदा भगवां-स्त्रैलोक्याधिपतिर्मातुरात्मन ऋणपरिमुक्तभावं दर्शयन्निव सुमेरुशिखरे स्थित्वा मणिमयात् सोपानादवततार । स्वर्णमयात् सोपानाद्देवगणा अवरुरुहुः । रजतमयात् सोपानाद् ब्रह्मगणाश्चावरुरुहुः । शक्रो देवेन्द्रो भगवतः शाक्यमुनेः पात्रं गृहीत्वा अवततार । ब्रह्मा सुरज्येष्ठो भगवतो दशबलस्य उपरि धवलच्छत्रं दधदवरुरोह ।

सन्तुषितः सुयामश्च द्वौ देवौ भगवन्तं सर्वविदं वीजयमानौ अवतेरतुः । वज्रपाणिर्देवोवज्रमुष्टिहस्त एतांह प्रवरमुखो भगवानिति भगवतः पुरस्तादगच्छत् । पञ्चशिखो देवपुत्रस्त्रिगव्यूतिं वीणां वादयन् भगवतः सर्वदर्शिनः पुरस्तादवततार । तदा तुमुलतुमुल-दुन्दुभिनिर्घोषान् प्रवर्तयन्तः शङ्खं धमन्तः अतीवकुशला उपेन्द्रगणा बुद्धगुणनिश्रितं गीतञ्च जगुः । तदा भगवान् गौतमो मणिमयस्य सोपानस्य मध्ये स्थित्वा लोकविवरणं नाम प्रातिहार्य्यञ्चकार । तद्धि अवीच्या यावद् ब्रह्मलोकादेकाङ्गणमभूत् । अवीच्यामुत्पन्नाः सत्त्वा भवाग्रे स्थितान् देवान् अपश्यन् । भवाग्रे स्थिता देवा अवीच्युपग-तान् सत्त्वान् अपश्यंश्च । मनुष्या देवान् अपश्यन् देवा मनुष्यान् अपश्यन् । एवं भगवान् समन्तभद्रो लोकविवरणं नाम प्रातिहार्य्य-ञ्चाकार्षीत् । तदा भगवतो धर्म्मराजस्य शरीरान्नीलपीतलोहिता-वदातमाञ्जिष्ठप्रभास्वराः षड्वर्णरश्मयो विसस्रुः तेऽपि । गत्वा चक्र-वालमुखं जगाहिरे ।

तदानीं सकलचक्रवालगर्भः सप्तरत्नसोपानविनद्ध इवाभूत् । उद्गता यावदकनिष्ठभवनाज्जग्मुः । अधोगता यावदवीचितला ज्जग्मुः । इत्थं भगवतः शाक्यमुनेः शरीरप्रभाभिः सोमसहस्र-किरणादीनां देवानां ब्रह्मणाञ्च शरीरवस्त्रालङ्कारादिषु उद्यानविमानादिषु च सर्वत्रापि प्रभा नैवासीच्च । सर्वे सूर्योदये खद्योतक्रमय इव निष्प्रभाश्च अभवन् । इति भगवतस्त्रैलोक्याधिपतेस्त्रयस्त्रिंशद्देव-भवनादवतरतः अचिन्तनीयं बुद्धविषयं विस्मयजननं विभूतिविसरं संदृश्य देवा मनुष्याश्च प्रायो बुद्धभावमेव प्रार्थयामासुः । तदा कुरण्टकुसुमवर्णः अनोपमप्रज्ञापारमीपारप्राप्त आयुष्मान् शारिपुत्रः पञ्चशतैः क्षीणाश्रवैः सार्द्धं विहायसा समागत्य भगवन्तं गौतमं

समभ्यवादयत्। भगवति गौतमे सोपानमध्ये विराजमाने आयुष्मान् शारिपुत्रः अदृष्टपूर्वां बुद्धश्रियं समवलोक्य एवमाहस्म। अहो श्रीः श्रीघनस्य। अहो कान्तिः कान्तिमतः। अहो सुवर्णः सुवर्णवर्णस्येति। निर्म्मलरजतादर्शसदृशं भगवतो जिनवरस्य मुखमण्डलं विलोक्य स्वमूर्ध्नि प्रणिहितकरपुटकमल आयुष्मान् शारिपुत्रो भगवन्तं समन्तभद्रं प्रोवाच।

न दृष्टश्चाप्यतः पूर्वं न श्रुतोऽद्ध हि कस्यचित्।
एवं वल्गुकथः शास्ता तुषिताद्विरहागतः॥ इति।

अथ शास्ता शाक्यमुनिर्मणिमयस्य सोपानस्य मस्तक एव स्थितः स्थविरं शारिपुत्रं पार्थग्जन्यं प्रश्नं पप्रच्छ। तच्छारिपुत्रो विससर्ज्ज। ततो द्वयोरग्रश्रावकयोर्विषयं प्रश्नमपृच्छत्। तदपि शारिपुत्रो विससर्ज। ततः सम्बुद्धविषयं प्रश्नं पप्रच्छ। स तु शारिपुत्रः शास्तुरभिप्राये-गम्भीरतां समुत्पाद्य तद्विसष्टुं नाशक्नोत्। अथ भगवान् शाक्यमुनिः स्थविरस्य शारिपुत्रस्य क्लान्तभावं ज्ञात्वा नयं ददौ। नयदानात्तु तं प्रश्नं स्थविरस्य शारिपुत्रस्य नयसहस्रैरुपास्थापयत् सम्बुद्धविषयं प्रश्नं विसृज्य शास्तुः पुरस्तात् सिंहनादं ननाद।

गङ्गाया वालुका क्षीणा उदकं क्षीणं महार्णवे।
मह्यां मृत्तिका क्षीणा बुद्धिस्तु मम न क्षयेत्॥
लोकनाथं विहायात्र ये चान्ये सन्ति प्राणिनः।
प्रज्ञया शारिपुत्रस्य कलां नार्हन्ति षोडशीम्॥ इति।

तस्मिंस्तु स्थाने आयुष्मतः शारिपुत्रस्य प्रज्ञाया महानुभावो देवमनुष्येषु विश्रुतो जातः। एवमग्रश्रावकः शारिपुत्रो बुद्धविषयं प्रश्नं विसृज्य भगवन्तं गौतममेतदब्रवीत्। भवन्! त्वामवलोक्य सर्व-

ज्ञतामप्रार्थयन्तो नाम सन्तीति । अथ भगवान् शाक्यमुनिः शारिपुत्र! एवमेवेति ।

ये ध्यानप्रसृता धीरा नैष्कर्म्ये चाश्रमे रताः ।
देवाश्च तेषां तुष्यन्ति सम्बुद्धानां स्मृतिमताम् ।

इत्युक्त्वा भगवान् सर्वदर्शी संकस्यनगर एव कुशलफलसञ्जाते वरासने निषद्य तेषां देवमनुष्याणां स्वं स्वं भाषानुरूपं धर्मं दिदेश। देशनापर्य्यवसाने त्रिंशत्कोटीनां देवमनुष्याणां धर्माभिसमयश्चाभूत्।

इति श्रीशीलस्कन्धस्थविरस्य कृतौ सद्धर्ममकरन्दे
स्वर्लोके अभिधर्मदेशनापरिदीपनो नाम
सप्तदशोऽध्यायः ।



# अथ अष्टादशोऽध्यायः ।

इत्थं भगवान् शाक्यमुनिर्मातुर्गुणभत्युपकृत्यर्थं त्रिमासं त्रयस्त्रिंशद्देवभवने पारिजातकद्रुममूले पाण्डुकम्बलशैलासने वर्षमुषित्वा धर्म्मं दिदेश । उषितवर्षो भगवान् द्विपदोत्तमस्तस्माद्देवलोकादवततार । यतः पूर्व्वीयाः सर्वे सम्बुद्धा एकत्र नित्यवासा नाभवन् । यस्माच्च भगवन्तः सम्यक्सम्बुद्धा अभिसम्बोध्या यावत्परिनिर्वाणाद्देवमनुष्याणामर्थं हितं पर्य्येषयन्तो ग्रामनिगमजनपदराजधानीषु चेरुः । तस्मादेव भगवान् गौतमोपि प्रार्थनावशात् अभिनीहारवशात् पूर्वबुद्धाचीर्णवशाच्च करुणया प्रकम्पितहृदयः अनिरन्तरवासेन देवानां मनुष्याणामर्थं हितं पर्य्येषयन्नेव अभिसम्बोध्याः प्रथमं वर्षं वाराणस्यां क्षेमे मृगदाये ऋषिपत्तने च उवास । तथा द्वितीयं तृतीयं चतुर्थञ्च वर्षं (१) राजगृहनगरे वेणुवने च । पञ्चमं वर्षं (२) वैशाल्यां महावने कूटागारशालायाञ्च । षष्ठं वर्षं (३) मकुलनाम्नि पर्वते च । सप्तमं वर्षं त्रयस्त्रिंशद्देवलोके पारिजातकतरुमूले पाण्डुकम्बलशैलासने च । अष्टमं वर्षं (४) शिशुमारगिरौ भिषकलावने च । नवमं वर्षं कौशाम्ब्यां घोषिकारामे च । दशमं वर्षं पारिलेयवने च । एकादशं वर्षं नालनामके ब्राह्मणग्रामे च । द्वादशं वर्षं वेरञ्जायां ब्राह्मणग्रामे च । त्रयोदशं वर्षं चालियपर्वते च । चतुर्दशं

---

१ वर्तमाने गयायाः निकटवर्तिन्या राजगिर्य्यागरासन्न राजगृहनगरम् ।

२ पुरातनमानचित्रानुसारेण पाटलिपुत्रादुत्तरस्यां दिशि वैशाली नाम नगरी ।

३ कौशाम्ब्यां नगर्य्यामेव मकुलपर्वतः ।

४ कपिलवस्तुनिकटे शिशुमारगिरिः । शुसुमारगिरेर्वेति च पठन्ति ।

वर्षे ( ५ ) स्रावस्त्यां जेतवने च। पञ्चदशं वर्षे ( ६ ) कपिलवस्तुनगरे रोहिण्या नद्यास्तीरे न्यग्रोधारामे च। षोडशं वर्षे आलविनगरे च। सप्तदशं वर्षे पुनरपि राजगृहनगरे वेणुवने च। अष्टादशं एकोनविंशं च वर्षे चालीये पर्वते च। विंशतितमं वर्षे पुनः राजगृहनगरे वेणुवने च व्यहार्षीत्। एकविंशतितमं वर्षे पुनर्भिपकलावने च। तथा द्वाविंशतितमं त्रयोविंशतितमं चतुर्विंशतितमं पञ्चविंशं च वर्षे बिल्वग्रामे उवास। अपराणि वर्षाणि स्रावस्त्यां जेतवने विशाखया नाम उपासिकया कारिते पूर्वारामे च उवास। इमानि च संगणितानि गृहवासे एकोनत्रिंशद्वर्षाणि भवन्ति। महाप्रधाने षड्वर्षाणि। सम्बुद्धो भूत्वा पञ्चचत्वारिंशद्वर्षाणीति सर्वाण्येतानि अशीतिर्वर्षाणि भगवान् शाक्यमुनिर्देवान् मनुष्यान् यक्षांश्च भवबन्धनाद्विमोचयन् सर्वेषां सत्त्वानां हितं सुखं च साधयंस्तत्र तत्र व्यहार्षीत्।

यदा भगवान् गौतमो बिल्वग्रामे पश्चिमं वर्षमुवास। तत्रैव त्रिमासाभ्यन्तरे भगवतो गौतमस्य क्रूर आबाधः समुत्पन्नः। अथ भगवान् गौतमः सुगन्धसलिलाभिषेकेण ज्वलितदहनमिव महतामन्त्रानुभावेनोपशान्ततीक्ष्णसर्पविषमिव सुधाभोजनविनोदितक्षुत्पिपासमिव चतुर्दशसमापत्त्यौषधैस्तं रोगमुपाशमयत्। भगवान् शाक्यजिनश्च उषितवर्षो भिक्षुसङ्घैः सार्धं प्रवार्य्य शारिपुत्रमेतदब्रवीत्।

---

५ वाराणसीनगराद् पश्चिमोत्तरदिशायाः ५० क्रोशदूरे स्रावस्तिनगरम्। नेपालस्यान्तर्गतञ्च। वर्त्तमान नाम 'साहेत' अथवा 'माहेत' इति च वदन्ति।

६ नेपालस्य पार्वत्यप्रदेशनिकटे रोहिण्या नद्यास्तीरे कपिलवस्तुनगरं संस्थापितम्। इयं नगरी काश्याः पूर्वोत्तरा ५० क्रोशदूरे गोरक्षकपुरस्य निकटवर्तिनी। वर्त्तमान नाम 'कोहाना' इति वदन्ति।

शारिपुत्र! तथागतो न चिरात्परिनिर्वास्यतीति । यामः शारिपुत्र यत्र श्रावस्तिस्तत्रेति । आयुष्मान् शारिपुत्रो भवन्! साधु इति भगवतो गौतमस्य वचनं शुश्राव । अथ भगवान् गौतमो भिक्षुसङ्घ-परिवृतो यत्र श्रावस्तिस्तत्र गत्वा जेतवने व्यहार्षीत् । तत्र भगवति शाक्यमुनौ विहरति एकदा आयुष्मान् शारिपुत्रः समापत्त्याः समुत्थाय बुद्धो नु प्रथमं परिनिर्वास्यति उताहो अग्रश्रावकाविति विचिन्त्य अग्रश्रावकाः प्रथमं परिनिर्वास्यन्तीति अज्ञासीत् । ततः स्वं आयुः संस्कारं समवलोक्य अहो सप्ताहमेव मे आयुः संस्कारः प्रवर्तिष्यते इति ददर्श ।

ततः स शारिपुत्रः कुत्र नु अहं परिनिर्वास्यामीति व्यलोकयत् । आयुष्मान् कौण्डिण्यः षड्दन्तसरसि अशीत्या हस्तिकुलसहस्रैरुपस्थाप्यमानो द्वादशसंवत्सराणि तत्र वसंस्तत्रैव षड्दन्तदेहे परिनिरवात् । राहुलस्तु त्रयस्त्रिंशद्भवने पारिजातकतरुमूले पाण्डुकम्बलशैलासने दशसहस्रचक्रवालेषु देवानां मध्ये परिनिरवात् । अहं हि नालन्दकग्रामे मातुर्निवेशने जातगृह एव परिनिर्वास्यामीति अज्ञासीत् । मन्माता नैव मामेव प्रसूता । सोनं उपसोनं रेवतञ्चेति अपरांस्त्रीन् पुत्रांश्च चालां उपचालां शीर्षोपचालां चेति तिस्रो दुहितृश्च प्रसूता । तेऽपि सर्वे प्रव्रज्य अर्हत्त्वं प्राप्ताः । एषां सप्तानामर्हतां माता भूत्वा अपि तावद् बुद्धधर्म्मसङ्घेषु अप्रसन्ना । इदानीमस्या अस्ति नु उपनिश्रय उताहो नास्तीति विलोकयामास । ददर्श च आयुष्मान् शारिपुत्रो मातुः श्रोतापत्तिफलोपनिश्रयस्य अस्तिताम् । दृष्ट्वा च कस्य देशनया तस्या धर्म्माभिसमयो भविष्यतीति पुनर्व्यलोकयत् । नान्यस्य ममैव धर्म्मदेशनया । यद्यहं तस्यै मात्रे धर्म्मं न दिशेयम् भविष्यन्ति ममैवं वक्तारः । आयुष्मता किल शारिपुत्रेण सर्गमोक्ष-

मार्गयोः प्रतिष्ठापितानां देवानां मनुष्याणां गणना नाम नास्ति। अथापि स स्वजननीं मिथ्यादृष्ट्याः परिमोचयितुं न शशाकेति। तस्मादहं मन्मातरं मिथ्यादृष्ट्या मोचयित्वा जातगृह एव परिनिर्वास्यामीति चिन्तयामास।

अथाऽयुष्मान् शारिपुत्रः पञ्च भिक्षुशतानि गृहीत्वा तैः परिवृतो यत्र भगवान् गौतमस्तत्रोपसमक्रामत्। उपसंक्रम्य भगवन्तं गौतमं पञ्चप्रतिष्ठितेन समभ्यवादयत्। ततश्चोत्थाय भूमौ मुनिहितजानुमण्डलयुगलो दशनखसमवधानमञ्जलिं शिरसि समाधाय सुस्पृष्टस्वर्णपट्टसदृशसमोत्तुङ्गललाटं परमचारुविशालभ्रूयुग्मं भ्रूयुगलाभ्यन्तरगतौषधीतारकाभातिरेकसमुज्ज्वलितमवरधवलोर्णरोमं अतिनिर्मलगोपक्ष्मसदृशसुनीलनेत्रं क्रमश उत्तुङ्गस्वर्णाङ्कुशप्रतिमनासं शरत्समयगगनतलसमुद्गतविमलशीतलरजनीकरसदृशं श्रीघनं मुखमण्डलमवलोक्य भगवन्तं गौतममेतदब्रवीत्।

छिन्नेदानीं जीविताशा लोकनाथ! महामुने!<br>
गमनागमनं नास्ति पश्चिमा वन्दना इयम्॥<br>
जीवितञ्च ममात्यल्पं सप्ताहातिक्रमेऽप्यतः।<br>
निक्षिपेयमहं देहं भारावरोपणं यथा॥ इति।

तच्छ्रुत्वा भगवान् शाक्यजिनः कुत्र परिनिर्वास्यसि त्वं शारिपुत्र! इति अपृच्छत्। भवन् मगधराष्ट्रे नालन्दग्रामे मम जातगृहमस्ति तत्रैव परिनिर्वास्यामीति। अथ भगवांस्त्रैलोक्यपूज्यः कालं मन्यसे शारिपुत्र! इति अभाषत च। तदनन्तरमायुष्मान् शारिपुत्रो भगवतो लोकनाथस्य अनुमत्या तालप्रमाणमाकाशमभ्युद्गम्य पुनरवरुह्य भगवन्तं समन्तभद्रं समभ्यवन्दिष्ट। पुनरपि आकाशमभ्युदगच्छत्। एवं सप्तवारं सप्ततालप्रमाणे अन्तरिक्षे ऋद्धिविकरणं समदर्शयत्।

दिदेश च धर्म्मम्। पुनस्ततश्चावरुह्य गन्धकुटिप्रमुखे मणिमयफलके स्थितं भगवन्तं गौतमं त्रीन् वारान् प्रदक्षिणीकृत्य चतुर्षु स्थानेषु समभिवन्द्य एतदब्रवीत्। भवन्! अतोऽहं शतसहस्राधिकस्य एकस्या- सङ्ख्येयस्य उपरि अनवमदर्शिनः सम्बुद्धस्य पादमूले निपत्य भगवतो दर्शनं प्रार्थयेयम्। सा मे प्रार्थना समृद्धा। इदं मेऽप्रथमं दर्शनम्। एतत् पश्चिमं दर्शनम्। पुनर्भगवतो दर्शनं नास्तीति। स शारिपुत्रः अञ्जलिं विधाय यावद्भगवतो गौतमस्य दर्शनविषय- स्तावदभिमुखो निवृत्य भिक्षुपञ्चशत्या सार्द्धं प्राक्रमत। तदा भगवांस्त्रैलोक्यनाथः परिवृतांश्च भिक्षून् एतदवोचत्। अनुगच्छत भिक्षवः! युष्माकं ज्येष्ठं भ्रातरं शारिपुत्रम्। तादृशो भिक्षोर्दर्शनं दुर्लभमिति।

अथ ते भिक्षवो यावद्द्वारकोष्ठं जग्मुश्च। तत आयुष्मान् शारिपुत्रो निवर्त्तध्वं यूयं भगवति गौतमे अप्रमादा भवतेति उक्त्वा स्वैः परिच्छदैः सार्द्धं प्राक्रमत। स आयुष्मान् शारिपुत्रः साय नालन्दग्रामं प्राप्य स्वजातगृह एव निपद्य तस्मिन् रात्रिभागे जनन्या धर्म्मं दिष्ट्वा तां श्रोतापत्तिफले प्रत्यष्ठापयत्। स शारिपुत्रः प्रत्यूषे भिक्षुसङ्घमापृच्छ्य परिनिरवात्। एवं शारिपुत्रः कार्तिक- पौर्णिमास्यां नालन्दग्रामे परिनिरवाच्च। आयुष्मान् महामौद्गल्या- यनेपि कालशिलायां कार्तिककृष्णामावास्यायां शत्रुभिः समुत्पाद्य अधिकां दुःखवेदनामनुभूय च परिनिरवात्। तयोरग्रश्रावकयोः परिनिर्वाणयोर्भगवान् शाक्यमुनिर्विगताग्रश्रावकोऽभूत्। यथा घन- पृथुलसमृद्धिशाखाविटपस्य परिजीर्णस्य महाजम्बुद्रुमस्य द्वे महाशाखे प्रथमं भग्ने। तथा भगवान् गौतमः परिजीर्णमहाजम्बुद्रुमोपमः। द्वावग्रश्रावकौ शाखाप्रतिमौ तौ विपत्तिमारुतप्रकम्पितौ प्रथमं

प्रपेततुः। पततोर्द्वयोरग्रश्रावकशाखयोर्भगवान् सर्वदर्शी विगताग्रश्रावकश्चाभवत्। यथा राजा सार्वभौमो विगतपरिणायकरत्नः तथैव भगवान् शाक्यजिनो विगताग्रश्रावकः। अवशिष्ट एव आयुष्मान् आनन्दः। छायेव भगवतो गौतमस्य शरीरं न विजहत्सान्निधावेव स्थितः।

एकदा भगवान् शाक्यमुनिर्जेतवनाद्गत्वा पूर्वारामं मिगारमातृप्रासादे व्यहार्षीत्। सायाह्नकाले विविक्तासनादुत्थाय प्रासादस्य पश्चिमदिशायां निषण्णोऽभूत्। अथाऽयुष्मान् आनन्दो पृष्ठमवतापयमानं भगवन्तं गौतमं समवलोक्य भगवतो गौतमस्य शरीरं परिमर्ईयन् द्वयोरंशयोरभ्यन्तरे किञ्चिन्मात्रं बलिवर्कं ददर्श। तदवलोक्य बलवत्तरं सञ्जातसंवेग एव रूपं नाम बुद्धशरीरेऽपि सञ्जायत इति जरां तिरस्कुर्वन् भगवन्तं दशबलमेतदब्रवीत्। भवन्! आश्चर्य्यम्। भवन्! अद्भुतम्। न चैवेदानीं तथागतस्य कायः परिशुद्धः। त्वग्वर्णः पर्य्यवदातः। शिथिलानि च तव गात्राणि सञ्जातवलीनि। परन्तु तव कायः प्राग्भारश्चेति। तदाकर्ण्य भगवान् श्रीघनः समभ्यभाषत। एवमेव आनन्द! यौवने जराधर्म्मः। आरोग्ये व्याधिधर्म्मः। जीविते मरणधर्म्मः। न चैवेदानीमानन्द! तथागतस्य कायः परिशुद्धः। त्वग्वर्णः पर्य्यवदातः। शिथिलानि च मे गात्राणि सञ्जातवलीनि। ततश्च मे कायः प्राग्भारः। दृश्यते च मे चक्षुरिन्द्रियस्य श्रोत्रेन्द्रियस्य घ्राणेन्द्रियस्य जिह्वेन्द्रियस्य कायेन्द्रियस्य च अन्यथात्वम्। अहमानन्द! एतर्हि जीर्णो वृद्धः अध्वगतः वयोऽनुप्राप्तः। प्रवर्त्तते ममेदानीम् अशीतमायुः। यथा ह्याऽनन्द! जीर्णशकटो वेणुयुक्ततया याप्यते। एवमेव आनन्द! समाधिसंमिश्रतया मे कायो याप्यते। तस्मादिहानन्द!

आत्मप्रधाना विहरत आत्मशरणाः । अनन्यशरणा इति । इत्थं भगवान् शाक्यमुनिरायुष्मत आनन्दस्य आत्मनो जराधर्म्मं समादिदेश । देशनापर्य्यवसाने तत्रापि बहूनां देवमनुष्याणां धर्म्माभिसमयोऽभूत् ।

परेद्यवि भगवान् गौतमो भिक्षाटनं कृतवान् । भिक्षया कृतभक्तकृत्यः सार्द्धं पञ्चभिक्षुशतैर्यत्र वैशाली तत्र गत्वा महावने कूटागारशालायां व्यहार्षीत् । अथ ते राजानो लिच्छवयो भगवतो गौतमस्य आगमनं श्रुत्वा दीपधूपसुगन्धमालादीन् गृहीत्वा समागम्य भगवन्तं सर्वविदं वन्दित्वा सम्पूज्य धर्मश्रवणार्थं निषेदुः । ततो भगवान् गौतमस्तेभ्यो धर्म्मं दिदेश । देशनायाः पर्य्यवसाने ते राजानो भगवन्तं शाक्यमुनिं स्वादनाय निमन्त्रयामासुः । भगवान् शाक्यजिनस्तन्निमन्त्रणं तेष्वनुकम्पया प्रत्यग्रहीत् । परेद्युः भगवांस्त्रैलोक्याचार्यो रमणीये षड्दन्तह्रदे अशीतिनागकुलसहस्रैः परिवृतो महानुभावः षड्दन्तगजपतिरिव विविधाऽश्वतरनिकरपरिवृतो नानालक्षणप्रतिमण्डितो बलाहकहयपतिरिव च पञ्चभिक्षुशतैः परिवृतो वैशालीनगरं प्रविवेश । तत्रोपविश्य भक्तकृत्यं कृतवान् । कृतभक्तकृत्यस्तेभ्यो धर्म्मं दिदेश । ततो भगवान् शाक्यजिनो भिक्षुगणैः परिवृतो वैशाल्या निष्क्रम्य पुरद्वारि स्थित्वा ममेदं वैशाल्याः पश्चिमं दर्शनमिति सकलशरीरेणैव परिवृत्य नागावलोकनं व्यलोकिष्ट । पश्चात्तत् स्थानं नागावलोकनं नाम चैत्यं जातम् । ततो महावनं प्रविवेश । तत्र गत्वा आनन्दमेतदब्रवीत् । आनन्द ! निषदनं गृहाण । यत्र चापालो नाम देवालयस्तत्रोपसङ्क्रमिष्यामि दिवा विहारार्थम् । अथायुष्मान् आनन्दः साधु भदन्त ! इति निषदनमादाय भगवतो गौतमस्य पृष्ठतः पृष्ठतोऽनुजगाम । अथ भगवांस्त्रैलोक्यवन्द्यो यत्र

चापालाख्यं देवगृहं ततोपगम्य प्रज्ञप्तासने निषसाद । आयुष्मान् आनन्दो भगवन्तं गौतमं समभिवन्द्य एकमन्तं निषण्णः । भगवान् शाक्यमुनिरेकमन्तं निषण्णमानन्दमेतदब्रवीत् ।

आनन्द ! रमणीया वैशाली । रमणीयं गौतमकं देवगृहम् । आनन्द ! येन केनचिच्चत्वार ऋद्धिपादा भाविताः बहुलीकृताः यानीकृताः वस्तूकृताः अनुष्ठिताः सुसमारब्धाः । आनन्द ! यदि स आकाङ्क्षेत कल्पं वा तिष्ठेत् कल्पावशेषं वा । कतमे चत्वार ऋद्धिपादाः ? । छन्दर्धिपादः वीर्य्यर्धिपादः चित्तर्द्धिपादः मीमांसर्द्धिपादश्चेति । एवं भगवता गौतमेन औदारिकनिमित्तवशादेव अवकाशे क्रियमाणे आयुष्मान् आनन्दः प्रतिबोद्धुं न शशाक । एवं भगवता गौतमेन द्वितीयवारमपि तृतीयवारमपि औदारिकनिमित्तवशादेव अवकाशे क्रियमाणे अपि आयुष्मान् आनन्दः प्रतिबोध्दुं न शशाक । ततो भगवान् गौतमः आनन्दमेतदभाषत । आनन्द ! गच्छ त्वम् । विविक्ते निषीदेति ।

अथायुष्मान् आनन्दो भगवतो गौतमस्य तद्वचनं समाकर्ण्य आसनादुत्थाय भगवन्तं गौतमं समभिवन्द्य अविदूरे अन्यतरस्मिंस्तरुमूले विजने निषसाद । गते च आनन्दे पापीयान् मारो यत्र भगवान् शाक्यमुनिस्तत्रोपसङ्क्रम्य एकमन्तं निषण्णः । एकमन्तं निषण्णः पापीयान् मारो भगवन्तं गौतममेतदब्रवीत् । भगवन् ! परिनिर्वायतामिदानीम् । सुगत ! परिनिर्वायतामिदानीम् । भगवतो गौतमस्य इदानीं परिनिर्वाणकाल इति भगवन्तं मारजिनं ययाचे । अयं पापीयान् मारो भगवतो गौतमस्य अभिसम्बोध्याः प्रभृति अष्टमे सप्ताहे अजपालन्यग्रोधमूल एव निषण्णं भगवन्तं गौतमं दृष्ट्वा एवमाहस्म । भवन् ! भगवान् सर्वज्ञताज्ञानामिच्छन्नेव पारमीरपूरयत ।

प्रतिलब्धमिदानीं सर्वज्ञताज्ञानं भवद्भिः । किमर्थं लोकहितं कुरुत ?। मा आत्मानं क्षमयत । भवन्! तस्मादद्य परिनिर्वाणकाल इति भगवन्तं प्रार्थयामास ।

तदा महाकारुणिको भगवान् गौतमो मारस्य तद्वचनमाकर्ण्य मार! यावन्मद्भिक्षुभिक्षुक्य उपासकोपासिकाश्च व्यक्ता विनीता विशदा बहुश्रुता धर्म्मधरा धर्म्मानुधर्म्मप्रतिपन्ना अनुधर्म्मचारिणः आचार्य्योपाध्यायसकाशे शिक्षां गृहीत्वा आख्यास्यन्ते देक्ष्यन्ते प्रज्ञापयिष्यन्ते कथयिष्यन्ते उत्पन्न परवादं सहधर्म्मेणा सुनिगृहीतं निगृह्य स प्रातिहार्य्यं देवमनुष्येभ्यो धर्म्मं देक्ष्यन्ते तावदहं न परिनिर्वास्यामि । यावदिदं ब्रह्मचर्य्यं न समृद्धं विस्तारि बाहुजन्यं पृथुभूतं यावद्देवमनुष्येषु सुप्रकाशितं तावन्नाहं परिनिर्वास्यामीति पापीयांसं मारं न्यषेधत् । एवं पापीयान् मारो भगवतो गौतमस्य अभिसम्बोध्याः प्रभृति पुनः पुनरागत्य यावच्चापालसुरनिकेतनं तावत् परिनिर्वाणं ययाचे । अथ भगवान् सर्वदर्शी पापीयांसं मारमेतदब्रवीत् । मार! मा त्वं भूर्दुःखी दुर्म्मनाः । न चिरात्तथागतस्य परिनिर्वाणं भविष्यति । अतस्त्रयाणां मासानामतिक्रमेण अहं परिनिर्वास्यामीति । तच्छ्रुत्वा पापीयान् मारः साधु भवन्! इति तुष्टमनास्तत्रैव तिरोदधे । अथ भगवान् गौतमो माघपौर्णमास्यामात्मन आयुः संस्कारं ज्ञानवज्रेण सञ्छिद्य तत्याज ।

संत्यक्तवति च भगवति गौतमे आयुःसंस्कारं दशसाहस्री लोकधातुः प्राकम्पत । महांश्च भीषणको भूमिचालोऽभूत् । सुरदुन्दुभयश्च प्रोदयामासुः । मेघो जगर्ज्ज । अकालविद्युल्लता बभ्राजे । क्षणवृष्टिः प्रावृषत् । अनेकानि च आश्चर्य्याणि प्रवर्त्तन्ते स्म । एवं भगवान् गौतम आत्मन आयुः संस्कारं परित्यज्य आनन्दमामन्त्र-

यत्। आनन्द! अहं प्रथमाभिसम्बुद्धोऽवसमेकस्मिन् समये नैरञ्जनाया नद्यास्तीरे अजपालन्यग्रोधमूले। अथाऽनन्द! पापीयान् मारो यत्राऽहं तत्रोपसङ्क्रम्य एकमन्तं तस्थौ। आनन्द! पापीयान् मार एकमन्तं स्थितः सन् मामेतदब्रवीत्। भवान् भगवान् इदानीं परिनिर्वातु। भवान् सुगत इदानीं परिनिर्वातु। भवन् इदानी भगवतो गौतमस्य परिनिर्वाणकाल इति। एवं चोक्ते आनन्द! अहं पापीयसे माराय एतदवोचम्। यावन्मम श्रावका भिक्षुभिक्षुक्य उपासकोपासिकाश्च व्यक्ता विनीता विशारदा बहुश्रुता भविष्यन्ति। यावन्ममेदं ब्रह्मचर्य्यं न समृद्धं स्फीतं विस्तृतं बाहुजन्यं पृथुभूतं देवमनुष्येषु सुप्रकाशितं भविष्यति। न तावदहं परिनिर्वास्यामीति। आनन्द! अद्यैव चापालदेवालये पापीयान् मारो यत्राऽहं तत्रोपसङ्क्रम्य एकमन्तं तस्थौ। पापीयान्मार एकमन्तं स्थितः सन्मामेतदब्रवीत्। भवान् भगवान् इदानीं परिनिर्वातु। भवान् सुगत इदानीं परिनिर्वातु। भवन्! भगवतो गौतमस्य इदानीं परिनिर्वाणकालः। भाषितो नु स भगवता गौतमेन न तावदहं परिनिर्वास्यामि। यावन्मम श्रावका भिक्षुभिक्षुक्य उपासकोपासिकाश्च व्यक्ता विनीता विशारदा बहुश्रुता भविष्यन्ति। यावन्ममेदं ब्रह्मचर्य्यं न समृद्धं स्फीतं विस्तृतं बाहुजन्यं पृथुभूतं देवमनुष्येषु सुप्रकाशितं भविष्यतीति।

एतर्हि च भगवतो गौतमस्य ब्रह्मचर्य्यं समृद्धं स्फीतं विस्तारि बाहुजन्यं पृथुभूतं देवमनुष्येषु सुप्रकाशितमिति। भवान् भगवान् इदानीं परिनिर्वातु। भवान् सुगत इदानीं परिनिर्वातु। इदानीं भगवतो गौतमस्य परिनिर्वाणकाल इति। एवमुक्ते च अहमानन्द! पापीयांसं मारमेतदब्रुवम्। मार! त्वमल्पोत्साहो भव। अचिरा-

तथागतः परिनिर्वास्यति इति । आनन्द! अद्यैवेदानीं चापाले देवमन्दिरे तथागतेन ज्ञायमानेनैव आयुःसंस्कारः परित्यक्त इति । एवञ्चोक्ते आयुष्मान् आनन्दो भगवन्तं गौतममेतदवोचत् । भवान् भगवान् कल्पं तिष्ठतु । भवान् सुगतः कल्पं तिष्ठतु बहुजनहितार्थम् बहुजनसुखार्थम् लोकस्यानुकम्पायै देवमनुष्याणामर्थाय हिताय सुखाय चेति । अलमिदानीमानन्द! तथागतं याचित्वा । इदानीमानन्द! अकालस्तथागतं प्रति याचनाया इति । द्वितीयवारमपि तृतीयवारमपि आयुष्मान् आनन्दो भगवन्तं गौतममेतदब्रवीत् । भवान् भगवान् कल्पं तिष्ठतु । भवान् सुगतः कल्पं तिष्ठतु बहुजनहितार्थम् बहुजन-सुखार्थम् लोकस्यानुकम्पायै देवमनुष्याणामर्थाय हिताय सुखाय चेति। कस्माद्धि आयुष्मान् आनन्दः पूर्वमेवैतदर्थं भगवन्तं गौतमं न ययाचे माराविष्टचित्ततया इति । अथ भगवान् गौतम एतदब्रवीत्। श्रद्धत्से त्वमानन्द बोधमिति । एवं भवन् इति । तस्मादिहानन्द! त्वय्येवैतद्दुष्कृतम् । तवैवैषोऽपराधः । यतस्त्वं तथागतेन औदारिके निमित्ते क्रियमाणे प्रतिबोद्धुं न शेकिथ । भवान् भगवान् कल्पं तिष्ठतु देवमनुष्याणामर्थाय हिताय सुखाय चेति तथागतं न याचितवानसि । आनन्द! त्वयितथागतमयाचितवति द्वौ वारा एव भगवान् गौतमस्तं न्यषेधयत् । तृतीये वारे अध्यवासयच्च । तस्मा-दिहानन्द! तवैवैषोऽपराधः । आनन्द! ननु मया चैतत् प्राग-व्याख्यातम् । प्रियैर्मनापैः सर्वैरेव नानाभावः अन्यथाभावः । आनन्द! तत् कुतोऽत्र लभ्यम्? । यत्तज्जातं भूतं संस्कृतं प्रलुप्तधर्म्म तन्मा लुप्यदिति नैतत्कारणं विद्यते । आनन्द! यत्तत् तथागतेन व्यक्तं वान्तं मुक्तं प्रहीणं विसर्ज्जितम् । आयुःसंस्कारः अवसृष्टः । अचि-रात्तथागतस्य परिनिर्वाणं भविष्यति । अतस्त्रयाणां मासानामति-

क्रमेण तथागतः परिनिर्वास्यतीति एकान्तेन वाग् अभिहिता तथागतेन । आनन्द! तथागतो जीवितहेतोरपि पुनस्तन्न प्रत्याहरिष्यतीति । अथ भगवान् गौतम एतदभाषत च ।

दहराश्चापि ये वृद्धा ये बाला ये च पण्डिताः ।
आढ्याश्चैव दरिद्राश्च सर्वे मृत्युपरायणाः ॥
यथाहि कुम्भकारस्य कृतं मृद्भाजनञ्च यत् ।
अतिक्षुद्रं महच्चैव यत्पक्वमामकञ्च यत् ॥
सर्वं भेदनपर्य्यन्तं मर्त्यानां जीवनं तथा ।
अनित्या बत संस्कारा उत्पद्यव्ययधर्म्मिणः ।
उत्पद्य च निरुन्धन्ति तेषां व्युपशमः सुखमिति ॥
पुनरपि भगवान् शाक्यमुनिरेवमभाषत च ।
वयो मे परिपक्वञ्च परीतं मम जीवनम् ।
प्रहाय वो गमिष्यामि गौतमोऽहमनुत्तरः ॥
अप्रमादाः स्मृतिमन्तः सुशीला भवत भिक्षवः ।
सुसमाहितसङ्कल्पाः स्वं चित्तमनुरक्षत ॥
यश्चास्मिन् धर्म्मविनये अप्रमादोऽपि वत्स्यति ।
प्रहाय जातिं संसारं दुःखस्यान्तं करिष्यतीति ॥

अथ भगवान् शाक्यजिन आयुष्मन्तमानन्दं आमन्त्रयामास । आनन्द! आयामः । यत्र मण्डो नाम ग्रामस्तत्लोपसङ्क्रमिष्याम इति । साधु भवन्! इति आयुष्मान् आनन्द आहस्म । अथ भगवान् सर्वदर्शी महद्भिर्भिक्षुगणैः सार्द्धं यत्र भण्डग्रामस्तत्र गत्वा तत्र यथाकामं विहरन् भण्डग्रामवासिभ्यो मनुष्येभ्यो धर्म्ममुपदिश्य तांश्च स्वर्गमार्गे मोक्षमार्गे च प्रत्यष्ठापयत् । ततो भगवांस्त्रैलोक्यपूज्यः आनन्दमेतदब्रवीत् । आनन्द! आयामो यत्र हस्ती नाम

ग्रामः तत्रोपसङ्क्रमिष्यामः । साधु भवन्! इति आयुष्मान् आनन्दो भगवतो गौतमस्य वचनं शुश्राव । अथ भगवान् शाक्यमुनिर्महद्भिर्भिक्षुगणैः सार्द्धं यत्र हस्तिग्रामस्तत्रोपसमक्राम्यत् । हस्तिनगरान्निष्क्रम्य यत्र आम्रो नाम ग्रामस्तत्रोपसमक्रामत् । ततो निष्क्रम्य यत्र जम्बुर्नाम ग्रामस्तत्रोपसमक्रामत् । ततो निष्क्रम्य यत्र भोगं नाम नगरं तत्रोपसङ्क्रम्य भोगनगरे व्यहार्षीत् भोगनगरवासिभ्यो धर्म्मं दिष्ट्वा बहून् देवमनुष्यान् स्वर्गमार्गे मोक्षमार्गे च प्रत्यष्ठापयत् । ततश्च भगवान् सर्वार्थसिद्धिरायुष्मन्तं आनन्दमामन्त्रयत् । आनन्द आयामः । यत्र पावानाम नगरं तत्रोपसङ्क्रमिष्याम इति । एवं भवन्! इति आयुष्मान् आनन्दो भगवतो गौतमस्य वचनं शुश्राव । अथ भगवान् शाक्यमुनिर्महद्भिर्भिक्षुगणैः सार्द्धं यत्र पावानगरं तत्र गत्वा कर्मारपुत्रस्य चुन्दस्य आम्रवने व्यहार्षीत् । तदा कर्मारपुत्रश्चुन्दो भगवतो गौतमस्य आगमनं समाकर्ण्य दीपधूपसुगन्धमालादीन् गृहीत्वा भगवन्तं गौतममुपसङ्क्रम्य वन्दित्वा पूजयित्वा एकमन्ते निषसाद ।

अथ भगवान् गौतमस्तस्मै धर्म्मं दिदेश । देशनापर्य्यवसाने कर्म्मारपुत्रश्चुन्दः सभिक्षुसङ्घं भगवन्तं भक्तस्वादनाय निमन्त्रयामास । तस्य निमन्त्रणं भगवान् गौतमः अनुकम्पया अध्यवासयत् । ततश्चुन्दो भगवतो गौतमस्य अधिवासनं ज्ञात्वा भगवन्तं गौतमं समभिवन्द्य स्वगृहमगमत् । स चुन्दस्तस्या रात्र्या अतिक्रमे स्वगृहे प्रणीतं खाद्यं भोज्यं प्रतिसंस्कृत्य बहुसूकरमार्दवं च यथामृदु यथामृदु एवं पञ्चभिर्गोरसैः सह पुनः पुनरपाचीत् । यथा हि तन्नाम दानं चुन्देन भगवतो गौतमस्य परिनिर्वाणं श्रुत्वैव प्रतिपादितम् । तदा दशसहस्रचक्रवालेषु देवाः समागत्य तत्र रसौजांसि चिक्षिपुः ।

अथ चुन्दो भवन्! कालो भोक्तुं निष्ठितं भक्तमिति भगवतो गौतमस्य भोजनकालं न्यवेदयत्। अथ भगवान् गौतमो भिक्षुसङ्घैः परिवृतः पात्रं चीवराणि चादाय यत्र चुन्दस्य गृहं तत्रोपसमक्रामत्। उपगम्य च प्रज्ञप्ते आसने निषण्णश्चुन्दमेतदवोचच्च । चुन्द! त्वया यत्तत् सुकरमार्दवं प्रतिपादितं तेन मामेव परिभोजयिष्यसि तदवशेषं कस्मै चिन्मा प्रयच्छ। श्वभ्रे क्षेप्तासि। चुन्द! नाहं पश्यामि सदेवके लोके समारे सब्रह्मणि सश्रमणब्राह्मण्यां प्रजायां तत् सुकरमार्दवं परिभुक्तं सम्यक् परिणतं गन्तृ चान्यत्र तथागतादिति। यच्च श्वोऽपरं खाद्यं भोज्यं प्रतिपादितम्। तेन भिक्षुसङ्घं भोजयिष्यसि। स चुन्दः साधु भवन्! इति तथैवाकरोत्। ततो भगवान् शाक्यसिंहो भुक्त्यवसाने चुन्दं धर्म्यया कथया सम्प्रहर्ष्य आसनादुत्थाय चुन्दस्य आम्रवनं समागत्य सार्द्धं भिक्षुगणैर्निषसाद।

तस्मिन् दिवसे भगवतो गौतमस्य चुन्दस्य भक्तेन बलवान् आबाधः समुदपादिष्ट। रक्तश्चात्यसरत्। महती वेदना प्रावर्त्तिष्ट। अथ भगवान् गौतमो आनन्दमामन्त्रयामास। आनन्द! आयामो यत्र कुशिनारा तत्रोपसङ्क्रमिष्याम इति। आयुष्मान् आनन्दः साधु भवन्! इति भगवतः शाक्यमुनेर्वचनं शुश्राव। अथ भगवान् गौतमो वेणुमिश्रेण जीर्णशकटमिव कायं समाधिना संधृत्य महद्भिर्भिक्षुगणैः सार्द्धं पावानगरान्निष्क्रम्य मार्गं प्रतिपन्नः। एवं भगवान् गौतमो मार्गं प्रतिपन्नोऽपि दाहार्तो मार्गादवक्रम्याऽन्यतरस्मिन् द्रुममूले निषसाद। आनन्द! त्वमिहागच्छेति आनन्दमामन्त्रयत्। सर्वेषां सत्त्वानां संवेगजननं वाचा च बभाषे। आनन्द! त्वं सहसा उदकमाहर। पिपासाक्रान्तोऽस्मि। शरीरदाहः कदाऽपि न

जातः । एतर्हि तीव्रतरा वेदना च पिपासा च सञ्जाता । अभवच्च शरीरदाहः । अहो धिग्धिग्बल संसारवासम् । कुत्र तथागतस्य नारायणबलम्? । तथागतस्य हि हस्तिगणनया कोटिशतानां हस्तीनां बलम् । पुरुषगणनया कोटिसहस्राणां पुरुषाणां बलम् । तत् सर्वं चुन्दस्य भक्तं भुक्तवति दीप्ते अयः कपाले प्रक्षिप्तमिवोदकं परिक्षयं गतम् । एवं रोगः सर्वमारोग्यं मर्दयन्नागच्छति । तस्मादलमेव सर्वसंस्कारेषु निर्वेदितुम् । अलं विमोक्तुम् । किञ्चापि तस्मिन् सुकरमार्दवे परिभुक्ते आबाधः समुदपादि । न तद्भुक्तप्रत्ययादुदपादि । यदि ह्यभुक्तेऽप्युत्पत्स्यते अतीव क्रूर आबाधो भविष्यति । भुक्तस्निग्धभोजनतया तनुवेदनाऽभूत् । तस्मात् पादेन गन्तुं न शशाक ।

अथ भगवान् शाक्यमुनिः आयुष्मन्तमानन्दमामन्त्रयत् । आनन्द! कर्म्मारपुत्रस्य चुन्दस्य कश्चिद्विप्रतिसारः स्याच्च । चुन्द! यस्य तव पश्चिमं भोजनं परिभुज्य भगवान् गौतमः परिनिरवात् । तस्य तवालाभः? तस्य तव दुर्लब्धम्? इति । आनन्द! एवं कर्म्मारपुत्रस्य चुन्दस्य विप्रतिसारो विनोदयितव्यः । चुन्द! यस्य तव पश्चिमं भोजनं परिभुज्य तथागतः परिनिरवात् । चुन्द! तस्य तव लाभः । तस्य तव सुलब्धम् । सम्मुखान्मयैतच्चुन्द! भगवतो गौतमस्य श्रुतम् । सम्मुखात्प्रतिगृहीतम् । द्वाविमौ पिण्डपातौ समौ समफलौ समविपाकौ । अतीवान्यैर्महत्फलतरौ महानृशंसतरौ च । कतमौ द्वौ? यच्च पिण्डपातं भुक्त्वा तथागतः अनुत्तरां सम्बोधिमभिसम्बुबोध । यच्च पिण्डपातं भुक्त्वा निरुपधिशेषाया निर्वाणधातोः परिनिर्वास्यति । इमौ द्वौ पिण्डपातौ समौ समफलौ समविपाकाविति । सुजातया श्रेष्ठिदुहित्रा दत्तं पिण्डपातं भुक्त्वा ननु तथागतः

अभिसम्बुद्धः । स भगवान् गौतमस्तन्तु पिण्डपातं सरागः सद्वेषः समोह एव पर्यभुङ्क्त । चुन्देन दत्तमिमं पिण्डपातं वीतरागो वीतद्वेषो वीतमोह एव पर्यभुङ्क्त ।

कस्मादेतौ द्वौ पिण्डपातौ समौ समफलौ समविपाकौ बभूवतुरिति परिनिर्वाणसमत्वात् समाधिसमत्वादनुस्मृतिसमत्वाच्च । भगवान् हि गौतमः सुजातया दत्तं पिण्डपातं अपरिभुज्य सोपधिशेषाया निर्वाण-धातोः परिनिर्वृतः । चुन्देन दत्तं पिण्डपातं परिभुज्य निरुपधिशेषाया निर्वाणधातोश्च । एवं तौ द्वौ पिण्डपातौ परिनिर्वाणसमत्वात् समौ समफलौ समविपाकौ बभूवतुः । भगवान् शाक्यजिनः अभिसम्बोधि दिवसे चतुर्विंशत्कोटिशतसहस्राणि समापत्तीः समापद्यत । परिनि-र्वाणदिवसेऽपि ताः सर्वाः समापत्तीः समापद्यत । एवं समापत्ति-समत्वात् समौ समफलौ समविपाकौ च । शुश्राव च सुजाता अपरभागेन हि सवृक्षदेवः । स च बोधिसत्त्वः मत्पिण्डपातं परि-भुज्य निरुत्तरं सम्यक् सम्बोधिमभिसम्बुद्धः सप्तसप्ताहं तेनैवायी-यपत् । तं शृण्वन्त्यास्तस्याः लाभा बत मे इति-बलवत्प्रीतिसौमनस्य मुदपादिष्ट । चुन्दस्याऽप्यपरभागे मया दत्तं पश्चिमपिण्डपातं परिभुज्य शास्ता निरुपधिशेषाया निर्वाणधातोः परिनिर्वृत इति श्रुत्वा लाभा बत मे इत्यनुस्मरतो बलवत्प्रीतिसौमनस्यञ्चोदपादिष्टेति ।

एवमन्यैः पिण्डपातैरनुस्मृतिसमत्वादपि इमौ द्वौ पिण्डपातौ समौ समफलौ समविपाकौ महत्फलतरौ महानुशंसतरौ च । आयुष्मता चुन्देन आयुः संवर्त्तनीयं सुखसंवर्त्तनीयमाधिपत्यसंवर्त्तनीयञ्च कुशलं कर्म्म समुपचितमिति । आनन्द! कर्म्मारपुत्रस्य चुन्दस्य एवं विप्रतिसारो विनोदयितव्यः । स चुन्दो भगवतो गौतमस्य प्रथम

एव दर्शने श्रोतापत्तिफलं सम्प्राप्तः । अथ भगवान् शाक्यमुनिरेतदर्थं विदित्वा तस्यां वेलायामिदं प्रीतिवाक्यञ्च व्याहरत् ।

ददतः पुण्यं प्रवर्द्धते संयमस्य वैरं न चीयते ।
कुशलश्च जहाति पापं रागादीनां क्षयात् सनिर्वृतः ॥

एवं चुन्देन भगवते गौतमाय दत्तं पिण्डपातं महत्फलमभवत् । अथायुष्मान् आनन्दो भगवन्तं गौतममेतदवोचत् । भवन् भगवन्! इदानीं पञ्चशतमात्राणि शकटानि अतिक्रान्तानि । भवन्! तत्रोदकं चक्रच्छिन्नं स्तोकं लुलितं स्यन्दते । भवन्! अविदूरे अपरा अच्छोदका शातोदका शीतोदका श्वेतोदका कुकुत्था नाम नदी । तत्रोदकं रमणीयम् । पीतांश्च शीतलयतीति । भगवान् गौतमो द्वितीयवारमपि तृतीयवारमपि आनन्दमेतदब्रवीत् । आशु मे त्वमानन्द! पानीयमाहर । पिपासितोऽस्मि आनन्द! पास्यामीति । ततश्चायुष्मान् आनन्दो भगवतो गौतमस्य पात्रं गृहीत्वा यत्र सा नदी तत्रोपसमक्रामत् । अथ चक्रच्छिन्ना स्तोका लुलिता स्यन्दमाना सा नदी आनन्दे उपसङ्क्रामति अच्छा विप्रसन्ना अनाविला स्यन्दते। तदयलोक्यायुष्मान् आनन्द एवमचिन्तयत् । अहो! आश्चर्यं भगवतः शाक्यमुनेः । अहो! अद्भुतं भगवतो गौतमस्य । अहो! महानुभावो भगवतः सर्वार्थसिद्धेः । यतो हि चक्रच्छिन्ना स्तोका लुलिता स्यन्दमाना सेयं नदी ममोपसङ्क्रामतः अच्छा विप्रसन्ना अनाविला स्यन्दते इति विचिन्त्य आयुष्मान् आनन्दः पात्रेणोदकमादाय यत्र भगवान् शाक्यमुनिस्तत्रोपसमक्रामत् । उपगम्य च पिबतु भवान् भगवान् पानीयम् । पिबतु भवान् सुगतः पानीयमिति उदकमुपानयत् ।

अथ भगवान् गौतमः पानीयं पीत्वा आनन्दमेतदब्रवीत् । आनन्द! आयामो यत्र कुकुष्टा नाम नदी तत्रोपसङ्क्रमिष्याम इति । आयुष्मान् आनन्दः साधु भवन्! इति भगवतो गौतमस्य वचनं शुश्राव । अथ भगवान् शाक्यमुनिर्महद्भिर्भिक्षुगणैः सार्द्धं यत्र कुकुष्टा नाम नदी तत्रोपगतः । उपगम्य च कुकुष्टा नद्योदकशाटकमाहारयत् । तयोपहृतं च तत् निवस्य नदीमवततार । तत्र च स्नात्वा समुत्तीर्य्य चीवरं प्रावृतवान् । तस्याः कुकुष्टनद्याः अविदूरे आम्रवनमस्ति । ततश्च भगवान् गौतमो यत्राम्रवनं तत्रोपगम्य आयुष्मन्तं चुन्दमेतदब्रवीत् । चुन्द! संघाटिं चतुर्गुणं प्रज्ञपय । क्लान्तोऽस्मि चुन्द! निपत्स्य इति । तस्मिंश्च क्षणे आयुष्मान् आनन्द! उदकशाटकं मृद्नाति । सन्निधौ आयुष्मांश्चुन्दस्तस्थौ । तस्माद्भगवान् गौतमश्चुन्दमामन्त्रयच्च । साधु भवन्! इति चुन्दो भगवतो गौतमस्य वचनं शुश्राव । संघाटिं चतुर्गुणञ्च प्रज्ञप्य भगवन्तं शाक्यमुनिं न्यवेदयत् । निपद्यतां भवान् भगवान् । निपद्यतां भवान् सुगतः इति । संघाटिं चतुर्गुणं प्राज्ञपयच्च । अथ भगवान् शाक्यजिनो दक्षिणेन पार्श्वेन सिंहशय्यां चकार । पादे पादं संस्थाप्य स्मृतिसम्प्रज्ञो उत्थानसंज्ञाञ्च मनसि कुर्व्वन् । भिक्षुगणोऽपि कुकुष्टनद्यां स्नात्वा पश्चादागत्य तत्र निषसाद । अथ भगवान् शाक्यमुनि रुत्थाय शयनादानन्दमामन्त्रयत् । आनन्द! आयामः । यत्र हिरण्यवत्या नद्याः पारतीरं यत्र कुशिनारायां मल्लानामुपवर्तनं नाम शालवनं तत्रोपसङ्क्रमिष्याम इति । साधु भवन्! इति आयुष्मान् आनन्दो भगवतो गौतमस्य वचनं शुश्राव । अथ भगवान् लोकज्येष्ठो महद्भिर्भिक्षुगणैः सार्द्धं गच्छन् हिरण्यवतीं नदीं समुत्तीर्य्य कुशिनारायां शालवनं सम्प्राप्तवान् । कस्माद्धि भगवान् शाक्यमुनि-

रेवं महता उद्योगेन कुशिनारामेवागमत्? । नान्यत्र परिनिरवाच ?। भगवान् गौतमस्त्रिभिरेव कारणैः कुशिनारां गतस्तत्र परिनिरवाच । यद्यहमन्यस्मिन् नगरे परिनिर्वास्यामि । तदा महासुदर्शन सूत्रधर्म्मदेशनायाः अर्थोत्पत्तिर्नभविष्यति । *कुशिनारायां परिनिर्वाणे महासुदर्शनसूत्रमुपदिष्टा बहवो मनुजाः दानफलं श्रद्धासुकृतं कर्म्म करिष्यन्तीति । यद्यहमन्यत्र परिनिर्वास्यामि *यश्च सुभद्रः परिव्राजकः स तु बुद्धविनेयः श्रावकास्तं विनेतुं न शक्नुवन्ति । मयि कुशिनारायां परिनिर्वाणे सुभद्रो मामुपसङ्क्रम्य प्रश्नं प्रक्ष्यति । मया तस्य प्रश्ने प्रत्युत्तरिते स मम सकाशे प्रव्रजिष्यति । स उपसम्पदमपि लब्ध्वा मयि जीवत्येव अर्हत्त्वं प्राप्स्यति । स च मम पश्चिमश्रावकोऽपि भविष्यतीति । यद्यहमन्यत्र परिनिर्वास्यामि । मम धातुविभजने महान् कलकलो भविष्यति । श्रोणीतो नदीव अतिसरिष्यति । मयि कुशिनारायां परिनिर्वाणे द्रोणो नाम द्विजवरः कलहमुपशमय्य धातून् विभज्य देक्ष्यतीति । एभिस्त्रिभिः कारणैर्भगवान् गौतमो महता उत्साहेन कुशिनारामगच्छच्च । भगवान् शाक्यमुनिः सायमेव शालवनं प्रापत् । तत्तु शालवनं छायोदकसम्पन्नं प्राकारेण परिक्षिप्तं सुयुक्तद्वारं चासीत् तत्र कूटागारशालायाः अविदूरे तेषां तेषां मल्लानां क्रीडार्थं द्वे शाले स्तः । एकैकस्य शालद्रुमस्य तरुणतालयष्ट्योर्युगलं युगलं बभूव । तयोर्यमकशालयोर्मूले मल्लराजो दिवा विहारार्थं शयनमञ्चश्चास्ति । स च भगवान् गौतमः शालवनं प्राप्य आनन्दमामन्त्रयत् । आनन्द! यमकशालयोरन्तरा

---

* कुशिनारा गोरक्षकपुरात् पूर्वदक्षिणभागे ५० क्रोशान्तरे संस्थिता । वर्तमाननाम [ कुसी ] ।

* तस्य जातगनर [ कूर्जी ] नाम ।

उत्तरदिशाभिमुखशीर्षं मञ्चं प्रज्ञपय । क्लान्तोऽस्मि आनन्द ! निपत्स्य इति । अथानन्दः साधु भवन् ! इति भगवतो गौतमस्य वचनं प्रतिश्रुत्य मञ्चं सज्जितवान् । जवनिकाञ्च बबन्ध । निपद्यतां भवान् भगवान् । निपद्यतां भवान् सुगतः प्रतिसंस्कृतं मञ्चमिति । अथ भगवान् शाक्यजिनो यमकशालयोरन्तरा प्रज्ञप्ते पञ्चमहार्घास्तृत-रक्तहिरण्यकम्बले कर्णिकाविनिर्गतमुक्ताहारसुगन्धदामोपशोभिते दश-शतवस्त्रविराजिते वितानालङ्कृते दुकूलघनप्रत्यास्तरणप्रतिमण्डिते उभयतोलोहितकोपधाने श्रीशयने पर्य्यङ्के दक्षिणेन पार्श्वेन पादे पादं संस्थाप्य स्मृतिसम्प्रज्ञो नोत्थानसंज्ञां मनसि कुर्वन् सिंहशय्या-मकरोच्च । तस्मिंस्तु समये यमकशालौ सर्वथा पारिफुल्लौ भवतः । भगवतो गौतमस्य शरीरे अकालपुष्पाण्याकिरतुः । तत्र कूजित-भ्रमरमधुररवैर्यमकशालौ परिदेवमानाविव निरन्तरं पतन्ति कुसु-मानि नयनजलानीव शास्तृदेहाद्विनिर्गतषड्विधरश्मिजालास्तरुण-सूर्य्यरश्मीनभिभवन्त इव च भ्रेजुः ।

तदा सविता सुगतवियोगशोकमसहिष्णुरिव अस्ताचलं सम्प्राप्तः। शीतमरीचिर्देवमनुष्याणां सुगतवियोगशोकदहनदग्धहृदयानि श्वेत-शिशिरकिरणजालैर्जलधारया निर्वापयन्निव समुच्छ्रितः । सपदि वसु-न्धरा समकम्पत । महासमुद्रः अक्षुभ्यत् । सुमेरुः पर्वतराजोऽवानमत् मेघो जगर्ज्ज । क्षणिकवृष्टिर्बभूव । उल्कापातशरधूमकेतुविद्युल्लता-दीनि आकाशे निश्चेरुः । सुरदुन्दुभयश्च निर्जुघुषुः । तुमुलगम्भीर-विसरशब्दानुचरितपरिपूर्णदिव्यसङ्गीतानि सार्द्धं पञ्चाङ्गिकैस्तूर्य्यै-रन्तरिक्षे शुश्रुविरे । अन्तरिक्षात् पतितानि सुरभिकुसुममिश्राणि दिव्यचन्दनचूर्णानि भगवतः तथागतस्य कायं समाकिरन् । नन्दन-

वनान्मन्दारकुसुमानि भगवतो गौतमस्य शरीरं अर्चयन्तीव प्रपेतुः । दशसहस्रलोकधातुषु सुरगणा भगवतः शाक्यमुनेः समभ्यर्चनार्थं छत्रध्वजपताकचामरादीनि गृहीत्वा अस्मिंश्च चक्रवाले सन्निपतन्ति स्म ।

इत्थं भगवान् गौतमो यमकशालयोरन्तरा दक्षिणेन पार्श्वेन निपन्न एव पृथिवीतलाद् यावदाकाशात् समग्रैः पूजाविधिभिः पूजितभावं विलोक्य पश्चिमायां जनतायामनुकम्प्य आत्मनोऽसत्कृतभावमायुष्मते आनन्दाय कथयामास । आनन्द! एतावत्या आमिषपूजया तथागतः सत्कृतो वा गुरुकृतो वा मानितो वा पूजितो वा नाभूत् । यः कश्चित् आनन्द! भिक्षुर्वा भिक्षुकी वा उपासको वा उपासिका वा धर्मानुधर्मप्रतिपन्नो विहरति समीचि प्रतिपन्नः अनुधर्मचारी च स निरामिषया परमया सद्धर्मपूजया तथागतं सत्करोति गुरुं करोति मानयति पूजयतीति । एवं भगवान् शाक्यजिनो महान्तं पूजाविशेषमायुष्मते आनन्दाय सङ्ख्य आनन्द! अद्य रात्र्याः पश्चिमे यामे तथागतः परिनिर्वास्यतीति आहस्म । तच्छ्रुत्वा आयुष्मान् आनन्दः अश्रुपूर्णनेत्रो भगवते गौतमाय एतदब्रवीत् । भवान् भगवान् क्षुद्रनगरे उज्जाङ्गलनगरे शाखानगरे मा परिनिर्वातु । सन्ति भवन्! अपराणि महानगराणि चम्पा राजगृहं साकेतं श्रावस्ती कौशाम्बी वाराणसी च । तत्र भगवान् गौतमः परिनिर्वातुमर्हति । तत्र नगरेषु बहवः क्षत्रियमहासारा ब्राह्मणमहासारा गृहपतिमहासारा भगवति गौतमे अभिप्रसन्नास्तथागतस्य शरीरपूजां करिष्यन्तीति । आनन्द! मैवं वोचः । क्षुद्रनगरमुज्जाङ्गलनगरं शाखानगरमिति । आनन्द! भूतपूर्वं वदामि ।

आनन्द! आसीत् पुरा सुदर्शनो नाम चक्रवर्ती नृपतिः । स च धार्मिकः । धर्मराज- चातुरन्तः विजितसेन- जनपदस्थैर्य्यं प्राप्तः

हस्तिरत्नं अश्वरत्नं माणिक्यरत्नं चक्ररत्नं स्त्रीरत्नं गृहपतिरत्नं परिनायकरत्नमिति सप्तभी रत्नैः समन्वागतश्च। आनन्द! इयं कुशिनारा पुरा कुशावती नाम राजधानी आसीत्। आनन्द! कुशावती नाम राजधानी आयामाद् द्वादश योजनानि विस्तारात् सप्त योजनानि समृद्धा स्फीता बहुजना आकीर्णमनुष्या सुभिक्षा हस्तिशब्देन अश्वशब्देन भेरिशब्देन वादितशब्देन मृदङ्गशब्देन वीणाशब्देन गीतशब्देन तालशब्देन अश्नीत पिबत खादतेत्यादिभिर्दशभिः शब्दैर्दिवानिशमविविक्ता चासीत्। एवं भगवान् गौतमो महासुदर्शनं नाम सूत्रं कथयामास। आनन्द! त्वं कुशिनारां प्रविश्य मल्लराजेभ्यः कथयिष्यसि। वाशेष्ठाः! अद्य रात्र्याः शेषे भगवतो गौतमस्य परिनिर्वाणं भविष्यतीति।

वाशेष्ठाः! यूयमभिनिष्क्रामत। अस्माकं ग्रामक्षेत्रे तथागतस्य परिनिर्वाणमभूत्। न वयमलभामहि भगवतो गौतमस्य पश्चिमं दर्शनमिति पश्चात् मोद्विग्नमनसौ भवत इति। आयुष्मान् आनन्दः साधु भवन्! इति भगवतः शाक्यमुनेर्वचनं तथैव प्रतिश्रुत्य कुशिनारां प्रविश्य मल्लराजेभ्य एतदवोचत्। वाशेष्ठाः! अद्य निशायाः शेषे भगवतः शाक्यमुनेः परिनिर्वाणं भविष्यतीति। वाशेष्ठाः! अभिनिष्क्रामत। पश्चात् मोद्विग्नमनसो भविष्यतेति। अथ ते राजानः सार्द्धं पुत्रभार्य्यादिभिस्तस्यानन्दस्य वचनं श्रुत्वा केशान् विकीर्य उरांसि प्रहरन्तः अहो भगवान् गौतमः क्षिप्रं परिनिर्वास्यति अहो अतीव क्षिप्रं लोकप्रदीपः अन्तर्धास्यत इत्यादीनि वदन्तः परिदेवमाना दीपधूपसुगन्धमालादीन् गृहीत्वा यत्र शालवनं तत्रोपसंचक्रमुः। अथायुष्मान् आनन्दो मल्लराजान् गृहीत्वा भगवन्तं गौतमं समभ्यवन्दयत्। भवन्तः! इत्थंनामानो मल्लराजाः सपुत्राः सभार्य्याः सामात्या

भगवतो गौतमस्य पादौ शिरसा वन्दध्वम् इति। एवमायुष्मान् आनन्दः सर्वांस्तान् मल्लराजान् भगवन्तं गौतमं समभ्यवन्दयत्।

तस्मिंस्तु समये सुभद्रो नाम परिव्राट् भगवतो गौतमस्य परिनिर्वाणं श्रुत्वा श्रमणो गौतमः किल अद्य पश्चिमे यामे परिनिर्वास्यति। यावच्छ्रमणो गौतमो न परिनिर्वाति तावन्ममैकां शङ्कां परिपृच्छामीति विचिन्त्य यत्र शालवनं तत्रोपगम्य आनन्दमेतदब्रवीत्। आनन्द! अहमिच्छामि श्रमणं गौतमं द्रष्टुम्। अस्ति मे प्रच्छनीया शङ्केति। तच्छ्रुत्वा आनन्दोऽचिन्तयत्। तीर्थका नाम स्वावबोधमेव दृढं गृह्णन्ति। तस्य विसर्जनार्थं बहुभाषमाणस्य भगवतो गौतमस्य कायवाग्विहिंसा अपि भविष्यन्तीति। अलं सुभद्र! मा भगवन्तं गौतमं विहिंसय। क्लान्त इदानीं भगवान् गौतम इति। एवमायुष्मान् आनन्दो जवनिकायाः बहिर्द्वारि स्थितः सन् द्वितीयतृतीयवारयोरपि न्यषेधयच्च।

ततश्च भगवान् गौतम आनन्देन कृतं सुभद्रस्य निषेधं श्रुत्वा अलमानन्द! सुभद्रं मा निषेधय। आनन्द! अहं महता उद्यमेन कुशिनारामागतः। एतदर्थमप्यागतः। मा तं निषेधयेति। अथायुष्मान् आनन्दः सुभद्राय परिव्राजे एतदब्रवीत्। गच्छ सुभद्र! प्रविश। ददाति भगवान् गौतमस्तुभ्यमवसरम्। अथ सुभद्रः परिव्राट् यत्र भगवान् गौतमस्तत्रोपसमक्रामत्। उपगम्य च एकमन्त निषद्य भगवन्तं गौतमं शङ्कां प्रष्टुकाम एवमाहस्म। भवन्! गौतम! इमे ते श्रमणब्राह्मणाः पूरणादयः षट् शास्तारश्च स्वां स्वां प्रतिज्ञां समभ्यज्ञासिषुः? उताहो केचित् समभ्यज्ञासिषुः न केचित् समभ्यज्ञासिषुरिति?। ततो भगवान् गौतमश्चावादीत्। सुभद्र!

मा त्वं तीर्थकान् प्रतिपृच्छ । मया भाषितं धर्म्मं शृणु । सुभद्र ! अस्मिंस्तु धर्म्मविनये यश्च आर्याष्टाङ्गिको मार्गः सन्दृश्यते तमुपसेव्य श्रोतापत्तिफलं प्रतिलभ्य प्रथमः श्रमणः सकृदागामि फलं प्रतिलभ्य द्वितीयः श्रमणः अनागामि फलं प्रतिलभ्य तृतीयः श्रमणः अर्हत्फलं प्रतिलभ्य च चतुर्थः श्रमणः भवति । सुभद्र ! इमे श्रमणब्राह्मणाः। सुभद्र ! भिक्षवः सम्यग्विहरेयुः । अर्हद्भिर्लोकोऽशून्यः । शून्या अन्ये परप्रवादाः श्रमणैः । सुभद्र ! योऽहं प्रव्रजितः सन् ज्ञेयस्य धर्म्मस्य पदं समवर्त्तयम् । अतो बहिः प्रथमोपि श्रमणो नास्ति । द्वितीयोपि श्रमणो नास्ति । तृतीयोपि श्रमणो नास्ति । चतुर्थोपि श्रमणो नास्ति । शून्याः अन्यपरप्रवादाः श्रमणैः । सुभद्र ! इमे भिक्षवः सम्यग्विहरेयुर्लोकः अर्हद्भिरशून्यो भवेदिति । तच्छ्रुत्वा सुभद्रः प्रीतिभरितहृदय आहस्म । भवतो गौतमस्य धर्म्मः परमो नैर्य्याणिकः । बालोऽहम् । भवता गौतमेन देशितो धर्म्मश्चिराद्दृष्टः । यतो हि नाम एतावन्तं कालमेवंरूपं नैर्य्याणिकं धर्म्मं नाशृणवम् । धिग् बताज्ञतामिति । उक्त्वा भगवन्तं गौतमं समभिवन्द्य प्रव्रज्यां ययाचे । अथ भगवान् शाक्यमुनिरायुष्मन्तमानन्दमामन्त्रयत् । तस्माद्धि आनन्द ! सुभद्रं परिव्राजं प्रव्राजयेति । आयुष्मान् आनन्द-स्तथाऽकार्षीत् । सुभद्रः परिव्राट् भगवतो गौतमस्य सकाशे प्रव्रज्यां च उपसम्पदञ्च लेभे । भगवान् गौतमः सुभद्राय परिव्राजे प्रव्रज्याञ्च उपसम्पदञ्च दत्वा कर्म्मस्थानं समाचख्यौ । स सुभद्रः कर्म्मस्थानं प्रतिगृह्य त्रिलक्षणं समारोप्य भावयन् सार्द्धं प्रतिसंविद्भिरर्हत्त्वं सम्प्राप्तवान् । अयं सुभद्रः परिव्राट् कस्माद्भगवतो गौतमस्य परि-णिर्वाणकाल एव क्लेशेभ्यो विमुक्त इति ? । प्रार्थनावशात् । का च तस्य प्रार्थना ? ।

भगवतो गौतमस्य पादौ शिरसा वन्दध्वम् इति। एवमायुष्मान् आनन्दः सर्वांस्तान् मल्लराजान् भगवन्तं गौतमं समभ्यवन्दयत्।

तस्मिंस्तु समये सुभद्रो नाम परिव्राट् भगवतो गौतमस्य परिनिर्वाणं श्रुत्वा श्रमणो गौतमः किल अद्य पश्चिमे यामे परिनिर्वास्यति। यावच्छ्रमणो गौतमो न परिनिर्वाति तावन्ममैकां शङ्कां परिपृच्छामीति विचिन्त्य यत्र शालवनं तत्रोपगम्य आनन्दमेतद्-ब्रवीत्। आनन्द! अहमिच्छामि श्रमणं गौतमं द्रष्टुम्। अस्ति मे पृच्छनीया शङ्केति। तच्छ्रुत्वा आनन्दोऽचिन्तयत्। तीर्थिका नाम स्वावबोधमेव दृढं गृह्णन्ति। तस्य विसर्जनार्थं बहुभाषमाणस्य भगवतो गौतमस्य कायवाग्विहिंसा अपि भविष्यन्तीति। अलं सुभद्र! मा भगवन्तं गौतमं विहिंसय। क्लान्त इदानीं भगवान् गौतम इति। एवमायुष्मान् आनन्दो जवनिकायाः बहिर्द्वारि स्थितः सन् द्वितीयतृतीयवारयोरपि न्यषेधयच्च।

ततश्च भगवान् गौतम आनन्देन कृतं सुभद्रस्य निषेधं श्रुत्वा अलमानन्द! सुभद्रं मा निषेधय। आनन्द! अहं महता उद्यमेन कुशिनारामागतः। एतदर्थमप्यागतः। मा तं निषेधयेति। अथायुष्मान् आनन्दः सुभद्राय परिव्राजे एतदब्रवीत्। गच्छ सुभद्र! प्रविश। ददाति भगवान् गौतमस्तुभ्यमवसरम्। अथ सुभद्रः परिव्राट् यत्र भगवान् गौतमस्तत्रोपसमक्रामत्। उपगम्य च एकमन्तं निषद्य भगवन्तं गौतमं शङ्कां प्रष्टुकाम एवमाहस्म। भवन्! गौतम! इमे ते श्रमणब्राह्मणाः पूरणादयः षट् शास्तारश्च स्वां स्वां प्रतिज्ञां समभ्यज्ञासिषुः। उताहो केचित् समभ्यज्ञासिषुः न केचित् समभ्यज्ञासिषुरिति?। ततो भगवान् गौतमश्चावादीत्। सुभद्र!

मा त्वं तीर्थकान् प्रतिपृच्छ । मया भाषितं धर्म्मं शृणु । सुभद्र ! अस्मिंस्तु धर्म्मविनये यश्च आर्याष्टाङ्गिको मार्गः सन्दृश्यते तमुपसेव्य श्रोतापत्तिफलं प्रतिलभ्य प्रथमः श्रमणः सकृदागामि फलं प्रतिलभ्य द्वितीयः श्रमणः अनागामि फलं प्रतिलभ्य तृतीयः श्रमणः अर्हत्फलं प्रतिलभ्य च चतुर्थः श्रमणः भवति । सुभद्र ! इमे श्रमणब्राह्मणाः। सुभद्र ! भिक्षवः सम्यग्विहरेयुः । अर्हद्भिर्लोकोऽशून्यः। शून्या अन्ये परप्रवादाः श्रमणैः । सुभद्र ! योऽहं प्रव्रजितः सन् श्रेयस्य धर्म्मस्य पदं समवर्त्तयम् । अतो बहिः प्रथमोपि श्रमणो नास्ति । द्वितीयोपि श्रमणो नास्ति । तृतीयोपि श्रमणो नास्ति । चतुर्थोपि श्रमणो नास्ति । शून्याः अन्यपरप्रवादाः श्रमणैः । सुभद्र ! इमे भिक्षवः सम्यग्विहरेयुर्लोकः अर्हद्भिरशून्यो भवेदिति । तच्छ्रुत्वा सुभद्रः प्रीतिभरितहृदय आहस्म । भवतो गौतमस्य धर्म्मः परमो नैर्य्याणिकः । बालोऽहम् । भवता गौतमेन देशितो धर्म्मश्चिराद्दृष्टः । यतो हि नाम एतावन्तं कालमेवंरूपं नैर्य्याणिकं धर्म्मं नाशृणवम् । धिग् बताज्ञतामिति । उक्त्वा भगवन्तं गौतमं समभिवन्द्य प्रव्रज्यां ययाचे । अथ भगवान् शाक्यमुनिरायुष्मन्तमानन्दमामन्त्रयत् । तस्माद्धि आनन्द ! सुभद्रं परिव्राजं प्रव्राजयेति । आयुष्मान् आनन्दस्तथाऽकार्षीत् । सुभद्रः परिव्राट् भगवतो गौतमस्य सकाशे प्रव्रज्यां च उपसम्पदश्च लेभे । भगवान् गौतमः सुभद्राय परिव्राजे प्रव्रज्याञ्च उपसम्पदञ्च दत्वा कर्म्मस्थानं समाचख्यौ । स सुभद्रः कर्म्मस्थानं प्रतिगृह्य त्रिलक्षणं समारोप्य भावयन् सार्द्धं प्रतिसंविद्भिरर्हत्त्वं सम्प्राप्तवान् । अयं सुभद्रः परिव्राट् कस्माद्भगवतो गौतमस्य परिनिर्वाणकाल एव क्लेशेभ्यो विमुक्त इति ? । प्रार्थनावशात् । का च तस्य प्रार्थना ? ।

पुरा किल द्वौ भ्रातरौ बभूवतुः अयं ■ कनीयान् । द्वावेकतः कृषिकर्म्म चक्रतुः । ज्येष्ठेन एकेनैव सस्येन नववारानग्रसस्यदानं दत्तम् । ज्येष्ठः प्रथमं वापकाले बीजाग्रदानं दत्त्वा सस्यगर्भकाले कनीयांसमामन्त्रयत् । आवां सस्यगर्भेषु फलितेषु दानं दास्यामः । कनीयानपि तरुणसस्यानि मा नाशयेति आहस्म । ज्येष्ठोपि कनीयसः अनीप्सितं ज्ञात्वा तत् क्षेत्रं द्वेधा व्यभाजयत् । ज्येष्ठः स्वांशे सस्यगर्भान् फलयित्वा सङ्क्षोभ्यर्क्षीरेण समं संयोज्य पक्त्वा दानं ददौ। क्षीरकाले तद्गृहीत्वा कोट्यक्षीरं निर्हृत्य क्षीरेण सार्द्धं पक्त्वा दानमदात्। पृथुकाले पृथुकं कारयित्वा दानं प्रददौ । लावकाले लावाग्रं ददौ । राशीकरणे कलापाग्रमदात् । मर्द्दनकाले मर्दनाग्रं ददौ । मानकाले मानाग्रमदात् । कोशप्रवेशनकाले कोशाग्रं प्रददौ । एवं स हु ज्येष्ठ एकस्मिन् सस्ये नववारान् अग्रदानं ददौ । कनीयांस्तु तदुद्धृत्य दानमदित । तयोरभूत् ज्येष्ठः स्थविरः कौण्डिण्यः । स कौण्डिण्यः प्रथमबोधी सर्वेषां मनुष्याणां प्रथममेव श्रोतापत्तिफलं प्रतिलेभे । कनीयांस्तु अवधाय भगवतो गौतमस्य परिनिर्वाणकाल एव विमुक्तिसुखं प्रतिलेभे च । अयन्तु सुभद्रः पश्चिमविनेयो बुद्धविनेयश्चाभूत्।

अभिसम्बोध्याः प्रभृति यावत्परिनिर्वाणं भगवता शाक्यमुनिना विनीतानि विंशदसङ्ख्येयानि षट्त्रिंशत्कोटिशतसहस्राणि सप्तविंशत्कोटिसहस्राणि अशीतिकोटयश्चाभवन् । श्रावकैश्च विनीतानि चत्वारि असङ्ख्येयानि चत्वारिंशत्कोटिसहस्राणि सप्तविंशत्कोटयश्चाभवन् । एवं भगवान् गौतमो निशायाः प्रथमे यामे मल्लराजानां वन्दनं प्रतिगृह्य मध्यमे यामे सुभद्रं प्रव्राज्य पश्चिमे यामे भिक्षुभ्यो धर्म्मं दिदेश ।

अथायुष्मत आनन्दस्य भगवता शाक्यजिनेन भिक्षुभ्यो दत्तमनुशासनं श्रुत्वा महद्दौर्मनस्यं समुदपादिष्ट। स चानन्दो भगवतो गौतमस्य सकाशे रोदनं न भावुकमिति एकमन्तमुपगम्य शोकं तनुं करिष्यामीति व्यचिन्तयत्। स तु विहारं गत्वा कपिशीर्षमवलम्ब्य हिमजलसदृशबेत्रजलधारानिपातपूर्णाभ्यां कमलदलललितनयनाभ्यां तथागतवियोगशोकमर्दितशरीरो रुदन्नेव तस्थौ। अहं हि शैक्षः। सकरणीयः। शास्तुः परिनिर्वाणं सत्वरं भविष्यति। सोपि ममानुकम्पकः। श्वः प्रभृति कस्मै मुखधावनं दास्यामि। कस्य शय्यासनं प्रति संस्करणं करिष्यामि। कस्य पात्रचीवरं गृहीत्वा विचरिष्यामीत्यादिनि च कथयन् व्यलपत्। भगवान् शाक्यमुनिर्भिक्षूणामनुशासनं कुर्वन् भिक्षुगणानामन्तरे आनन्दमदृष्ट्वा कुत्र भिक्षवः! आनन्द इति अपृच्छत्। तेऽपि एष भवन्! आनन्दो विहारं प्रविश्य कपिशीर्षमवलम्ब्य रुदंस्तिष्ठतीति कथयामासुः। गौ०—गच्छत भिक्षवः! मद्वचनेन आनन्दमामन्त्रयत। अथ ते भिक्षवस्तथा चक्रुः। आयुष्मान् आनन्द आगम्य भगवन्तं गौतमं समभिवन्द्य एकमन्तं तस्थौ। अथ भगवान् शाक्यमुनिः आनन्दमेतदवदत्। अलमानन्द! मा शुचः मा परिदेवस्व। आनन्द! ननु मया प्रागेवाख्यातं प्रियैर्मनापैः सर्वैरेव नानाभावः विनाभावः अन्यथाभावश्च तत् कुतोत्र लभ्यम्?। यत्तु जातं भूतं संस्कृतं प्रलुग्धर्म्म तत्तु मा विनश्यति। नैतत् स्थानं विद्यत इति।

आनन्द! त्वं दीर्घकालं ममोपस्थायकः। मादृशस्य बुद्धस्य उपस्थायको न दुर्बलः?। कृतपुण्योसि त्वमानन्द! कृतसम्भारः। अप्रमादेन प्रधानमनुयुञ्जानः क्षिप्रं भवत्यनाश्रवः। प्रथमे धर्म्मसङ्गीतिकाले त्वमर्हत्त्वं प्राप्स्यसीति। एवं भगवान् गौतम आनन्दं समा-

श्वासयन् । प्रत्यूषे सम्प्राप्ते च तथागतस्य पश्चिमदर्शने अस्ताचला-सक्ते रजनीकरे निपतिते च मुक्ताहारसदृशतुहिनजलनिकरे गर्जितानुचरिते मेघनादे कनककिरिनिष्क्रान्तसुवर्णरसधारा इव भगवतो दशबलस्य शरीरात् षड्वर्णरश्मिजालानि व्यामप्रभामालाश्च समन्ताद्दशसु दिक्षु निर्गच्छन्ति स्म । तदा आयुष्मान् आनन्दः कौशेयवसनसहस्रैः परिवेष्टितस्वर्णाद्रिशोभेव दूरं गतस्य आतुरप्रियवल्लभस्य वियोगमसहमाना सती आर्य्येव तथागतं गौतममविजहत् अन्तर्जरनिकायाः परिभ्रमच्छेन धर्म्मसंवेगं जनयन् सुप्रज्ञस्य तथागतस्य सव्यपार्श्वे एव तस्थौ ।

तदानीं लोकनाथः स्वयम्भूर्भगवान् गौतम आयुष्मन्तमानन्दमामन्त्रयामास । आनन्द! का सामेयं वेला इति? प्रत्यूषवेला भगवन्! इति । तस्माद्धि आनन्द! भिक्षुसङ्घेभ्यो निवेदय । भवन्तु भिक्षुसङ्घाः सन्निपतिताः । भिक्षवः! इदानीमहमेक एव युष्मभ्यं अववदामि । मयि परिनिर्वाणे इमानि चतुरशीतिधर्म्मस्कन्धसहस्राणि युष्मभ्यं अववदिष्यन्ति । अनुशासिष्यन्ति । भिक्षवः! यूयं मैवं वोचत अतीतशास्तृकं प्रवचनम् । नास्ति यः शास्ता इति । भिक्षवः! मया वो यो धर्म्मो देशितः विनयः प्रज्ञप्तः स च वो ममात्ययेण शास्ता । इति । इदं गुरु इदं लघु । इदं अवद्यम् इदमनवद्यम् । इदं सचिकित्स्यम् इदमचिकित्स्यम् । इदं लौकिकम् इदं प्रज्ञप्तिवाच्यम् । इयं पुद्गलस्य सकाशे समुत्थानत्वा इयं सङ्घस्य सकाशे समुत्थानत्वा । एवमस्तीति वस्त्वस्मिन् शिक्षापदम् । विभागः स्कन्धपरिवारः । उभयतो विभागः महाविनयो नाम महाप्रज्ञप्तः । सकलं निरवशिष्टकं मयि परिनिर्वृते युष्माकं शास्तृ इति । स्थितेनैव मया चत्वारः स्मृत्युपस्थानाः चत्वारः सम्यक् प्रधानाः चत्वार

ऋद्धिपादाः, पञ्चेन्द्रियाणि, पञ्च बलानि, सप्त बोध्यङ्गानि, आर्याष्टाङ्गिको मार्गः, चत्वार आगमाः, पञ्च निकायाः, सकलं सूत्रपिटकं मयि परिनिर्वृते, युष्माकं शासितं इति । स्थितेनैव मया, पञ्च स्कन्धाः, द्वादशायतनानि, अष्टादश धातवः, चत्वारि आर्यसत्यानि, पञ्चविंशतिरिन्द्रियाणि, नव हेतवः, चत्वार आहाराः, सप्त स्पर्शाः, सप्त प्रज्ञाः, सप्त चेतनाः, सप्त त्यागा एतावन्तः कामावचरा धर्म्मा एतावन्तो रूपावचरा धर्म्मा एतावन्तोऽरूपावचरा धर्म्मा एतावन्तः पर्य्यापन्ना धर्म्मा एतावन्तोऽपर्य्यापन्ना धर्मा एतावन्तो लौकिका धर्म्मा एतावन्तो लोकोत्तरा धर्म्मा इतीमान् धर्म्मान् विभज्य चतुर्विंशतिसमन्तात्प्रस्थानमनन्तनयप्रतिमण्डितं मया देशितमभिधर्म्मपिटकं मयि परिनिर्वृते युष्माकं शासितृ इति ।

एवं भगवान् गौतमः परिनिर्वाणमञ्चे निपन्नः, पञ्चचत्वारिंशद्वर्षाणि मयादत्तो यथाववादः, तं सर्व्वमेकस्मिन् अप्रमादनये संक्षिप्य दातुकामः सन् यद्वोभिक्षवः! शास्त्राकरणीय श्रावकेषु हितैषिणाऽनुकम्पेन तत् सर्व्वं युष्माकमनुकम्प्य कृतम् । एतानि भिक्षवः! वृक्षमूलानि एतानि शून्यागाराणि । श्रयत भिक्षवः! ध्यायत । समापद्यध्वम् । मा पश्चाद्विप्रतिसारिणो भविष्यत । सम्पन्नशीला भिक्षवः! विहरत । सम्पन्नप्रातिमोक्षसंवरसंवृताश्च । अणुमात्रेष्वप्यवद्येषु भयदर्शिनः शिक्षापदेषु समादाय वर्त्स्यत इति उक्त्वा ■ गौरवजननार्थं भिक्षुसङ्घस्य आग्रन्तुकाम आमन्त्रयामि वो भिक्षवः! प्रतिवादयामि वो भिक्षवः! क्षयधर्म्माः संस्कारा व्ययधर्म्माः संस्कारा अप्रमादात् सम्पाद्यन्तामिति । इदं तथागतस्य पश्चिममनुशासनं मति । अथ भगवान् गौतमः सर्व्वाणि ध्यानानि समापत्तुकामः

प्रथमं ध्यानं समापादयत् । ततो द्वितीयं ध्यानम् । ततस्तृतीयं ध्यानम् । ततश्चतुर्थं च ध्यानं समापादयत् । चतुर्थध्यानादुत्थाय आकाशानन्त्यायतनम् । ततो विज्ञानन्त्यायतनम् । तत आकिञ्चन्यायतनम् । ततो नैव संज्ञानासंज्ञायतनं समापादयत् । नैव संज्ञानासंज्ञायतनसमापत्त्या उत्थाय संज्ञावेदितनिरोधसमापत्तिं समापादयत् । अथायुष्मान् आनन्द आयुष्मन्तमनुरुद्धमपृच्छत् । भवन्! अनुरुद्ध! भगवान् गौतमः परिनिर्वृत' इति । न तावदानन्द! भगवान् गौतमः परिनिरवात् । संज्ञावेदितनिरोधसमापत्तिसमापन्नो भगवान् गौतम इति ।

कथमनुरुद्धो जानातीति? आयुष्मान् अनुरुद्धो भगवतः शाक्यमुनेः परिनिर्वाणं ज्ञातुकामो भगवता गौतमेनैव समं समापत्तिं समापन्न इति । यावदेव संज्ञानासंज्ञायतनध्याने तावद्गत्वा इदानीं भगवान् शाक्यजिनो निरोधसमापत्तिं समापन्नः । अन्तर्निरोधे तु कालङ्क्रातिर्नाम नास्ति । यस्मात् सम्बुद्धा वा प्रत्येकबुद्धा वा आर्यश्रावका वा पश्चिमतः कुन्थाकिपिल्लकान् वा उपादाय सर्व्वे सत्वा भवाङ्गचित्तेनैव अव्याकृतेन दुःखसत्येन कालङ्कुर्वन्ति । तस्मात् आयुष्मान् अनुरुद्धो जानाति । अथ भगवान् सर्व्वदर्शी संज्ञावेदितनिरोधसमापत्त्याः समुत्थाय नैव संज्ञानासंज्ञायतनसमापत्तिं समापादयत् । एवं भगवान् गौतमः अनुलोमप्रतिलोमवशाद्विदेशं गच्छन् पुरुषो ज्ञातिगणं समालिङ्गन्निव सर्व्वाणि ध्यानानि समापाद्य चतुर्थध्यानाद्व्युत्थितोऽनन्तरं परिनिरवाच्च ।

तस्मिन्नु क्षणे अनेकान्याश्चर्य्याण्यभवन् । परिनिर्वृते भगवति शाक्यमुनौ सहाम्पतिर्महाब्रह्मा इमां गाथामभाषत ।

> सर्व्वे एव निवास्यन्ति भूता लोके समुच्छ्रयाः ।
> यथा हि एतादृक् शास्ता लोके अप्रतिपुद्गलः ।
> तथागतो बलप्राप्तः सम्बुद्धः परिनिर्वृत. । इति ।

शक्रो देवेन्द्र इमां गाथामभाषत ।

अनित्या बत संस्कारा उत्पादव्ययधर्मिणः ।
उत्पाद्य हि निरुध्यन्ते तेषां व्युपशमः सुखम् । इति ।

आयुष्मान् अनुरुद्ध इमे गाथे अवदत् ।

अभूताश्वासप्रश्वासो स्थितचित्तस्य वादिनः ।
अनेजं शान्तिमारभ्य यत् कालमकरोन्मुनिः ।
असंलीनेन चित्तेन वेदनामध्युपाश्रयत् ।
प्रदीपस्येव निर्वाणं विमोक्ष च ततोऽभवत् ।

आयुष्मान् आनन्द इमां गाथामभाषत ।

तदाऽसीत् यद्भीषणकं तदाऽसील्लोमहर्षणम् ।
सर्वाकारवरोपेते सम्बुद्धे परिनिर्वृते । इति ।

भगवति गौतमे परिनिर्वृते भिक्षवो देवा मनुष्याश्च अवीतरागाः । ते उरांसि ताडयन्तो रुरुदुः । छिन्नप्रपाता इव प्रपतन्तिस्म । आवर्तयामासुः । परिवर्तयामासुः । अतीव क्षिप्रं भगवान् गौतमः परिनिर्वृतः । अतीव क्षिप्रं भगवान् सुगतः परिनिर्वृतः । अतीव क्षिप्रं चक्षुर्लोके अन्तर्दध इति । ये भिक्षवो देवा वीतरागाः ते स्मृतिसम्प्रज्ञाना अधिवासयामासुश्च ।

इति श्रीशीलस्कन्धस्थविरस्य कृतौ सद्धर्ममकरन्दे
सम्बुद्धपरिनिर्वाणपरिदीपनो नाम
अष्टादशोऽध्यायः ।

# अथ एकोनविंशोऽध्यायः ।

अथाऽयुष्मान् अनुरुद्धो भिक्षून् आमन्त्रयत् आयुष्मन्तः! यूयं मा शोचत मा परिदेवध्वम् एतद्धि आयुष्मन्तः! भगवता गौतमेन प्रागेव समाख्यातम् । प्रियैर्मनापैः सर्वैरेव नानाभावो विनाभावः अन्यथाभावः । तत्कुतोऽत्र आयुष्मन्तः! लभ्यम्? यज्जातं भूतं संस्कृतं प्रलुतधर्म तद्गत मा प्रलुप्यत इति । नैतत्स्थान विद्यते आनन्द! देवा अपि आर्याः स्वयमपि अधिवासितुं न शक्नुवन्ति कथं शेषान् जनान् समाश्वासयिष्यन्तीति । वदध्वम् उद्धघायत इति । कथम्भूतः आयुष्मान् अनुरुद्धो देवान् मनसि करोतीति? सन्त्यानन्द! देवा अन्तरीक्षे पृथिवीसंज्ञिनः । ते अपि केशान् परिकीर्य्य क्रन्दन्ति । बाहून् प्रगृह्य क्रन्दति । छिन्नप्रपाता इव प्रपतन्ति । अतिक्षिप्रं भगवान् गौतमः परिनिर्वृतः । अतिक्षिप्रं भगवान् सुगतः परिनिर्वृतः । अतिक्षिप्रं चक्षुर्लोके अन्तर्हितः । ये देवा वीतरागाः ते स्मृतिसम्प्रजाता अध्यवस्य अनित्याः सर्वे संस्काराः कुतोऽत्र ते लभ्या इति ।

अथायुष्मांश्च अनुरुद्धः आयुष्मांश्च आनन्दः अतीव प्रत्यूषे भगवतो गौतमस्य परिनिर्वृतत्वादायुष्मन्तः! स देवलोके अप्रतिपुद्गलस्य दशबलधरस्य शास्तुरयं मृत्युर्नाललिष्टः । तौ सकलां महाजनानां का नु कथेति निशायां अवरोदभेदरूपया मरणप्रतिमयुक्तया धर्मकथया व्यत्ययगमयामासतुः । तां कथां कथयतोस्तयोरनुरुद्धानन्दयोः क्षणादेव अरुणोऽपि उदगच्छत् । अथायुष्मान् अनुरुद्धः आयुष्मन्तमानन्दमामन्त्र्य एतदवदत् । आनन्द! त्वं कुशिनारां गच्छ । तत्र च प्रविश्य कौशिनारकेभ्यो महेभ्य

आवेद्य 'परिनिर्वृतो वाशिष्ठाः! भगवान् गौतमो यस्येदानीं यूयं काल मन्यध्व' इति। एवं भवन्! इति आयुष्मान् आनन्द आयुष्मतोऽनुरुद्धस्य वचनं प्रतिश्रुत्य पूर्वाह्णे न्युष्य पात्रचीवरमादाय स्वद्वितीयः कुशिनारां प्रविवेश। तस्मिंश्च समये एतदर्थमेव सर्वे कौशिनारका मल्लाः सन्थागारशालायां सन्निपतिता भवन्तिस्म। ते अपि राजानस्तस्मिन् परिनिर्वाणस्थाने कीदृग्भिर्माल्यगन्धादिसत्कारैर्भवितव्यं? सन्निपततां भिक्षुसङ्घानां कीदृग्भिर्निषदनस्थानैर्भवितव्यम्? कीदृग्भिः खाद्यभोज्यैर्भवितव्यं? इति संमन्त्रयन्ते स्म।

अथायुष्मान् आनन्दो यत्र कौशिनारकानां मल्लानां सन्थागारशालास्तत्रोपसमक्रामत्। उपगम्य च कौशिनारकेभ्यो मल्लेभ्य आवेदयामास परिनिर्वृतो वाशिष्ठाः! भगवान् शाक्यमुनिः। यस्येदानीं कालं मन्यध्वामिति। आयुष्मत आनन्दस्य एतद्वचनं समाकर्ण्य मल्लाश्च मल्लपुत्राश्च मल्लस्नुषाश्च मल्लभार्य्याश्च अश्रुपूर्णनेत्रा दुर्मनसो मनोदुःखसमन्विताः केचित्केशान् परिकीर्य्य क्रन्दन्तिस्म केचिद्बाहून् उत्क्षिप्य क्रन्दन्ति स्म केचिच्छिन्नप्रपाता इव प्रपतन्ति स्म। आवर्त्तन्ते स्म विवर्त्तन्ते स्म अतिक्षिप्रं भगवान् गौतमः परिनिर्वृतः अतिक्षिप्रं भगवान् सुगतः परिनिर्वृतः अतिक्षिप्रं चक्षुर्लोके अन्तर्हित इति।

अथ कौशिनारका मल्लाः पुरुषान् आज्ञापयामासुः भद्राः! यूयं कुशिनारायां गन्धमाल्यादीनि सर्व्वाणि च तूर्य्यभाण्डानि समाहरतेति। अथ ते कौशिनारका मल्ला गन्धमाल्यादीनि सर्व्वाणि च तूर्य्यभाण्डानि पञ्च वस्त्रशतानि चादाय यत्र मल्लानामुपवर्त्तनं नाम शालवनं यत्र च भगवतो गौतमस्य कलेवरं तत्रोपसंचक्रमुः। उपसङ्क्रम्य च भगवतो गौतमस्य मृतदेहं नृत्यैर्गीतैर्वाद्यैश्च नानाविधैर्माल्यसुगन्धैश्च

वाशेष्ठाः! राज्ञश्चक्रवर्तिनः शरीरे प्रतिपद्यन्ते। तथागतस्य तथा शरीरे प्रतिपत्तव्यमिति। भवन्! आनन्द! कथं राज्ञश्चक्रवर्तिनः शरीरे प्रतिपद्यन्ते? इति वाशेष्ठाः! राज्ञश्चक्रवर्तिनः शरीरं नूतनेन वस्त्रेण वेष्टयते नूतनेन वस्त्रेण परिवेष्ट्य विहतेन कार्पासेन वेष्टयते। विहतेन कार्पासेन संवेष्ट्य नूतनेन वस्त्रेण वेष्टयते। एतेनैव क्रमेण राज्ञश्चक्रवर्तिनः पञ्चभिर्वस्त्रयुगशतैः संवेष्ट्य आयस्यां तैलद्रोण्यां प्रक्षिप्य अन्यया आयस्या द्रोण्या प्रतिच्छाद्यते। सर्वैः सुगन्धैश्चितां कृत्वा राज्ञश्चक्रवर्तिनः कलेवरं दहन्ति। चातुर्महापथे राज्ञश्चक्रवर्तिनः स्तूपं कुर्वन्तीति। वाशेष्ठाः! एवं राज्ञश्चक्रवर्तिनः शरीरं प्रतिपद्यन्ते। यथा वाशेष्ठाः! राज्ञश्चक्रवर्तिनः शरीरे प्रतिपद्यन्ते तथा तथागतस्य शरीरे प्रतिपत्तव्यम्। चातुर्महापथे तथागतस्य स्तूपः कर्तव्यः। तस्मिन् ये देवमनुष्यादयो माल्यं वा सुगन्धं वा वर्णकं वा आरोपयिष्यन्ति, पूजां वा करिष्यन्ति, चित्तं वा प्रदास्यन्ति तेषां तद्भविष्यति दीर्घरात्रं हिताय सुखायेति। अथ कौशिनारका मल्लाः कर्मकारिणः सेवकान् पुरुषान् आज्ञापयामासुः। तस्माद्धि भद्राः! यूय माल्यं विहतं कार्पासञ्च राशी कुरुत। ते तथा चक्रुः। अथ कौशिनारका मल्ला भगवतो गौतमस्य शरीरमाहतेन वस्त्रेण वेष्टयामासुः। आहतेन वस्त्रेण संवेष्ट्य विहतेन कार्पासेन वेष्टयामासुः। विहतेन कार्पासेन संवेष्ट्य आहतेन वस्त्रेण वेष्टयामासुः। एतेनैव क्रमेण पञ्चभिर्वस्त्रयुगशतैर्भगवतः शरीरं वेष्टयित्वा आयस्यां तैलद्रोण्यां प्रक्षिप्य अन्यया आयस्या तैलद्रोण्या प्रतिच्छादयामासुः। सर्वसुगन्धदारुभिश्चितां कृत्वा तस्यां चितायां भगवतो गौतमस्य मृतकलेवरं महत्या पूजया प्रतिष्ठापयामासुः। तस्मिन् [illegible] आयुष्मान् महाकाश्यपः स्थविरः पञ्चभिर्भिक्षुशतैः सार्द्धं [illegible] अध्वानं प्रतिपन्नः। तदान्यतर आजीवी दुर्शिनामाया मन्दारपु[illegible] अध्वानं प्रतिपन्नः। ददर्श चायुष्मान् महाकाश्यपो दूरादागच[illegible]

जीविनम् । दृष्ट्वा तस्मै आजीविने एतदब्रवीत् । जानासि भवन्! त्वमस्माकं शास्तारमिति । आम् भवन्! जानामि अद्य सप्ताहपरिनिर्वृतः श्रमणो गौतमः तस्य चितिस्थानान्मदारकुसुमं गृहीतमिति । तत्र ये भिक्षवः अवीतरागास्तेषां केचित् बाहून् प्रगृह्य चक्रन्दुः केचिच्छिन्नप्रपाता इव प्रपतन्तिस्म । आवर्त्तयामासुः । परिवर्त्तयामासुः । अतिक्षिप्रं भगवान् गौतमः परिनिर्वृतः । अतिक्षिप्रं भगवान् सुगतः परिनिर्वृतः । अतिक्षिप्रं चक्षुर्लोके अन्तर्हितमिति । ये भिक्षवो वीतरागास्ते स्मृतिसम्प्रजाता अध्यवन्ति स्म । अनित्याः संस्कारास्तत् कुतोऽत्र लभ्यमिति । तस्मिन् समये सुभद्रो नाम वृद्धप्रव्रजितस्तस्यां पर्षदि निषण्णः ।

अथ सुभद्रो वृद्धप्रव्रजितस्तेभ्यो भिक्षुभ्य एतदवोचत् । अलमायुष्मन्तः! मा शोचत । मा परिदेवध्वम् । सुमुक्ता वयं तस्मान्महाश्रमणात् । उपदिष्टा वयं तेन महाश्रमणेन इदं वोऽर्हति इदं वो नार्हतीति । इदानीं वयं यदिच्छामस्तत् करिष्यामः । यन्नेच्छामस्तन्न करिष्याम इति । तच्छ्रुत्वा आयुष्मतो महाकाश्यपस्य शक्त्या शिर्षे प्रहारे दत्त इव धर्मसंवेग उदपादि । अथाऽयुष्मान् महाकाश्यपो भिक्षूनामन्त्रयामास । अलमायुष्मन्तः! मा शोचत । मा परिदेवध्वम् । नन्वायुष्मन्तः! भगवता गौतमेन प्रागेवैतत् समाख्यातम् । प्रियेभ्योऽप्रियेभ्यः सर्व्वेभ्य एव नानाभावो विनाभावोऽन्यथाभावः । तत् कुतोऽत्र लभ्यम् । यत्तजातं भूतं संस्कृतं प्रलुप्तधर्म्म तद्धत मा प्रलुप्यते । नैतत् स्थानं विद्यत इति । किन्वायुष्मान् महाकाश्यपो नन्वर्हन्? आम् अर्हन् । स च काश्यपो भगवतो गौतमस्य परिनिर्वाणमजानन्नेव आजीविनमपृच्छत् । उताहो जानान्नेति । जानन्नेवापृच्छत् यदि स ज्ञातवान् । कस्मादाजीविनमेवमपृच्छत्? । तस्य केचिच्छ्रावका भगवन्तं गौतम-

न दृष्टवन्तः पूर्वं ते भगवतो गौतमस्य परिनिर्वाणमजानन्तश्चितिस्थानगता अतीव शोकिनो भविष्यन्ति । तेषां शोकस्य तनूकरणार्थमिति ।

तस्मिंश्च समये प्रधाना मल्लराजाश्चत्वारो वा अष्ट वा षोडश वा शीर्षस्नाता नूतनानि वस्त्राणि धारयन्तो वयं भगवतः शाक्यमुनेश्चितिमालेस्याम इति अग्निं प्रज्वालयितुं कतिकृत्वः समारेभिरे । न शेकुर्वह्निं प्रज्वालयितुम् । अथ कौशिनारका मल्लाः आयुष्मते अनुरुद्धाय एतदवोचन् । भवन्! अनुरुद्ध! वयं मल्लराजाश्चत्वारो वा अष्ट वा षोडश वा शीर्षस्नाता नूतनानि वस्त्राणि निवसाना नानोमुल्कान् गृहीत्वा कतिकृत्वो भगवतो गौतमस्य चितिं प्रज्वालयितुमारप्स्महि । ना शकाम ज्वालयितुम् । को नु तस्य हेतुः? । को नु प्रत्यय इति ? । वाशेष्ठाः! कश्चिद्देवानामभिप्रायः । भवन्! अनुरुद्ध! कथं देवानामभिप्राय इति । वाशेष्ठाः! आयुष्मान् महाकाश्यपः पञ्चभिर्भिक्षुशतैः सार्द्धं पावाया नगर्याः कुशिनारामागन्तुमध्वानं प्रतिपन्नः । यावदायुष्मान् महाकाश्यपो भगवतो गौतमस्य पादौ शिरसा समभिवन्दिष्यते । तावच्चिता न प्रज्वलत्विति । यथा भवन्! अनुरुद्ध! देवानामभिप्रायः तथा भवत्विति ।

अथाऽयुष्मान्महाकाश्यपो यत्र कौशिनारकाणां मल्लानां मुकुटबन्धनं नाम प्रधानमङ्गलमहाशाला । यत्र भगवतो गौतमस्य चिता तत्रोपसमक्रामत् सार्द्धं भिक्षुगणैः । स महाकाश्यप उपगम्य च चीवरमेकांसं कृत्वा त्रिश्चितां प्रदक्षिणीकृत्य अस्मिंस्तु स्थाने भगवतो गौतमस्य पादाविति संलक्षयामास । तत्सन्निधौ स्थित्वाऽभिज्ञापादकं चतुर्थं ध्यानं समापद्यत । ततः समुत्थाय सहस्रारो चक्रलक्षणप्रतिमण्डितौ सुप्रतिष्ठितौ भगवतो गौतमस्य श्रीपादौ सार्द्धं कार्पासपटलैः पञ्चवस्त्रयुग-

शतानि सुवर्णद्रोणिश्च चिताश्च द्वेधाकृत्वा मन्मस्तके प्रतिष्ठतामिति प्रार्थयत । तस्मिन्क्षणे तानि वस्त्रयुगादीनि द्वेधा कृत्वा मेघपटलात् पूर्णचन्द्र इव भगवतो गौतमस्य पादौ निश्चक्रमतुः । अथायुष्मान् महाकाश्यपो विकसितरक्तकमलसदृशौ द्वौ हस्तौ सुवर्णवर्णौ शास्तृपादौ यावद्गुल्फं दृढं गृहीत्वा स्वीये शीर्षे प्रत्यष्ठापयत् । महान् जनानिच यस्तदाश्चर्यं समवलोक्य उत्तरं नादात् । गन्धमाल्यादिभिश्च समभ्यर्च्य यथाभिरुचि प्राणमत् । एवं महाजनेन तैः पञ्चभिर्भिक्षुशतैर्वन्दित आयुष्मतो महाकाश्यपस्य आधिष्ठानबलादेव भगवतो गौतमस्य पादौ हस्तं मुक्त्वा चन्दनदार्वादीनां किञ्चिदप्यविचाल्य यथास्थानं एव प्रतिष्ठतः स । ततश्च भगवतः शाक्यमुनेश्चितिः स्वयमेव समन्तादेकप्रहारेणैव प्राज्वालीत् । दह्यमानस्य शास्तृशरीरस्य यन्मूर्न्मांसत्वक्स्नायवः शिरोऽस्थि मज्जा वा तेषां भस्म नैवाऽसीत् कज्जलञ्च । यथा हि सर्पिषि वा कर्पूरे वा तैले वा दह्यमाने भस्म न दृश्यते तथैवाऽभवत् । पञ्चवस्त्रयुगशतानि च दग्धानि यान्याभ्यन्तरिकाणि यानि च बाह्यानि । तेषु दग्धेष्वन्तरीक्षादुदकधारा प्रादुर्भूय चितिं निरवापयत् । पुनः कौशिनारकमल्ला अपि सर्वगन्धोदकेन तां चितां निर्वापयामासुः । सुमनःकुड्मलसदृशाश्च मुक्तासदृशाश्च सौवर्णाश्च धातव* एवावशिष्टाः । दीर्घायुष्काणां सम्बुद्धानां शरीरं स्वर्णस्कन्धमिवैकघनं भवति । भगवान् गौतमस्तु अहं न चिरात्परिनिर्वास्यामि । मम शासनं तावत्सर्वत्र न विश्रुतम् । तस्मान्मयि परिनिर्वृते सर्षपमात्रमपि धातुं गृहीत्वा तन्निधाय स्वेषु स्वेषु नगरादिषु चैत्यं कारयित्वा परिचरंश्च महाजनः स्वर्गपरायणो भवत्विति धातूनां विकिरणमभ्यलप्यत् ।

* अत्र पुस्तके धातुशब्देन प्रायशो भगवतो गौतमस्य अस्थिधातुरेवोच्यते । बुद्धसमये तु धातुरिति भगवतो गौतमस्य च अर्हताञ्चास्थीनां सञ्ज्ञा भवति ।

केचिद्धातवो विकीर्णाः । केचिन्न विकीर्णाः । ते कतमे चत्वारो दंष्ट्राधातवः। द्वे अक्षिणी उष्णीषमिति एते सप्त धातवो न विकीर्णाः। तेषां क्षुद्राः सर्षपबीजमात्राः। महान्तो द्वेधा भिन्नतण्डुलमात्राः। अतिमहान्तो मुद्गबीजमात्राश्चाभवन्। एवं चितिं निर्वाप्य कौशिनारका मल्लराजाः सन्थागारशालां चातुर्जातिकैः सुगन्धैः परिवास्य लाजपञ्चमानि च पुष्पाणि विकीर्य्य उपरि वितानं बध्वा सुवर्णतारकाभिः समलङ्कृत्य तत्रापि गन्धदामरत्नदामान्यऽवलम्बयामासुः। सन्थागाराद्यावन्मुकुटबन्धनं नाम प्रधानमङ्गलशाला तावदुभयोः पार्श्वयोर्मेवनिकादिभिः परिक्षिप्य उपरि चेलवितानं बन्धयित्वा सुवर्णताराभिः समलङ्कृत्य तत्रापि गन्धदाममालादामरत्नदामान्यऽवलम्ब्य मणिदण्डानि च पञ्चवर्णान्ध्वजांश्चोच्छ्रित्य समन्ताद्ध्वजपताकाः परिक्षेपयामासुः।

सर्व्वालङ्कारविभूषिते हस्तिपृष्ठेऽपि सधातुं सुवर्णद्रोणिमवस्थाप्य मालागन्धादिभिः समभ्यर्च्य साधुक्रीडनं कुर्वन्तः अन्तर्नगरं प्रवेश्य सन्थागारशालायां महार्घे वरपर्य्यङ्के प्रतिष्ठापयामासुः। उपरि श्वेतच्छत्रञ्च दधुः। अथ कौशिनारका मल्ला भगवतो गौतमस्य धातून् सप्ताहं शक्तिहस्तैः पुरुषैः परिक्षेपयामासुः। प्रथमं तावद् कुम्भेन कुम्भं प्रहरन्तो हस्तिनः परिक्षेपयामासुः। ततो ग्रीवया ग्रीवाः प्रहरतोऽश्वांश्च ततश्चाणिकोट्याऽऽणिकोटिं प्रहरतो रथांश्च। ततो बाहुभिर्बाहून्प्रहरतो योधांश्च। तेषां पर्य्यन्तं कोट्या कोटिं प्रहरद्भिर्धनुर्भृद्भिः परिक्षेपयामासुः। एवं समन्ताद्योजनमात्रे स्थाने ते राजान आरक्षां विदधुः।

इति श्रीशीलस्कन्धविरस्य कृतौ सद्धर्ममकरन्दे
शास्तृपरिनिर्वाणपूजापरिदीपनो नाम
एकोनविंशोऽध्यायः।

# विंशोऽध्यायः

एवं परिनिर्वृते भगवति गौतमे राजा अजातशत्रुस्तच्छुश्राव। कथं शुश्राव? प्रथममेव तस्याऽमात्याः समाकर्ण्य एवं चिन्तयामासुः। भगवान् गौतमः परिनिर्वृतः। तत्तु वृत्तमस्माकं राज्ञे अजातशत्रवे सत्वरमुपनेतुं न युक्तम्। पार्थग्जन्यश्रद्धया अस्माकं राज्ञा सदृशोऽन्यो नास्ति। यद्येषोऽनेनैव नयेन श्रोष्यति। तस्य हृदयं फालिष्यति। राजा स्वस्माभिरेवानुरक्षणीय इति। ते च तिस्रः सुवर्णद्रोणीराहृत्य सर्पिर्मध्वादिभिश्चतुर्भिर्मधुरैः परिपूर्य्य राज्ञः सकाशं गत्वा एतदब्रुवन्। अस्माभिर्देव! स्वप्नं दृष्टम्। तस्य प्रशमार्थं दुकूलं धृत्वा यथानासिकाविवरं नाच्छाद्यते तथा चतुर्मधुरद्रोण्यां निपतुमर्हसीति। तदा राजा अजातशत्रुरर्थपराणाममात्यानां तद्वचनं समाकर्ण्य वत्साः! एवं भवत्विति सम्मतीय्य तथैवाकार्षीत्।

अथ तेऽपि अमात्या आभरणानि मुक्त्वा केशान् परिकीर्य्य यत्र भगवान् गौतमः परिनिर्वृतस्तदभिमुखा भूत्वा शिरस्यञ्जलिं प्रणिधाय राज्ञ एवमाहुः स। देव! मृत्योर्मोचयितृ सत्त्वं नाम नास्ति। अस्माकमायुर्वर्द्धनं! चैत्यस्थानं पुण्यक्षेत्रमभिषेकचैत्यप्रतिमः स भगवान् शाक्यमुनिः कुशिनारायां परिनिर्वृत इति। राजा अजातशत्रुस्तच्छ्रुत्वा विसंज्ञो जातः। सपदि चतुर्मधुरद्रोण्या उष्णतां मुमोच। अथाऽमात्या राजानमुत्क्षिप्य द्वितीयायां द्रोण्यां न्यपातयन्। ततो राजा संज्ञां लब्ध्वा वत्साः! किं वदतेत्यपृच्छत्। शास्ता महाराज! परिनिर्वृतः। पुनरपि राजा विसंज्ञो जातः। तस्यां चातुर्मधुरद्रोण्यां उष्णतां मुमोच। अथ तेऽपि अमात्या राजानमुत्क्षिप्य तृतीयायां द्रोण्यां न्यपातयन्। स

राजा पुनः संज्ञां लब्ध्वा ताताः! किं वदतेत्यपृच्छत् । शास्ता महाराज! परिनिर्वृत इति । राजा पुनरपि विसंज्ञो जातः । अथ तेऽपि अमात्या राजानमुत्क्षिप्य मूर्ध्नि घटैरुदकमासिषिचुः । पुना राजा संज्ञा लब्ध्वा आसनादुत्थाय सुगन्धपरिवासितान् मणिवर्णकेशान् सुवर्णफलकसदृशे पृष्ठे विकीर्य्य प्रवालाङ्कुरवर्णाभिः सुवृत्ताङ्गुलिभिः कनकवर्णमुरः सीव्यन्निव गृहीत्वा रुदन्नुन्मत्तवेशेनान्तर्वीथ्यामवतीर्णः ।

स च राजा अलङ्कृतनाटकस्त्रिभिः परिवृतो नगरान्निष्क्रम्य जीवकाम्रवनं नामोद्यानमगमन् । तत्र च गत्वा यस्मिंस्तु स्थाने निपद्य भगवान् गौतमस्तस्मै राज्ञे धर्म्ममदिशत् तत् स्थानं समवलोक्य भगवन्! सर्व्वज्ञ! अस्मिन् स्थाने निपद्य मह्यं धर्म्मं ननु दिष्टवानसि । भवान् मम शोकशल्यं निर्हरतात् । अहं युष्माकं साक्षितामागतः । इदानीं मह्य प्रतिवचनमपि न ददाति भगवानिति । पुनः पुनः परिदेव्य भगवन्! अहमेवंरूपे काले भवान् भिक्षुसङ्घपरिवृतो जम्बुद्वीपतले चरतीत्यन्यथा नन्वशृणवम् । इदानीं त्वहं युष्माकमननुरूपामयुक्तां प्रवृत्तिं शृणोमिति । एवमादीनि चोक्त्वा षष्टिमात्राभिर्गाथाभिर्भगवतो गौतमस्य गुणान् सस्मार । पुनरेवञ्च चिन्तयामास । मम परिदेवनेन किञ्चित्प्रयोजनं नास्ति । दशबलस्य भगवतो धातून् हरिष्यामीति अचिन्तयच्च ।

अथ राजा अजातशत्रुः कौशिनारकेभ्यो मल्लेभ्यः सह पत्रेण दूतं प्राहिणोत् । भगवान् गौतमोऽपि क्षत्रियः । अहमपि क्षत्रियः । अहमपि अर्हामि भगवतो गौतमस्य शरीरस्य भागं ग्रहीतुम् । अहमपि करिष्यामि भगवतो गौतमस्य गात्राणां स्तूपञ्च महञ्चेति । दूतं प्रेष्य पुनश्चिन्तयामास । यदि भगवतो गौतमस्य शरीरभागं दद्युः सुन्दरम् ।

यदि न दद्युः आहरणोपायेनाऽहरिष्यामीति । चतुरङ्गं सैन्यं सज्जीकृत्य राजापि निरक्रामत् । तथा वैशालिका लिच्छवि-राजाः शुश्रुवुर्भगवान् गौतमः कुशिनारायां परिनिर्वृत इति । तेऽपि कौशिनारकेभ्यो मल्लेभ्यः सह पत्रेण दूतं प्रेरयन् । भगवान् गौतमोऽपि क्षत्रियः । वयमपि क्षत्रियाः । वयमप्यर्हामो भगवतो गौतमस्य शरी-राणां भागं ग्रहीतुम् । वयमपि करिष्यामो भगवतो गौतमस्य शरीराणां स्तूपञ्च महश्चेति । ते दूतं प्रेष्य पश्चाच्चतुरङ्गं सैन्यं गृहीत्वा निश्चक्रमुः । तथा निशमयाञ्चक्रुश्च कापिलवस्तवाः शाक्यराजा भगवान् गौतमः कुशिनारायां परिनिर्वृत इति । तेऽपि कौशिनारकेभ्यो मल्लेभ्यः पत्रेण सह दूतं प्राहिण्वन् । भगवान् शाक्यमुनिरस्माकं ज्ञातिश्रेष्ठः । वयमप्य-र्हामो भगवतो गौतमस्य शरीराणां भागं लब्धुम् । वयमपि करिष्यामो भगवतः शाक्यमुनेः स्तूपञ्च महश्चेति । तेऽपि दूतं प्रेष्य चतुरङ्गं बलं गृहीत्वा पश्चान्निश्चक्रमुः ।

शुश्रुवुश्चाल्लकप्पका* अपि बुल्यो भगवान् गौतमः कुशिना-रायां परिनिर्वृत इति । अथाऽल्लकप्पका बुलयः कौशिनारकेभ्यो मल्लेभ्यः सार्द्धं पत्रेण दूतं प्राहिण्वन् । भगवान् गौतमोऽपि क्षत्रियः । वयमपि क्षत्रियाः । वयमप्यर्हामो भगवतो गौतमस्य शरीरस्य भागं लब्धुम् वयमपि करिष्यामो भगवतो गौतमस्य स्तूपञ्च महश्चेति । तथा शुश्रुवू रामग्रामकाः कोलियराजा भगवान् शाक्यजिनः कुशि-नारायां परिनिर्वृत इति । अथ रामग्रामकाः कोलियाः कौशिनारकेभ्यो मल्लेभ्यः पत्रेण सह दूतं प्राहिण्वन् । भगवान् गौतमोऽपि क्षत्रियः । वयमपि कोलियाः । वयमप्यऽर्हामो भगवतो गौतमस्य शरीरभागं

---

* वर्तमाननाम अल्लकापुर ।

लब्धुम् । वयमपि करिष्यामो भगवतो गौतमस्य स्तूपञ्च महश्चेति । न्यशमयच्च वैष्ठद्वीपको‡ ब्राह्मणो भगवान् गौतम कुशिनारायां परिनिर्वृत इति । अथ वेष्ठद्वीपको ब्राह्मणः कौशिनारकेभ्यो मल्लेभ्यः पत्रेण सह दूतं प्राहिणोत् । भगवान् गौतमोऽपि क्षत्रियः । अहमस्मि ब्राह्मणः । अहमप्यर्हामि भगवतो गौतमस्य शरीरभागं लब्धुम् । अहमपि करिष्यामि भगवतो गौतमस्य गात्राणां स्तूपञ्च महश्चेति ।

शुश्रुवुः पावेय्यका§ मल्लराजा भगवान् शाक्यसिंहः कुशिनारायां परिनिर्वृत इति । तेऽपि कौशिनारकेभ्यो मल्लेभ्यः पत्रेण सह दूतं प्राहिण्वन् । भगवान् गौतमोऽपि क्षत्रियः वयमपि क्षत्रियाः वयमप्यर्हामो भगवतो गौतमस्य शरीरभागं लब्धुम् । वयमपि करिष्यामो भगवतो गौतमस्य गात्राणां स्तूपञ्च महश्चेति । तेऽपि दूतं प्रेष्य पश्चाच्चतुरङ्ग सैन्यमादाय चक्रमुश्च । एषां पावेका मल्लराजाः सर्व्वेभ्यो राजभ्य आसन्नतराः । कुशिनाराग्निगव्यूत्यन्तरे नगरे वसन्ति स्म । भगवान् हि गौतमः पावामभ्युष्यैव कुशिनारां गतः । कस्मात् पावेयका मल्लराजाः प्रथममेव नागता इति ! । महापरिवाराः किल ते राजानः । परिहारं कुर्व्वन्त एवातिविलम्ब्य पश्चाद्गता इति । ते सर्व्वे सप्तनगरवासिनोऽपि तत्रागत्य पुनर्दूतं सार्द्धं पत्रेण प्रेषयामासुः । भगवतो गौतमस्य धातूनस्मभ्यं प्रदत्त । युद्धं वा कुरुतेति । तेऽपि राजानः पुनः कुशिनारां परिरुध्य तस्थुः । एवं परिरुद्धे नगरे कौशिनारका मल्लराजास्तेभ्यो राजभ्य एतदब्रुवन् । भो भो ! राजानः ! भगवान् गौतमोऽस्माकं ग्रामक्षेत्रे परिनिर्वृतः । न वयं शास्तुः सकाशं पत्रं प्राहिणुम । न वयमिह तमानयाम । शास्ता हि स्वयमेवेहागत्य दूतप्रेषणेनास्मान्

‡ उत्यदीप । § पाओया ।

निमन्त्रयामास । युष्माकं ग्रामक्षेत्रेषु महार्घे रत्ने समुत्पन्ने यूयं तदस्मभ्यं दत्त? सदेवके हि लोके बुद्धरत्नसदृशं रत्नं नाम नास्ति। एवंरूपं महार्घमुत्तमं रत्नं लब्ध्वा वयं कस्मैचिन्न प्रदास्यामः । यूयमेव न मातुः क्षीरमपिबन् । वयमपि प्राश्नीम । यूयमेव न पुरुषाः । वयमपि पुरुषा एव स्म इति । एवं भवत्विति परस्परमहङ्कारं कुर्वन्तः शासनं प्रतिशासनं प्रेषयन्तोऽन्योन्यं साहङ्कारं जगर्जुः ।

तत्र च प्रवृत्ते युद्धे कौशिनारकाणां राज्ञामेव जयो भविष्यति। कस्मात्? भगवतो गौतमस्य शरीरपूजनार्थं समागताः सर्वे देवा अपि तेषां पक्षे भविष्यन्ति । ततश्च कौशिनारका मल्लराजा आहुः स्म । भगवान् गौतमोऽस्माकं ग्रामक्षेत्रे परिनिर्वृतः । न वयं प्रदास्यामो भगवतो गौतमस्य शरीरभागमिति । एवमुक्ते द्रोणो नाम ब्राह्मणस्तेषां विवादं समाकर्ण्याचिन्तयत् । इमे राजानो भगवतः शाक्यमुनेः परिनिर्वृतिस्थाने विवादं कुर्वन्ति । न त्वेवैतदनुरूपम् । अलमनेन कलकलेन । अहमेतमुदुपशमयिष्यामीति । स तु द्रोणो द्विजवरो गत्वा तेभ्यः सर्वेभ्यो गणेभ्य ऊर्ध्वभूमिप्रदेशे स्थित्वा द्विभाणवारप्रमाणं द्रोणगर्जनं नाम एकमनुशासनं चकार । प्रथमभणनवारे एकं पदमपि ते न शुश्रुवुः । द्वितीयभणनवारस्य पर्यवसाने भवन्तः! आचार्य्यस्य शब्द इव प्रतिभाति । भवन्तः! आचार्य्यस्येव शब्द इव प्रतिभाति इति तेऽपि सर्वे निःशब्दा अभवन् । तस्मिन् काले जम्बुद्वीपे हि प्रायस्तु तस्य ब्राह्मणस्यान्तेवासीभूतो नाम नाभूत् । अथ द्रोणो ब्राह्मणस्तद्वचनं समाकर्ण्य निःशब्दांस्तूष्णीम्भूतान् राज्ञो विदित्वा पुनरेतत् प्रोवाच ।

शृण्वन्तु भो! भो! मम वाक्यमेकं स क्षान्तिवादी सुगतोऽस्मदार्य्यः ।
न साध्वयं सन्तमपूरुषस्य शरीरभक्ते यदि स्याद्विरोधः ॥

सर्व्वे भवन्तः सहिताः समग्राः कुर्म्मोऽष्टभागानिह मोदमानाः।
सन्ति श्रुताः स्तूपवरा दिशासु शौद्धोदना नैकजनाः प्रसन्नाः॥

अथ राजानोऽब्रुवन्। तस्माद्धि ब्राह्मण! त्वमेव भगवतो गौतमस्य धातून् अष्टधा सुविभक्तं विभज। एवं भो! इति द्रोणो द्विजवरस्तेषां सङ्घानां गणानां वचनं प्रतिश्रुत्य भगवतो गौतमस्य धातून् अष्टधा समं सुविभक्तं व्यभजत्। तत्रायमनुक्रमः द्रोणः किल ब्राह्मणस्तेषां राज्ञां वचनं समाकर्ण्य सुवर्णद्रोणीं व्यतरत्। अथ ते राजानः समागत्य सुवर्णवर्णद्रोण्यामेव सुवर्णवर्णधातून् दृष्ट्वा भगवन्! सर्व्वज्ञ! वयं पूर्व्वं युष्माकं द्वात्रिंशद्वरमहापुरुषलक्षणैः प्रतिमण्डितं षड्वर्णरश्मिविचित्रमशीत्यनुव्यञ्जनसमुज्ज्वलितं सुवर्णवर्णं शरीरं पश्यामः इदानीं भवतः सुवर्णवर्णधातवोऽवशिष्टाः। न युक्तमिदं भवन्! युष्माकमिति परिदिदेविरे।

तदा द्रोणो ब्राह्मणस्तेषां प्रमादं ज्ञात्वा भगवतो गौतमस्य दक्षिणं दंष्ट्राधातुं गृहीत्वा शीर्षवेष्टनाभ्यन्तरे असमक्षं न्यस्तवान्। तदनन्तरं भगवतः शाक्यमुनेर्धातून् अष्टधा समं सुविभक्तं व्यभजत्। सर्व्वे धातवः षोडशाढका अभवन्। एकैके नगरवासिनो द्वौ द्वावाढकौ लेभिरे। द्रोणे विप्रे भगवतो गौतमस्य धातून् विभजति शक्रो देवराजः सदेवानां लोकानां शङ्काछेदनार्थं चतुःसत्यदेशनायै उपकारभूतो भगवतो गौतमस्य दक्षिणो दंष्ट्राधातुः केन गृहीत इति विचारयन् द्रोणेन ब्राह्मणेन गृहीत इति व्यलोकयत्। दृष्ट्वा च द्रोणो ब्राह्मणो भगवतो गौतमस्य तस्य दक्षिणदंष्ट्राधातोरनुरूपं सत्कारं सम्पादयितुं कर्तुं न शक्ष्यति। गृह्णामि तमिति वेष्टनाभ्यन्तराद्गृहीत्वा सुवर्णसमुद्गे निधाय देवलोकं नीत्वा चूडामणिचैत्ये निदधौ। द्रोणोऽपि ब्राह्मणो

भगवतो गौतमस्य धातून विभज्य पश्चात् स्वगृहीतं दाक्षिणं दंष्ट्राधातुमपश्यन् संचोर्य्य गृहीतत्वात् केन गृहीत इति प्रष्टुमपि न शशाक। भवतैव ननु भगवतो गौतमस्य धातवो विभाजिताः । किं त्वं प्रथममेव तव धातूनामभावं न ज्ञातवानसीति मयि दोषारोपणं कुर्युरिति मह्यमपि भागं दत्तेति वक्तुमपि न शशाक ।

ततश्च स द्रोणो ब्राह्मण एषोऽपि विभक्तधातुः सुवर्णकुम्भो धातुगतिक एव । येन भगवतो गौतमस्य धातवो मिताः। अहमस्य स्तूपं करिष्यामीति विचिन्त्य भवन्त इमं कुम्भं मह्यं ददात्विति प्राहस्म । तदा शुश्रुवुश्च पिप्पलिवनिया मौर्य्या भगवान् गौतमः कुशिनारायां परिनिर्वृत इति । श्रुत्वा च कौशिनारकेभ्यो मल्लेभ्यो दूतं प्राहिण्वन् । भगवान् गौतमोपि क्षत्रियः । वयमपि क्षत्रियाः । वयमप्यर्हामो भगवतो गौतमस्य शरीरभागं लब्धुम् । करिष्यामः स्तूपञ्च महञ्चेति । ते दूतं प्रेष्य युद्धसज्जा निश्चक्रमुः । अथ ते कौशिनारकाः मल्लराजास्तेभ्य एतत्प्रोचुः नास्ति भगवतो गौतमस्य धातूनां भागो दातुम् । विभक्ता भगवतो गौतमस्य धातवः । अतोङ्गारमाहरतेति । ततस्तेऽप्यङ्गारमाजह्रुः । अथ राजा अजातशत्रुः राजगृहे नगरे भगवतो गौतमस्य धातूनां स्तूपञ्च महञ्च चकार । कथं चकार? कुशिनाराया नगर्या राजगृहं नगरं पञ्चविंशतियोजनानि । अत्रान्तरे अष्टौषभविस्तृतं समतलं मार्गं कारयित्वा मल्लराजा मकुटबन्धननाम्नि सन्थागारे यादृक्पूजाविशेषं चक्रुः पञ्चविंशतियोजने मार्गेपि तादृशमेव पूजाविशेषं कारयामास । स राजा अजातशत्रुर्लोकानुग्रहार्थं सर्वत्र पथि पण्यशालाश्च निरमापयत। राजा अजातशत्रुर्भगवतो गौतमस्य धातून् शाकिपञ्जरे प्रक्षिप्य आत्मना विजिते पञ्चाशद्योजन-

एवमुचुः । महाराज! अमनुष्याः कुपिताः शीघ्रं भगवतो गौतमस्य धातूनाहारयेति । अथ राजा अजातशत्रुरेवमवदत् । भवन्तः! तान्मे चित्तं तुष्टिं न प्रापत् । एवं सत्यपि धातूनाहारयेति त्रय । ततश्च राजा अजातशत्रुः सत्वरमेव भगवतो गौतमस्य धातूनाहारयत् । समाहृत्य सप्तमेऽहनि राजगृहे नगरे स्तूपञ्च महञ्च चकार । वैशालिया अपि अक्षलिच्छविराजा वैशाल्यां पुरि भगवतो गौतमस्य धातूनां स्तूपञ्च महञ्च चक्रुः । तथा कापिलवस्तवा अपि शाक्याः कपिलवस्तुनि नगरे भगवतो गौतमस्य धातूनां स्तूपञ्च महञ्च चक्रुः । अल्लकाप्पिका अपि बुलिया अल्लकप्पे नगरे भगवतो गौतमस्य धातूनां स्तूपञ्च महञ्च चक्रुः । रामग्रामिका अपि कोलिया रामग्रामे भगवतो गौतमस्य धातूनां स्तूपञ्च महञ्च चक्रुः । वेठद्वीपको ब्राह्मणो वेठद्वीपके नगरे भगवतो गौतमस्य धातूनां स्तूपञ्च महञ्च चकार । पावेयका अपि मल्लराजाः पावाया भगवतो गौतमस्य धातूनां स्तूपञ्च महञ्च चक्रुः । कौशिनारका अपि मल्लराजाः कुशिनारायां भगवतो गौतमस्य स्तूपञ्च महञ्च चक्रुः । द्रोणो ब्राह्मणः कुम्भस्य स्तूपञ्च महञ्च चकार । पिप्फलीवन्या मौर्य्याः पिप्फलीवनेऽङ्गाराणां स्तूपञ्च महञ्च चक्रुः । इति भगवतो गौतमस्य धातूनामष्ट स्तूपाः । नवमः कुम्भस्तूपः । दशमोऽङ्गार-स्तूपश्चेति प्रथमं दशस्तूपा अभवन् ।

एवं प्रतिष्ठितेषु स्तूपेषु आयुष्मान् महाकाश्यपो भगवतो गौतमस्य धातूनामन्तरायं समवलोक्य राजानमजातशत्रुमुपसङ्कम्य महाराज! एवं निधानं कर्त्तुमर्हसीत्याहस्म । अथ राजा अजातशत्रुः साधु भवन्! इति प्रत्यवदत् । भवन्! निधानकृत्यं हि मद्भारम् । भगवतो गौतमस्य शेषांश्च धातून् कथमाहरिष्यामित्यपृच्छच्च । नृपवर!

भगवतो गौतमस्य धातूनामाहरणं न स्वद्वारम्। तत्तु मद्द्वारमेवेति। भवन्। साधु। यूयं भगवतो दशबलस्य धातूनाहरत। अहं निधानं करिष्यामीति। आयुष्मान् महाकाश्यपोऽपि तेषां तेषां राज्ञां परिचरणमात्रमेवाऽवधाय शेषान्सर्वान् भगवतो गौतमस्य धातून् समाहरत्। रामग्रामे निहितान् भगवतो गौतमस्य धातून् नागराजाः परिजगृहुः। तेषामन्तरायोऽपि नास्ति। तांश्च धातून् भाविनि काले लङ्कायामनुराधपुरे महास्तूपे निधास्यन्तीति ज्ञात्वा नाहरत्। शेषेभ्यः सप्त नगरेभ्य एवाहरच्च। अथ स महाकाश्यपो राजगृहनगरस्य प्राचीनदिशाशायामवधाय अस्मिंस्तु स्थाने यो यश्च पाषाणोऽस्ति स सोन्तर्धत्ताम्, पांशुरपि शुद्धो भवतु उदकं मोद्गच्छत्वित्यादिशत्। यथा तेनादिष्टं तथैवाऽभूत्। अथ राजा अजातशत्रुस्तत् स्थानं सङ्खन्य समुद्धृतैः पांशुभिरिष्टका अकारयत्। स राजा अजातशत्रुस्ताभिरिष्टकाभिरशीतिमहाश्रावकाणां स्तूपांश्च कारयामास। तस्मिन् समये किं करोषि महाराज! इति पृष्टश्चायः अशीतिमहाश्रावकाणां स्तूपान् करोमीऽत्यवदत्। न कश्चिन्मनुष्यो वा दिव्यानां चक्षुषामलाभी वा सन्निधानमज्ञासीत् अन्यत्र राजानं कर्मकारांश्च। तस्मिन् निखाते अशीतिहस्तगम्भीरे अधस्ताल्लोहं संधापयित्वा तत्रापि विशालं लोहमयं गृहं कारयामास।

अथ राजा अजातशत्रुर्भगवतो गौतमस्य धातून् हरिचन्दनसमुद्रे चिक्षेप। तं हरिचन्दनसमुद्रमन्यस्मिन् हरिचन्दनसमुद्रे निचिक्षेप। तमन्यस्मिन् हरिचन्दनसमुद्र इति एवं क्रमशः अष्टसु हरिचन्दनसमुद्रेषु निचिक्षेप। तांश्च अष्ट हरिचन्दनसमुद्रान् अष्टसु हरिचन्दनस्तूपेषु। तांश्च हरिचन्दनस्तूपान् अष्टसु लोहितचन्दनसमुद्रेषु। तांश्च अष्ट

लोहितचन्दनसमुद्गान् अष्टसु लोहितचन्दनस्तूपेषु। तांश्च अष्ट लोहितचन्दनस्तूपान् अष्टसु हस्तिदन्तसमुद्गेषु। तांश्च अष्ट हस्तिचन्दनसमुद्गान् अष्टसु हस्तिदन्तस्तूपेषु। तांश्च अष्ट हस्तिदन्तस्तूपान् अष्टसु सर्व्वरत्नसमुद्गेषु। तांश्च अष्ट सर्व्वरत्नसमुद्गान् अष्टसु सर्व्वरत्नस्तूपेषु। तांश्च अष्ट सर्व्वरत्नस्तूपान् अष्टसु सुवर्णसमुद्गेषु। तांश्च अष्ट सुवर्णसमुद्गान् अष्टसु सुवर्णस्तूपेषु। तांश्च अष्ट सुवर्णस्तूपान् अष्टसु रजतसमुद्गेषु। तांश्च अष्ट रजतसमुद्गान् अष्टसु रजतस्तूपेषु। तांश्च अष्ट रजतस्तूपान् अष्टसु मणिसमुद्गेषु। तांश्च अष्ट मणिसमुद्गान् अष्टसु मणिस्तूपेषु। तांश्च अष्ट मणिस्तूपान् अष्टसु पद्मरागमणिसमुद्गेषु। तांश्च अष्ट पद्मरागमणिसमुद्गान् अष्टसु पद्मरागमणिस्तूपेषु। तांश्च अष्ट पद्मरागमणिस्तूपान् अष्टसु मरकतमणिसमुद्गेषु। तांश्च अष्ट मरकतमणिसमुद्गान् अष्टसु, मरकतमणिस्तूपेषु। तांश्च अष्ट मरकतमणिस्तूपान् अष्टसु प्रवालसमुद्गेषु। तांश्च अष्टप्रवालसमुद्गान् अष्टसु प्रवालस्तूपेषु निक्षेपयामास।

सर्वस्योपरि लङ्काद्वीपे स्तूपारामचैत्यप्रतिमं प्रवालमयं स्तूपमकारयत्। तदुपरि सर्वरत्नमयं गृहञ्च। तदुपरि रजतमयं गृहञ्च। तदुपरि ताम्रमयं गृहञ्चाकारयत् तासांस्तु सर्व्वरत्नमयीं सिकतामवकीर्य्य जलजस्थलजकुसुमानां सहस्राणि चावाकिरत्। पञ्चाशदधिकानि पञ्च च जातकशतानि अशीतिश्च महाश्रावकाः। राजा च शुद्धोदनः। महामाया च देवी यशोधरा च देवी। छन्नश्चामात्यः। कालुदायी चामात्यः। कन्थकश्च तुरङ्गमः। अश्वत्थस्तरुराजश्च। चत्वारो निधिकुम्भाश्चेति; इमान् सर्वान् सुवर्णमयानकारयत्। ततश्च पञ्च शतानि सुवर्णरत्नमयानां पूर्णकुम्भानां

प्रत्यष्ठापयत् पञ्च च सुवर्णध्वजशतानि उच्छ्राययामास । पञ्चशतानि च सुवर्णप्रदीपानां पञ्च शतानि च रजतप्रदीपानां सुगन्धतैलेन परिपूर्य प्रत्यष्ठापयत् । तेषु दुकूलवर्तीश्चाज्वालयत् । अथाऽमुष्मात् महाकाश्यपो न म्लायन्तु कुसुमानि न शुष्यन्तु च सुगन्धाः न निर्वान्तु प्रदीपाश्चेति समादिक्षत् । सौवर्णेऽपि पत्रे अक्षराण्यलेखदत् । यदा अनागतेऽध्वनि अशोको नाम कुमारश्छत्रमुच्छ्राप्याशोको धर्मराजो भविष्यति तदा स राजा धर्म्माशोको भगवतो गौतमस्य एषां धातूनां सर्वत्र विस्तारं करिष्यतीति । अथ स राजा अजातशत्रुः सर्वैः प्रसाधनैश्च समभ्यर्च्य आदित प्रभृति द्वाराण्यावृण्वन्निरक्रामत् । ताम्रमयगृहद्वारमावृत्यालम्बरज्वां कुञ्चिकाञ्च बबन्ध । प्रत्यष्ठापयच्च तत्र महामणिस्कन्धम् । तत्राक्षराणि चालेखयत् । अनागते दरिद्रराज इमं मणिस्कन्धं गृहीत्वा भगवतो गौतमस्य धातूनां सत्कारं करोत्विति ।

अथ सहस्राक्षो देवराजो विश्वकर्म्माणं देवपुत्रमामन्त्रयत् । आह च वत्स! राज्ञा अजातशत्रुणा भगवतो गौतमस्य धातूनां निधानं कृतम् । तस्मिंस्तु स्थाने त्वमारक्षामपि कुर्वीत । ततश्च प्राहिणोत् । स च समागत्य वालसंघर्षणं नाम यन्त्रं प्रयुक्तवान् । तस्मिन् स्तूपगर्भे काष्ठमयीः पुत्तलिकाः प्रवालमयान्कृपाणान् गृहीत्वा वातवेगसदृशेन वेगेन नित्यं परिभ्रमन्तीश्च प्रायुङ्क्त । तत्र समन्ताद्विजकास्तरणैरिव शिलाभिः परिक्षिप्य उपरि पांशुप्रक्षेपणाद्भूमिं समां चकार । तत उपरि विशालं पाषाणस्तूपं निरमात् । तदा भगवतो गौतमस्य अभिन्नानां धातूनां दक्षिणादंष्ट्राधातुस्त्रयस्त्रिंशद्देवलोके प्रणिधाय पुरुहूतप्रमुखैर्देव-

ब्रह्मगणैश्च एको दंष्ट्राधातुर्गान्धारदेशे, एको राज्ञः कालिङ्गस्य नगरे एको लङ्कायाञ्च समभ्यर्च्यते सम्भिवन्द्यते च । वामाक्षकधातुर्मोञ्जेरिकनागभवने नागराजैर्मह्यते इदानीं तु राज्ञः कालिङ्गस्य विजयतः पश्चात् समानीतो वामदंष्ट्राधातुरपि द्वौ ग्रीवाललाटधातू च लङ्कावासिभिर्निरन्तरं सगौरवं सविनयं च संमान्येते समभिवन्द्येते च ।

इति श्रीशीलस्कन्धस्थविरस्य कृतौ सद्धर्ममकरन्दे सम्बुद्धधातुविभजनपरिदीपनो नाम विंशोऽध्यायः ।



# अथ एकविंशोऽध्यायः ॥

अथ समाप्तसर्व्वबुद्धकृत्यो भगवान् गौतमः कुशिनारायामुपवर्तने मल्लानां शालवने यमकशाल्योरन्तरे वैशाखपूर्णमास्यां प्रत्यूषे निरुपधिशेषनिर्वाणात् परिनिरवात् । तस्य भगवतो लोकनाथस्य परिनिर्वाणे सन्निपतितानां सप्तानां भिक्षुशतसहस्राणां प्रधान आयुष्मान् महाकाश्यपोऽभूत् । स तु गणज्येष्ठ । सप्ताहतः प्राक्परिनिर्वृते भगवति गौतमे सुभद्राख्येन वृद्धप्रव्रजितेन, अलमायुष्मन्तः ! मा शोचत । मा परिदेवध्वम् । सुमुक्ता वयं तस्मान्महाश्रमणात् । तेन च महाश्रमणेन उपद्रुता वयं भवामः । इदं वोऽर्हति । इदं वो नार्हतीति । इदानीं वयं यदेषिष्यामस्तत् करिष्यामः । यन्नेषिष्यामस्तन्न करिष्याम इत्युक्तं कर्णोद्वेगकरं वचनमनुस्मरन् पापीयांसो भिक्षवः अतीतशास्तृकं प्रवचनमिति मन्यमानाः पक्षबलं लब्ध्वा अचिरादेव सद्धर्म्ममिममन्तर्धास्यन्ति । यावद्धर्म्मविनयस्तिष्ठति तावदनतीतशास्तृकं प्रवचनं भवति । तन्नूनमहं धर्म्मविनयसङ्गीतिं कारयामि । यथेदं शासनमध्वन्यं स्याच्चिरात् स्थितञ्च । यतोऽहं भगवता गौतमेनाऽपि काश्यप! धास्यसि त्वं शानानि पांशुकूलानि निर्व्वसनानीत्युक्त्वा असाधारणेन परिभोगेण सङ्गृहीतः । अहं हि भिक्षवः! यावदेवाऽऽकाङ्क्षे विविच्यैवाकुशलेभ्यो धर्म्मेभ्य. सवितर्कं सविचारं विविक्तजं प्रीतिसुखं प्रथमं ध्यानमुपसम्पद्य विहरामि । तथा द्वितीयं ध्यानम् । तृतीयं ध्यानम् । चतुर्थं ध्यानञ्च । काश्यपोऽपि भिक्षवः! यावदेवाकाङ्क्षति विविच्यैव कामेभ्यो विविच्यैवाकुशलेभ्यो धर्मेभ्यः सवितर्कं सविचारं विविक्तजं प्रीतिसुखं प्रथमं ध्यानमुपसम्पद्य

विहरतीति । तथा द्वितीयं ध्यानम् । तृतीयं ध्यानम् । चतुर्थं ध्यानञ्चेति । एवमादिना क्रमेण नवानुपूर्वविहारषडभिज्ञादिभेद उत्तरमनुष्यधर्मं आत्मना समसमस्थापनेन चानुगृहीतः । तस्य मे किमानृण्यं भविष्यति । ननु मां भगवान् गौतमो राजेव ऐश्वर्य्यानुप्रदानेन सत्कृत्य स्वकुलवंशप्रतिष्ठापकोयं मे भविष्यतीति मत्वा अनेनैवाऽसाधारणेनानुग्रहेणान्वग्रहीत् ।

स तु महाकाश्यपः स्थविर एवं विचिन्त्य धर्म्मविनयसङ्गीतिकरणार्थं भिक्षूणामुत्साहं जनयामास । ततश्च स महाकाश्यपः स्थविरो भिक्षुभ्य एतदब्रवीत् । तस्माद्धि आयुष्मन्तः! वयं धर्म्मञ्च विनयञ्च सङ्गायामः । पुरा अधर्म्मो दिदीपे । धर्म्मः प्रतिवाह्यते स । अविनयो दिदीपे । विनयः प्रतिवाह्यते स । पुरा अधर्म्मवादिनो बलवन्तो भवन्ति स । धर्म्मवादिनो दुर्बलाश्च । अविनयवादिनो बलवन्तो भवन्ति स । विनयवादिनो दुर्बलाश्च । अथ ते भिक्षव आहुः स । तस्माद्धि भवानपि भिक्षूनुच्चिनोतु इति । तत आयुष्मान महाकाश्यपः सकलनवाङ्गशास्तृशासनपर्य्याप्तिधरान् श्रोतापन्नसकृदागाम्यनागामिशुष्कविदर्शकक्षीणाश्रवभिक्षूननेकशतमनेकसहस्रं परिवर्ज्य त्रिपिटकपर्य्याप्तिप्रभेदधरान् प्रतिसंवित्प्राप्तान् महानुभावान् भूयिष्ठान् भगवता गौतमेनैतदग्रे प्रस्थापितांस्त्रिविद्यादिभेदागतान् क्षीणाश्रवभिक्षूनेव एकोनपञ्चशतानि पर्यग्रहीत् ।

कस्मादायुष्मान् महाकाश्यप एकेनोनमकार्षीत्? । आयुष्मत आनन्दस्यावकाशकरणार्थम् । तेनाऽयुष्मताऽनन्देन सहापि विनापि धर्म्मं सङ्गातुं नशक्नोति । स चाऽयुष्मान् आनन्दः शैक्षः सकरणीयः । तस्मात्तेन सह न शक्नोति । स चाऽयुष्मान् आनन्दो यत् किञ्चिद्दग-

वता गौतमेन देशितं सूत्रगेयादि तत् सर्व्वं भगवतो गौतमस्य सम्मुखे प्रत्यग्रहीत्। तस्माद्विनापि न शक्नोति। यदि स आयुष्मान् आनन्दः शैक्षः सन्नपि धर्म्मसङ्गीत्यै बहूपकारित्वादुच्चेतव्यो ननु स्यात् कस्मान्नोच्चित इति? परापवादविवर्ज्जनार्थम्। आयुष्मान् महा काश्यप आयुष्मत्याऽनन्दे अतीव विश्वसिति स्म।

तस्मादायुष्मान् महाकाश्यप आयुष्मन्तमानन्दं शिरसि पलितपाण्डरेऽपि कुमारवादेनैवामन्त्रयत्। स चायुष्मान् आनन्दः शाक्यकुलसम्भवः। भगवतो गौतमस्य भ्राता पितृव्यपुत्रश्च। तत्र हि बहून् शैक्षान् प्रतिसंवित्प्राप्तान् भिक्षून् सन्त्यज्य शैक्षं प्रतिसंविदमप्राप्तमानन्दमुदचिनोदिति आयुष्मतो महाकाश्यपस्य च्छन्दागमनमिव केचिन्मन्यन्ते। तस्माच्च परापवादमपि परिवर्ज्य भिक्षूणामेवानुमत्या आनन्दं ग्रहीष्यामीति तमानन्दं नोदचिनोत्। अथ ते भिक्षवः स्वयमेवायुष्मत आनन्दस्यार्थं महाकाश्यपं ययाचिरे। अथाऽयुष्मान् महाकाश्यप आयुष्मन्तमपि आनन्दमुदचिनोत्। एवं भिक्षूणामेवानुमत्या उच्चितेनाऽयुष्मता आनन्देन सार्द्धं पञ्च भिक्षुशतान्यभवन्। अथ तेषां भिक्षूणामेतदभूत्। कुत्र नु वयं धर्म्मञ्च विनयञ्च सङ्गायेम इति। पुनस्तेषां भिक्षूणामेतदभूच्च। कुसुमपुरं हि सुभिक्षं बहुशयनासनम्। तन्नूनं वयं तत्र राजगृहनगरे वर्षं वसन्तो धर्म्मञ्च विनयञ्च सङ्गायेम। तत्रान्यैर्भिक्षुभिर्वर्षं नोपगन्तव्यमिति। अथ भगवतो गौतमस्य परिनिर्व्वाणात् सप्तसु महोत्सवदिनेषु सप्तसु धातुपूजादिनेष्वतिक्रान्तेषु इदानीं ग्रीष्मर्तोरर्द्धं अतिक्रान्तम्। अन्यदवशिष्टम्। वर्षर्तुरासन्न इति मत्वा आयुष्मान् महाकाश्यप एवमाह स्म। आयुष्मन्तः! वयं कुसुमपुरं गच्छाम इति। अथ स महाकाश्यप उपार्द्धं भिक्षुसङ्घं गृहीत्वा एकेन मार्गेणा-

गच्छत् । तथाऽयुष्मान् अनुरुद्धोपि उपार्द्धं भिक्षुसङ्घं समादायाऽपरेण मार्गेणागच्छत् । आयुष्मान् आनन्दो भगवतो गौतमस्य पात्रचीवराणि गृहीत्वा भिक्षुगणैः परिवृतो राजगृहनगरं गन्तुकामः सन् यत्र श्रावस्तिमार्गस्तत्र प्रतिपन्नः । आयुष्मत्यानन्दे प्राप्तेऽपि स्थाने महान् परिदेवोऽभवत् । भवन्! आनन्द! त्वं त्रिभुवननयनमस्माकं शास्तारं स्थापयित्वा कुत्र समागतोऽसि? ।

स त्वानन्दः क्रमेण श्रावस्तिमनुप्राप्तः । तस्मिन् आयुष्मत्यानन्दे श्रावस्तिमनुप्राप्ते भगवतः परिनिर्वाणदिवस इव महान् परिदेवः प्रवर्तते स्म । तत्राऽप्यायुष्मान् आनन्दः अनित्यताप्रतिसंयुक्ताभिर्धर्मकथाभिर्महाजनान् प्रसान्त्व्य जेतवनं प्रविवेश । स त्वानन्दः प्रविश्य च भगवता गौतमेनोषिताया गन्धकुट्या द्वारं विवव्रे । स च मञ्चपीठादीनि निर्हृत्य हस्तेन प्रस्पृश्य गन्धकुटीमपि समर्च्य म्लानकुसुमानि चापहृत्य पुनर्मञ्चपीठादीनि यथास्थान एव संदधौ । स चानन्दो भगवति गौतमे जीवति कर्तव्यं सर्वं समभ्यर्चनमकार्षीत् । अथायुष्मान् आनन्दो भगवतः शाक्यमुनेः परिनिर्वाणात् प्रभृति स्थाननिषदनबाहुल्यादुत्सन्नश्लेष्मादिदोषं कायं प्रशमयितुं द्वितीयेऽह्नि क्षीरविरेचनं पीत्वा विहार एव निषसाद । तथा निषण्णे शुभेन मानवेन प्रहितमेकं मानवं दृष्ट्वा आयुष्मान् आनन्द एतदब्रवीत् । अकालो मानव! इदानीम् । मया भैषज्यं पीतम् । श्व आगम्येत । स साध्विति चोक्त्वा गतः । स चायुष्मान् आनन्दः परेद्युरायुष्मता चेतकेन साकमुपगम्य शुभेन मानवेन पृष्टः शुभसूत्रं कथयामास । ततश्चायुष्मान् आनन्दो जेतवने विहारे भिन्नमातिसंस्करणं कारयित्वा अत्यासन्ने वर्षाकाले पुष्पपुरं प्रायात् । तथायुष्मान् महाकाश्यप आयुष्मान् अनुरुद्धश्च सकलं भिक्षुसङ्घं गृहीत्वा राजगृह-

वासभवनमिव, एकनिपाततीर्थमिव देवमनुष्याणाम्, मकरन्दमिव नेत्रमधुकराणाम्, दर्शनीयं सारमण्डपं निरमापयत् । तत्र च विविध-कुसुमदामावलम्बकविनिर्गतचारुवितानं रत्नविचित्रं मणिनिकरप्रभास-मुज्ज्वलविशालतलं नानापुष्पोपहारविचित्रपरिनिष्ठितभूमिं । ब्रह्मविमान-सदृशमलङ्कारयामास । तस्मिन् महार्घे मण्डपे पञ्चानां भिक्षुशतानां महार्घाणि श्रमणयोग्यानि पञ्च प्रत्यास्तरणशतानि प्रज्ञप्तानि । तत्र च मण्डपे दक्षिणस्यां दिशि उत्तरदिशाभिमुखं स्थाविरा-सनम् । मण्डपस्य मध्ये प्राङ्मुखं भगवतो गौतमस्यासनदृशं धर्मासनञ्च प्राज्ञापयत् । तत्र दन्ताङ्कितप्रवरव्यजनञ्च निधाय मत्कृत्यं निष्ठितमिति भिक्षुसङ्घेभ्यो निवेदयामास ।

अथ केचिद्भिक्षव आयुष्मते आनन्दाय एवमब्रुवन् । आयुष्मन्! सन्निपातः । त्वञ्च शैक्षः सकरणीयः । तस्मान्नार्हसि सन्निपातं गन्तुम् । अप्रमादो भवेति । अथायुष्मान् आनन्दः, श्वः सन्निपातः यद्यहं शैक्षः सकरणीयस्तत्र गच्छेयं । न मे तत् प्रतिरूपमिति निशाया बहुं कालं कायगतया स्मृत्या क्षिप्त्वा प्रत्यूषे चङ्क्रमणादवरुह्य विहारं प्रविश्य निषत्स्यामिति शरीरमाननाम । द्वौ पादौ च मह्यां मुक्तौ । शीर्षमुपधाने प्रणिहितम् । तदनन्तर-मनुपादायाश्रवेभ्यश्चित्तं मुमोच । स खलु आयुष्मान् आनन्द ईर्य्यापथविरीहतमात्मनोऽर्हत्त्वं विदित्वा भगवता गौतमेनाऽप्युक्तं कृत-पुण्योसि त्वमानन्द इति वचनमनुस्मरंस्तुतोष । परेद्युर्भिक्षव एकोन पञ्चशतानि कृतभोजनाः पात्रचीवराणि संशाम्य धर्म्मसभायां सन्नि-पतिता अभूवन् । आयुष्मान् आनन्दः स्वयं प्रतिलब्धमर्हत्त्वं दर्शयितुकामस्तैर्भिक्षुभिः साकं न गतः । ते भिक्षव आयुष्मतः

आनन्दस्य आसनमवहित्य यथावृद्धं निषेदुः । तदा केचिदेत-दासनं कस्येति पृच्छन्तिस्म । तेऽपि भिक्षव आनन्दस्येत्यूचु' आनन्दः कर्हिचित् गत इति? । तत्क्षणे आयुष्मान् आनन्द एवमचिन्तयत् । इदानीं मम गमनकाल इति । ततश्चायुष्मान् आनन्दः स्वमनुभावं दर्शयन् पृथिव्यां निमज्य गत्वा स्वकीये चासने निषसाद ।

एवं निषण्णे आयुष्मात्यानन्दे आयुष्मान् महाकाश्यपो भिक्षूना मन्त्रयत् । आयुष्मन्तः! किं प्रथमं सङ्गायामो धर्म्मं वा विनयं वेति? अथ भिक्षव आहुः स्म । भवन्! महाकाश्यप। विनयो नाम बुद्धशासनस्यायुः । विनये स्थिते तु शासनं स्थितं भवति । तस्माद्विनयमेव प्रथमं सङ्गायाम इति । कं प्रधानं कृत्वा विनयं सङ्गायाम इति? आयुष्मन्तमुपालिमिति । किमाऽनन्दो न प्रभवति? प्रभवत्येव । अपि तु जीवति भगवति शाक्यमुनौ विनयपर्य्याप्तावपि आयुष्मन्तमुपालिमेतदग्रे प्रास्थापयत् । तस्मादायुष्मन्तमुपालिं पृष्ट्वा विनयं सङ्गायामः । तत आयुष्मान् महाकाश्यपो विनयस्य प्रश्नार्थं स्वयमेव संमेने । एवमायुष्मान् उपालिः स्वयं संमत्य आसनादुत्थाय चीवरमेकांसं कृत्वा स्थविरान् भिक्षून् समभि-वन्द्य हस्तिदन्ताङ्कितं प्रवरवीजनमपि गृहीत्वा धर्म्मासने निषसाद ।

ततश्चायुष्मान् महाकाश्यपः प्रधानासने निषद्य आयुष्मन्तमुपालिं विनयं पप्रच्छ । आयुष्मन्! उपाले! प्रथमं पाराजिकं कुत्र प्रज्ञप्त-मिति? वैशालानामके नगरे । कमारभ्येति? सुदिन्नं नाम कलन्दक-पुत्रमारभ्येति । किस्मिन्वस्तुनीति? । मैथुनधर्म्मे इति । अथायु-ष्मान् महाकाश्यप आयुष्मन्तमुपालिं प्रथमस्य पाराजिकस्य वस्तु सम-

पृच्छत् । तथा निदानम् । पुद्गलम् । प्रज्ञप्तिम् । अनुप्रज्ञप्तिम् । आपत्तिम् । अनापत्तिमप्यपृच्छत् । एवं सर्वं विनयपिटकमायुष्मान् महाकाश्यप आयुष्मन्तमुपालिमपृच्छत् । आयुष्मान् उपालिः सर्व्वं विसर्जयामास । विसर्जनस्य पर्य्यवसाने ते पञ्चशतार्हन्तः सङ्गृहीतक्रमेणैव गणसङ्घानञ्च चक्रुः । अथायुष्मान् उपालिर्विनयसङ्गानावसाने वीजनं निक्षिप्य धर्म्मासनादवरुरोह । स चोपालिः स्थविरान् भिक्षून् समभिवन्द्य स्वकीय आसने निषसाद । अथ धर्म्मं सङ्गातुकाम आयुष्मान् महाकाश्यपो भिक्षून् अपृच्छत् । आयुष्मन्तः! कं प्राधान्ये कृत्वा धर्म्मं सङ्गायामः ? । अथ ते भिक्षव आयुष्मन्तमानन्दं प्राधान्ये कृत्वेत्याहुः स्म । आयुष्मान् महाकाश्यपश्च आयुष्मान् आनन्दश्च प्रश्नविसर्जनयोः पृथक् पृथक् स्वयमेव संमेने ।

अथायुष्मान् आनन्द आसनादुत्थाय एकांशं चीवरं कृत्वा स्थविरान् भिक्षून् समभिवन्द्य विचित्रं वीजनं गृहीत्वा धर्म्मासने निषण्णः । आयुष्मान् महाकाश्यप आयुष्मन्तमानन्द धर्म्मं पप्रच्छ आयुष्मान्! आनन्द! ब्रह्मजालसूत्रं कुत्र भाषितम्? इति । कुसुमपुरस्य च नालन्दस्य च अन्तरा राजागारके आम्रलष्ठिकायामिति । कमारभ्येति? सुप्रियञ्च परिव्राजं ब्रह्मदत्तञ्च मानवमिति । कस्मिन्स्विद्वस्तुनीति? वर्णावर्णकथन इति । अथायुष्मान् महाकाश्यप आयुष्मन्तमानन्दं ब्रह्मजालस्य सूत्रस्य निदानमपि पुद्गलमपि अपृच्छत् एतेनैवोपायेन पञ्चापि निकायांश्च अपृच्छत् । पञ्च हि निकाया नाम । दीर्घनिकायः । मध्यमनिकायः । संयुक्तनिकायः अङ्गोत्तरनिकायः । क्षुद्रकनिकायश्चेति । तत्र चतुरो निकायान् विहाय अवशेषं बुद्धवचनं क्षुद्रकनिकायो नाम । तत्र हि विनय आयु-

आनन्दस्य आसनमवहित्य यथावृद्धं निषेदुः । तदा केचिदेत-दासनं कस्येति पृच्छन्तिस्म । तेऽपि भिक्षव आनन्दस्येत्यूचुः आनन्दः क्वहिंचित् गत इति? । तत्क्षणे आयुष्मान् आनन्द एवमचिन्तयत् । इदानीं मम गमनकाल इति । ततश्चायुष्मान् आनन्दः स्वमनुभावं दर्शयन् पृथिव्यां निमज्य गत्वा स्वकीये चासने निषसाद ।

एवं निषण्णे आयुष्मत्यानन्दे आयुष्मान् महाकाश्यपो भिक्षून् मन्त्रयत् । आयुष्मन्तः! किं प्रथमं सङ्गायामो धर्म्मं वा विनयं वेति? अथ भिक्षव आहुः स्म । भवन्! महाकाश्यप। विनयो नाम बुद्धशासनस्यायुः । विनये स्थिते तु शासनं स्थितं भवति । तस्माद्विनयमेव प्रथमं सङ्गायाम इति । क प्रधानं कृत्वा विनयं सङ्गायाम इति? आयुष्मन्तमुपालिमिति । किमाऽनन्दो न प्रभवति? प्रभवत्येव । अपि तु जीवति भगवति शाक्यमुनौ विनयपर्य्याप्तावपि आयुष्मन्तमुपालिमेनदग्रे प्रास्थापयत् । तस्मादायुष्मन्तमुपालिं पृष्ट्वा विनयं सङ्गायामः । तत आयुष्मान् महकाश्यपो विनयस्य प्रश्नार्थं स्वयमेव संमेने । एवमायुष्मान् उपालिः स्वयं संमत्य आसनादुत्थाय चीवरमेकांशं कृत्वा स्थविरान् भिक्षून् समभिवन्द्य हस्तिदन्ताङ्कितं प्रवरवीजनमपि गृहीत्वा धर्म्मासने निषसाद ।

ततश्चायुष्मान् महाकाश्यपः प्रधानासने निषद्य आयुष्मन्तमुपालिं विनयं पप्रच्छ । आयुष्मन्! उपाले! प्रथमं पाराजिकं कुत्र प्रज्ञप्त-मिति? वैशालीनामके नगरे । कमारभ्येति? सुदिन्नं नाम कलन्दक-पुत्रमारभ्येति । किस्मिन्निवद्वस्तुनीति? । मैथुनधर्म्म इति । अथायु-ष्मान् महाकाश्यप आयुष्मन्तमुपालिं प्रथमस्य पाराजिकस्य वस्तु सम-

पृच्छत् । तथा निदानम् । पुद्गलम् । प्रज्ञप्तिम् । अनुप्रज्ञप्तिम् । आपत्तिम् । अनापत्तिमप्यपृच्छत् । एवं सर्वं विनयपिटकमायुष्मान् महाकाश्यप आयुष्मन्तमुपालिमपृच्छत् । आयुष्मान् उपालिः सर्व्वं विसर्जयामास । विसर्जनस्य पर्य्यवसाने ते पञ्चशतार्हन्तः सङ्गृहीतक्रमेणैव गणसङ्घ्यानञ्च चक्रुः । अथायुष्मान् उपालिर्विनयसङ्गानावसाने वीजनं निक्षिप्य धर्म्मासनादवरुरोह । स चोपालिः स्थविरान् भिक्षून् समभिवन्द्य स्वकीय आसने निषसाद । अथ धर्म्मं सङ्गातुकाम आयुष्मान् महाकाश्यपो भिक्षून् अपृच्छत् । आयुष्मन्तः! कं प्राधान्ये कृत्वा धर्म्मं सङ्गायामः ? । अथ ते भिक्षव आयुष्मन्तमानन्दं प्राधान्ये कृत्वेत्याहुः स्म । आयुष्मान् महाकाश्यपश्च आयुष्मान् आनन्दश्च प्रश्नविसर्जनयोः पृथक् पृथक् स्वयमेव संमेने ।

अथायुष्मान् आनन्द आसनादुत्थाय एकांशं चीवरं कृत्वा स्थविरान् भिक्षून् समभिवन्द्य विचित्रं वीजनं गृहीत्वा धर्म्मासने निषण्णः । आयुष्मान् महाकाश्यप आयुष्मन्तमानन्दं धर्म्मं पप्रच्छ आयुष्मान्! आनन्द! ब्रह्मजालसूत्रं कुत्र भाषितम् ? इति । कुसुमपुरस्य च नालन्दस्य च अन्तरा राजागारके आम्रलष्ठिकायामिति । कमारभ्येति ? सुप्रियञ्च परिव्राजं ब्रह्मदत्तञ्च मानवमिति । कस्मिन्स्विद्वस्तुर्नाति ? वर्णावर्णकथन इति । अथायुष्मान् महाकाश्यप आयुष्मन्तमानन्दं ब्रह्मजालस्य सूत्रस्य निदानमपि पुद्गलमपि अपृच्छत् एतेनैवोपायेन पञ्चापि निकायांश्च अपृच्छत् । पञ्च हि निकाया नाम । दीर्घनिकायः । मध्यमनिकायः । संयुक्तनिकायः अङ्गोत्तरनिकायः । क्षुद्रकनिकायश्चेति । तत्र चतुरो निकायान् विहाय अवशेषं बुद्धवचनं क्षुद्रकनिकायो नाम । तत्र हि विनय आयु-

ष्मतोपालिना विसर्जितः । शेषः क्षुद्रकनिकायश्चत्वारो निकायाश्च आयुष्मतानन्देन विसर्जिताः । तदेतत् सर्वं बुद्धवचनं रसवशादेकविधम् । धर्मविनयवशाद्विविधञ्च भवति । प्रथममध्यमपश्चिमवशात् पिटकवशाच्च त्रिविधम् । निकायवशात् पञ्चविधम् । अङ्गवशान्नवविधम् । धर्मस्कन्धवशाच्चतुरशीतिसहस्रविधमिति ज्ञातव्यम् ।

कथं रसवशादेकविधं भवति ? भगवान् गौतमोऽनुत्तरं सर्व्वज्ञताज्ञानं समाधिगम्य यावन्निरुपधिशेषान्निर्वाणात् परिनिर्वृतः । एतदन्तरं पञ्चचत्वारिंशद्वर्षाणि देवमनुष्यनागयक्षादीननुशासता प्रत्यवेक्षमाणेन यच्चोक्तं तत्सर्व्वमेकमेव विमुक्तिरसं भवति । एवं रसवशादेकविधम् । कथं धर्मविनयवशाद्विविधं? सर्व्वमेतद्धर्मश्च विनयश्चेति सङ्ख्यां गच्छति । तत्रापि विनयपिटकं विनयः । अवशेषं बुद्धवचनं धर्म्मो नाम एवं धर्म्मविनयवशाद्विविधम् । कथं प्रथममध्यमपश्चिमवशात्त्रिविधम्? । सर्व्वमेव हि प्रथमं बुद्धवचनम् । द्वितीयं बुद्धवचनम् । तृतीयं बुद्धवचनमिति त्रिधा भिन्नम् ।

" अनेकजात्यां संसारे सन्धावेयमनिर्विशम् ।
गृहकारकं गवेषंश्च दुःखा जातिः पुनः पुनः ॥
गृहकारको दृष्टोऽभूःपुनर्गेहं न करिष्यसि ॥ "

इदं प्रथमं बुद्धवचनम् । परिनिर्वाणकाले " हन्तेदानीं भिक्षव आमन्त्रये वो धर्म्मान् संस्कारानप्रमादेन सम्पादयतेति " यदुक्तम् । इदं पश्चिमबुद्धवचनम् । एतयोरुभयोरन्तरा यदुक्तं एतन्मध्यमबुद्धवचनम् एवंप्रथममध्यमपश्चिमवशात्त्रिविधं भवति । कथं पिटकवशात्त्रिविधं? । एतत्सर्व्वं विनयपिटकं सूत्रपिटकम् अभिधर्मपिटकमिति त्रिधा भिन्नम् । तत्र प्रथमायां सङ्गीत्यां सङ्गीतमसङ्गीतञ्च सर्वमेकीकृत्य उभौ प्रतिमोक्षौ

द्वौ विभङ्गौ द्वाविंशतिः स्कन्धाः षोडश परिवारा इति इदं विनयपिटकं नाम । ब्रह्मजालादि चतुस्त्रिंशत्सूत्रसङ्ग्रहो दीर्घनिकायो मूलपर्य्यायसूत्रादिसार्द्धद्विशतसूत्रसङ्ग्रहो मध्यमनिकायः । ओघतरणसूत्रादिषष्ट्यधिकसप्तशतोत्तरसप्तसहस्रसूत्रसङ्ग्रहः संयुक्तनिकायः । चित्तपर्य्यादानसूत्रादिपञ्चाशदधिकपञ्चशतोत्तरनवसहस्रसूत्रसङ्ग्रहः अङ्गोत्तरनिकायः क्षुद्रकपाठः धर्म्मपदः उदानम् इत्युक्तकम् । सूत्रनिपातः । विमानवस्तु । प्रेतवस्तु । स्थविरगाथाः । स्थविरीगाथाः । जातकम् । निर्देशः । प्रतिसंविदा । अपदानम् । बुद्धवंशः । चर्य्यापिटकमित्यादिपञ्चदशधा भिन्नः क्षुद्रनिकायः । इदं सूत्रपिटकं नाम । धर्म्मसङ्गविभङ्गः । धातुकथा । पुद्गलप्रज्ञप्तिः । कथावस्तु । यमकम् प्रस्थानमिति । इदमभिधर्म्मपिटकं नाम । एतानि हि त्रीणि पिटकानि यथाक्रमं आज्ञाव्यवहारपरमार्थदेशना यथापराधमनुलोमयथाधर्म्मशासनानि च भवन्ति । संवरासंवरदृष्टिविनिर्वेष्टननामरूपपरिच्छेदकथाश्चेति ।

अस्मिंस्तु विनयपिटकमाज्ञाकौशलेन भगवता गौतमेन प्रायश आज्ञाया देशितत्वादाज्ञादेशना । तथा सूत्रपिटकं हि व्यवहारकौशलेन भगवता गौतमेन व्यवहारबाहुल्याद्देशितत्वाद्व्यवहारदेशना । अभिधर्म्मपिटकं परमार्थनैपुण्येन भगवता गौतमेन परमार्थप्राचुर्य्याद्देशितत्वात्परमार्थदेशना नामेति वदन्ति । तथा ये ते प्रचुरापराधाः सत्वास्ते यथापराधमत्र शासिता इति यथापराधशासनम् । अनेकाध्याशयानुशयचर्य्याधिमुक्तिकाः सत्वा यथानुलोमात्र शासिता इति यथानुलोमशासनम् । धर्म्मपुञ्जमात्रेप्यहं ममेति संज्ञिनः सत्त्वा यथाधर्म्मशासनमिति वदन्ति । तथा प्रथममध्याचारप्रतिपक्षभूतः संवरासंवरोऽप्यत्र कथित इति संवरासंवरकथा । द्वितीया, द्वाषष्टि-

दृष्टिप्रतिपक्षभूता दृष्टिविनिर्वेठनाऽप्यत्र कथितेति दृष्टिविनिर्वेठनकथा तृतीया, रागादिप्रतिपक्षभूतो नामरूपपरिच्छेदोऽप्यत्र कथित इति नामरूपपरिच्छेदकथेति वदन्ति ।

एतेषु त्रिष्वपि तिस्रः शिक्षाः । त्रीणि प्रहाणानि । चतुर्विधो गम्भीरभावश्च वेदितव्यः । तथा हि विनयपिटके विशेषादधिशीलशिक्षा सूत्रपिटके अधिचित्तशिक्षा च अभिधर्म्मपिटके अधिप्रज्ञाशिक्षा चोक्ता । शीलस्य व्यतिक्रमप्रतिपक्षत्वाद्विनयपिटके व्यतिक्रमप्रहाणञ्च । समाधेः पर्य्युत्थानप्रतिपक्षत्त्वात् सूत्रपिटके पर्य्युत्थानप्रहाणञ्च । प्रज्ञाया अनुश्रयप्रतिपक्षत्वात् अभिधर्म्मपिटके अनुश्रयप्रहाणञ्च दृश्यते । तथा विनयपिटके क्लेशानां तदङ्गप्रहाणम् । सूत्रपिटके क्लेशानां विष्कम्भनप्रहाणम् । अभिधर्म्मपिटके क्लेशानां समुच्छेदप्रहाणञ्च । तथा विनयपिटके दुश्चरितसंक्लेशस्य प्रहाणम् । सूत्रपिटके तृष्णासंक्लेशस्य प्रहाणम् । अभिधर्म्मपिटके दृष्टिसंक्लेशस्य प्रहाणञ्च दृश्यते । अस्मिंस्तु एकैकस्मिन् पिटके धर्म्मगम्भीरभावः । अर्थगम्भीरभावः । देशनागम्भीरभावः । प्रतिवेधगम्भीरभाव इति चतुर्विधो गम्भीरभावः । अस्मिन् धर्म्मो नाम भगवतो गौतमस्य मुखपद्माद्विनिर्गता वाक्पङ्क्तिः । अर्थो नाम तस्यैव वचनस्यार्थः । देशना नाम तस्य धर्म्मस्य मनसा व्यवस्थापितस्य वाग्भिः कथनम् । प्रतिवेधो नाम वचनार्थस्य याथार्थभूतावबोधः । एवं चतुर्विधो गम्भीरभावो वेदितव्यः । कथमङ्गवशान्नवविधम् ? । सुत्तम् । गेयम् । वैयाकरणम् । गाथा । उदानम् । इत्युक्तकम् । जातकम् । अद्भुतधर्म्मम् । वैदल्यामिति । एवं सर्व्वेषां धर्म्माणां नवाङ्गानि वेदितव्यानि । अत्र तु धर्म्मार्थदेशना प्रतिवेधादिषु बहुधा नयो दृश्यते । तदिह विस्तरभिया न दर्शितम् ।

कथं धर्म्मस्कन्धवशाच्चतुरशीतिसहस्रविधम्? एतेषां सर्वेषां धर्म्माणां भगवता गौतमेन द्व्यशीतिधर्म्मस्कन्धसहस्राणि देशितानि । इतरे द्वे धर्म्मस्कन्धसहस्रे श्रावकेभ्य । एवं सर्वे धर्म्माश्चतुरशीतिसहस्रस्कन्धा भवन्ति । तत्राप्येकानुसन्धानं सूत्रमेको धर्म्मस्कन्धः । अनेकानुसन्धानं सूत्रमनेके धर्म्मस्कन्धाः । अनुसन्धिवशादेव धर्म्मस्कन्धगणना भवन्ति । गाथाबन्धनेषु प्रश्नपृच्छनमेको धर्म्मस्कन्धः । विसर्ज्जनमेको धर्म्मस्कन्धः । अभिधर्म्मे त्रिकभाजनमेको धर्म्मस्कन्धः । द्विकभाजनमेकः । चित्तवारभाजनमेकः । विनये वस्त्वेकः । मातृकैकः । पदभाजनीयमेकः । अन्तरापत्तिरेकः । अनापत्तिरेकः त्रिकपरिच्छेद एकः । एवमेकैकभाग एकैकधर्म्मस्कन्ध इति ज्ञातव्यः । एवं धर्म्मस्कन्धवशाच्चतुरशीतिसहस्रविधं भवति ।

एवं सकलं बुद्धवचनं सङ्गायद्भिरायुष्मद्भिर्महाकाश्यपप्रमुखैः क्षीणाश्रवगणैरयं धर्म्मः, अयं विनयः, इदं प्रथमबुद्धवचनम्, इदं मध्यमबुद्धवचनम् । इदं पश्चिमं बुद्धवचनम्, इदं विनयपिटकम्, इदं सूत्रपिटकम्, इदमपि धर्म्मपिटकम्, अयं दीर्घनिकायः, अयं मध्यमनिकायः, अयं संयुक्तनिकायः, अयमङ्गोत्तरनिकायः, अयं क्षुद्रकनिकायः, इमानि सूत्रादीनि नवाङ्गानि, इमानि चतुरशीतिसहस्रधर्म्मस्कन्धसहस्राणीति इमं प्रभेदं व्यवस्थाप्य च सप्तभिर्मासैः सङ्गीतम् । सङ्गीतिपर्य्यवसाने आयुष्मता महाकाश्यपेन भगवतो गौतमस्य शासनं पञ्चवर्षसहस्रप्रमाणं कालं प्रवर्तनसमर्थं कृतमिति सञ्जातप्रमोदसाधुनादा इवेयं महोर्व्वी उदकपर्य्यन्तं कृत्वा प्राकम्पत । अनेकानि चाश्चर्य्याद्भुतानि प्रादुर्बभूवुः ।

इति श्रीशीलस्कन्धस्थविरस्य कृतौ सद्धर्ममकरन्दे
प्रथमसंङ्गीतिपरिदीपनो नाम
एकविंशोऽध्यायः ।

दृष्टिप्रतिपक्षभूता दृष्टिविनिवेष्टनाऽप्यत्र कथितेति दृष्टिविनिवेष्टनकथा तृतीया, रागादिप्रतिपक्षभूतो नामरूपपरिच्छेदोऽप्यत्र कथित इति नामरूपपरिच्छेदकथेति वदन्ति ।

एतेषु त्रिष्वपि तिस्रः शिक्षाः । त्रीणि प्रहाणानि । चतुर्विधो गम्भीरभावश्च वेदितव्यः । तथा हि विनयपिटके विशेषादधिशीलशिक्षा सूत्रपिटके अधिचित्तशिक्षा च अभिधर्म्मपिटके अधिप्रज्ञाशिक्षा चोक्ता । शीलस्य व्यतिक्रमप्रतिपक्षत्वाद्विनयपिटके व्यतिक्रमप्रहाणञ्च । समाधेः पर्य्युत्थानप्रतिपक्षत्वात् सूत्रपिटके पर्य्युत्थानप्रहाणञ्च । प्रज्ञाया अनुशयप्रतिपक्षत्वात् अभिधर्म्मपिटके अनुशयप्रहाणञ्च दृश्यते । तथा विनयपिटके क्लेशानां तदङ्गप्रहाणम् । सूत्रपिटके क्लेशानां विष्कम्भनप्रहाणम् । अभिधर्म्मपिटके क्लेशानां समुच्छेदप्रहाणञ्च । तथा विनयपिटके दुश्चरितसंक्लेशस्य प्रहाणम् । सूत्रपिटके तृष्णासंक्लेशस्य प्रहाणम् । अभिधर्म्मपिटके दृष्टिसंक्लेशस्य प्रहाणञ्च दृश्यते । अस्मिंस्तु एकैकस्मिन् पिटके धर्म्मगम्भीरभावः । अर्थगम्भीरभावः । देशनागम्भीरभावः । प्रतिवेधगम्भीरभाव इति चतुर्विधो गम्भीरभावः । अस्मिन् धर्म्मो नाम भगवतो गौतमस्य मुखपद्माद्विनिर्गता वाक्पङ्क्तिः । अर्थो नाम तस्यैव वचनस्यार्थः । देशना नाम तस्य धर्म्मस्य मनसा व्यवस्थापितस्य वाग्भिः कथनम् । प्रतिवेधो नाम वचनार्थस्य याथार्थ्यभूतावबोधः । एवं चतुर्विधो गम्भीरभावो वेदितव्यः । कथमङ्गनवशासनविधम् ? । सुत्तम् । गेय्यम् । वेय्याकरणम् । गाथा । उदानम् । इत्युत्तकम् । जातकम् । अब्भुतधर्म्मम् । वेदल्यामिति । एवं सर्व्वेषां धर्म्माणां नवाङ्गानि वेदितव्यानि । अत्र तु धर्म्मोपदेशना प्रतिवेधादिषु बहुधा नयो दृश्यते । तदिह विस्तरभिया न दर्शितम् ।

कथं धर्म्मस्कन्धवशाच्चतुरशीतिसहस्रविधम्? एतेषां सर्वेषां धर्म्माणां भगवता गौतमेन द्व्यशीतिधर्म्मस्कन्धसहस्राणि देशितानि । इतरे द्वे धर्म्मस्कन्धसहस्रे श्रावकैश्च । एवं सर्वे धर्म्माश्चतुरशीतिसहस्रस्कन्धा भवन्ति । तत्राप्येकानुसन्धानं सूत्रमेको धर्म्मस्कन्धः । अनेकानुसन्धानं सूत्रमनेके धर्म्मस्कन्धाः । अनुसन्धिवशादेव धर्म्मस्कन्धगणना भवन्ति । गाथाबन्धनेषु प्रश्नपृच्छनमेको धर्म्मस्कन्धः । विसर्ज्जनमेको धर्म्मस्कन्धः। अभिधर्म्मे त्रिकभाजनमेको धर्म्मस्कन्धः । द्विकभाजनमेकः । चित्तवारभाजनमेकः । विनये वस्त्वेकः । मातृकैकः । पदभाजनीयमेकः । अन्तरापत्तिरेकः । अनापत्तिरेकः त्रिकपरिच्छेद एकः । एवमेवैकभाग एकैकधर्म्मस्कन्ध इति ज्ञातव्यः । एवं धर्म्मस्कन्धवशाच्चतुरशीतिसहस्रविधं भवति ।

एवं सकलं बुद्धवचनं सङ्गायद्भिरायुष्मद्भिर्महाकाश्यपप्रमुखैः क्षिणाश्रवगणैरयं धर्म्मः, अयं विनयः, इदं प्रथमबुद्धवचनम्, इदं मध्यमबुद्धवचनम् । इदं पश्चिमं बुद्धवचनम्, इदं विनयपिटकम्, इदं सूत्रपिटकम्, इदमपि धर्म्मपिटकम्, अयं दीर्घनिकायः, अयं मध्यमानिकायः, अयं संयुक्तनिकायः, अयमङ्गोत्तरानिकायः, अयं क्षुद्रकनिकायः, इमानि सूत्रादीनि नवाङ्गानि, इमानि चतुरशीतिसहस्रधर्म्मस्कन्धसहस्राणीति इमं प्रभेदं व्यवस्थाप्य च सप्तभिर्मासैः सङ्गीतम् । सङ्गीतिपर्य्यवसाने आयुष्मता महाकाश्यपेन भगवतो गौतमस्य शासनं पञ्चवर्षसहस्रमप्रमाणं कालं प्रवर्तनसमर्थं कृतामिति सञ्जातप्रमोदसाधुनादा इवेयं महोर्व्वी उदकपर्य्यन्तं कृत्वा प्राकम्पत । अनेकानि चाश्चर्य्याद्भुतानि प्रादुर्बभूवुः ।

इति श्रीशीलस्कन्धस्थविरस्य कृतौ सद्धर्म्ममकरन्दे
प्रथमसंङ्गीतिपरिदीपनो नाम
एकविंशोऽध्यायः ।

# अथ द्वाविंशोऽध्यायः ।

एवं महाकाश्यपादयः पञ्चशतक्षीणाश्रवा भगवतो गौतमस्य धर्मञ्च विनयञ्च सङ्गाय तत्र तत्र च द्योतयित्वा जीवितपर्य्यवसाने क्षीणस्नेहाः प्रदीपा इव परिनिर्वृताः । अथ गच्छति काले वर्षशतपरिनिर्वृते भगवति गौतमे वैशालीया लिच्छविपुत्रा भिक्षवो वैशाल्यां दशवस्तूनि दीपयामासुः । तद्यथा अर्हति शार्ङ्गियलवणकल्पः । अर्हति द्व्यङ्गुलकल्पः । अर्हति ग्रामान्तरकल्पः । अर्हत्यावासकल्पः । अर्हत्यनुमतिकल्पः । अर्हत्याचीर्णकल्पः । अर्हत्यमथितकल्पः । अर्हति जलोगं पातुम् । अर्हत्यदशायं निषदनम् । अर्हति सुवर्णरजतमिति । तेषां भिक्षूणां सुसुनागसुतः कालाशोको नाम राजा पक्ष्योऽभूत् । तदा क्षीणाश्रव आयुष्मान् यशो नाम काकण्डपुत्रो वज्जीराष्ट्रे ग्रामनिगमादिषु विचरन् वैशाल्यां किल वज्जीपुत्रा भिक्षवो दशवस्तूनि दीपयन्तीति शुश्राव । स च यशः काकण्डपुत्रस्तच्छ्रुत्वा एवं चिन्तयामास । यदहं भगवतो गौतमस्य शासनविपत्तिं श्रुत्वा अल्पोत्साहो भवेयम् । तत्तु न प्रतिरूपम् । तस्मादहमधर्म्मवादिनो निगृह्य धर्म्मं दीपयामीति विचिन्तयन्नेव यत्र वैशाली तत्रागमत् । आयुष्मान् यशः काकण्ड-पुत्रस्तस्यां वैशाल्यां महावने कूटागारशालायां व्यहार्षीत ।

तस्मिंस्तु समये वैशालीया वज्जीपुत्रा भिक्षवस्तदाहन्युपोषिते कंस-पातिमुदकेनापूर्य मध्ये भिक्षुसङ्घानां स्थापयित्वा वैशालीयेभ्य उपास-केभ्य एवं वदन्ति । उपासकाः! यूयं दत्त सङ्घेभ्यः कार्षापणमपि । अर्द्धमपि । पादमपि । माषकमपि । भविष्यति सङ्घानां परिष्कारैः कार्यमिति । तच्छासनमलं शोधयितुमायुष्मान् यशः काकण्डपुत्रः

द्वादशशतसहस्राणि भिक्षूणां संन्यपातयत् । तेषां भिक्षूणां मध्ये आयुष्मता रेवतेन पृष्ट आयुष्मान् सर्व्वकामिर्विनयं विसृज्य तानि दश वस्तूनि सुविनिराचिनोत् । तदधिकरणमपि व्युपाशमयत् । अथ ते अपि यशप्रमुखा भिक्षवस्त्रिपिटकधरान् प्राप्तप्रतिसंविदः सप्तशतक्षीणाश्रवान् समुच्चित्य वैशाल्यां वालुकारामे कृते विचित्रधर्म्ममण्डपे निषेदुः। तेऽपि यशप्रमुखाः क्षीणाश्रवाः पुरा महाकाश्यपप्रमुखैः पञ्चक्षीणाश्रवशतैः सङ्गीतकर्म्मणैव धर्म्मञ्च विनयञ्च संजगुः । सर्व्वं शासनमलं परिशोध्य पुनः पिटकवशेन च निकायवशेन च अङ्गवशेन च धर्म्मस्कन्धवशेन च सर्व्वं धर्म्मञ्च विनयञ्च सङ्गाय अष्टभिर्मासैरिमां सङ्गीतिं निष्ठापयामासुः ।

तेऽपि क्षीणाश्रवा एवं सङ्गीतिं परिसमाप्य अनागतेऽध्वनि शासनस्य एवं रूपमर्बुदमुत्पत्स्यत इति व्यलोकयन् । ददृशुश्च ते शासनार्व्बुदोत्पादम् । अस्माद्वर्षशतादुपरि अष्टादशे वर्षे पाटलिपुत्रनामके नगरे धर्म्माशोको नाम नृपः समुत्पद्य सकलेऽस्मिन् जम्बुद्वीपे आज्ञाचक्रं प्रचारयिष्यति । स च राजा सम्बुद्धशासने प्रसन्नः बहून् लाभसत्कारांश्च प्रवर्त्तयिष्यते । ततश्च तीर्थिका लाभसत्कारान् प्रार्थयमानाः शासने प्रव्रज्य स्वां स्वां दृष्टिं परिदीपयिष्यन्तीति ।

अथ तेषां भिक्षूणामेतदभूत् । किन्तु वयमेतस्मिन्नुत्पन्ने सम्मुखा भविष्यामो न वा भविष्याम इति। अथ ते तेषामेव सर्व्वेषामसम्मुखत्वाभावं ज्ञात्वा को न्वेतत् व्युपशमयितुमर्हो भविष्यतीति मनुष्यदेवलोकौ समग्रौ विलोकयामासुः । तत्र किञ्चिन्न दृष्ट्वा ब्रह्मलोके अल्पायुष्कमुपरि ब्रह्मविमान उत्पत्स्य भावितवर्त्मानं तिष्यं नाम ब्रह्माणं ददृशुः । तमवलोक्य तेषां भिक्षूणामेतदभूत् । यदि वयमेतस्य ब्रह्मणो मनुष्यलोक

उत्पादयिष्यामो यत्नं कुर्म्मः । अद्यैव मौद्गल्येर्नाम ब्राह्मणस्य गृहे प्रतिसन्धिं ग्रहीष्यतीति । ततश्च स मन्त्रैः प्रलोभितो गृहान्निष्क्रम्य प्रव्रजिष्यति । स तु प्रव्रज्य सकलं बुद्धवचनमुद्गृह्य समधिगतप्रतिसंवित्तीर्थकमर्द्दनं करिष्यति । तदधिकरणमपि सुविनिश्चित्य शासनमुद्योतयिष्यतीति ।

अथ तेऽपि भिक्षवो ब्रह्मलोकं गत्वा तिष्याय ब्रह्मणे एतदूचुः । हे ! ब्रह्मन् ! अतो वर्षशतस्योपरि अष्टादशे वर्षे बुद्धशासने महदर्बुदं जनिष्यते । वयं सर्व्वे देवमनुष्यलोकयोर्विलोकमाना बुद्धशासनस्य मह्यमहं कर्त्तुं समर्थं विचिन्त्य दृष्ट्वा ब्रह्मलोकं विलोक्य भवन्तमेवापश्याम । भद्र ! त्वं मनुष्यलोके समुत्पद्य शास्तृशासनं समुद्योतयितुमस्मभ्यं प्रतिज्ञां देहीति । एवमुक्ते तु स ब्रह्मा अहं हि भगवतो गौतमस्य शासने उत्पन्नं मलं शोधयितुं समर्थो भविष्यामीति प्रहृष्टः प्रमुदितः सन् साधु साध्विति प्रतिज्ञां प्रददौ । ते क्षीणास्रवा भिक्षवो ब्रह्मलोके तत् कार्य्यं समाप्य प्रत्यागमन् । तदा आयुष्मान् सिग्गवश्च आयुष्मांश्चण्डवज्जी च द्वौ नवौ त्रिपिटकधरौ प्राप्तप्रतिसंविदौ क्षीणास्रवौ बभूवतुः । तौ द्वौ तस्मिन् कार्ये न सम्प्रापतुः । अथ ते महास्थविरा आयुष्मन्तौ ! युवामस्माकमस्मिन् अधिकरणे न सहायौ जातौ । तस्माद्युवामिदं दण्डकर्म्म भवतु इति । किं नाम दण्डकर्म्म ? तिष्यो नाम ब्रह्मा मौद्गल्येब्राह्मणस्य गृहे प्रतिसन्धिं ग्रहीष्यति । तथापि शिशुं युवयोरेको निर्हृत्य प्रव्राजयतु । अतः सर्व्वं बुद्धवचनमुद्ग्राहयत्वित्युक्त्वा तेऽपि सर्व्वे यावदन्तक्षीणास्रवाः परिनिर्वृताः ।

इति श्रीनीलकण्ठस्थविरस्य कृतौ सद्धर्ममकरन्दे
द्वितीयसंगीतिपरिदीपनो नाम
द्वाविंशोऽध्यायः ।

# अथ त्रयोविंशोऽध्यायः

अथ स तिष्यो नाम ब्रह्मा ब्रह्मलोकाच्चयोतित्वा मौद्गले-ब्राह्मणस्य भार्य्यायाः कुक्षौ प्रतिसन्धिं जग्राह। आयुष्मान् सिग्रवोपि तस्य प्रतिसन्धिग्रहणात् प्रभृति सप्त संवत्सराणि मौद्गलेब्राह्मणस्य गृहं भिक्षार्थं प्रविवेश। एकमपि दिवसमुल्कमात्रां यवागूं वा दर्व्वीमात्रं भक्तं वा न लेभे। सप्तानां वर्षाणा-मतिक्रमे नास्ति भवन्! सम्पादितामिति वाङ्मात्रमेव लेभे। तस्मिन्नेव दिवसे मौद्गलिब्राह्मणो बहिः किञ्चित् कार्य्यं कृत्वा आगच्छन् वर्त्मनि तं क्षीणाश्रव समवलोक्य भोः! प्रव्रजित! त्वमस्माकं गृहमागच्छ। आमिति जगाम। किञ्चित्त्वं अलभथाः? आम् अलभे इति। स तु विप्रो गृहं गत्वा यूयं तस्मै प्रव्रजिताय किञ्चिद-यच्छत? इति पप्रच्छ। तेऽपि न वयं अयच्छामेति प्राहुः स्म। परेद्युः स द्विजो गृहद्वार्य्येव निषद्य एवं चिन्तयामास। अद्य श्रमणं मृषावादाग्निमहिष्यामीति। तस्मिन्नहनि प्रातः स क्षीणा-श्रवस्तस्य ब्राह्मणस्य गृहद्वारं समायातः। तद्दृष्ट्वा स द्विज एवमाह स्म। भवन्! त्वमतिक्रान्तेऽपि दिवसे अस्मद्गृहे किञ्चिन्न लब्ध्वैवा-लभ इति उक्तवानसि। अर्हति भवादृशां मृषावाद? इति। अथ स क्षीणाश्रवः अब्रवीत्। ब्राह्मण! अहं सप्त वर्षाणि तव गेहे नास्ति सम्पादितामिति वाङ्मात्रमप्यलब्ध्वा अतिक्रान्ते दिवसे नास्ति सम्पादितामिति वचनमात्रमलभे। तं प्रतिसन्थारमुपादायालभे इत्यवदम्। अथ ब्राह्मणोऽचिन्तयत्। इमे श्रमणाः प्रतिसन्थारमात्रमपि लब्ध्वा-लभामहीति प्रशंसन्ति। किञ्चित् खाद्यं वा भोज्यं वा लब्ध्वा कस्मान्न प्रशंसेयुरिति प्रससाद।

जानाति कोन्यो ज्ञास्यतीति । एवञ्चोक्त्वा तं स्थविरमपृच्छत् । भवन्! त्वं मन्त्रं जानासीति । मानव! मां पृच्छ । पृष्ट्वा च ज्ञातुं शक्नोपि । अथ मानवः सनिघण्टुकल्पादिषु साक्षरप्रभेदेषु इतिहासपञ्चमकेषु त्रिषु वेदेषु च यानि यानि गूढानि स्वयं वा आचार्येण वाऽनधीतानि । तानि स्थविरमपृच्छन् । सोपि स्थविरः प्रकृत्या त्रिवेदेष्वपि पारगः । प्रतिसंविदां कोटिप्राप्तः । तस्मान्नास्ति तस्य तेषां प्रश्नानां विसर्जने दुष्करता । स च सत्वरमेव तान् सर्व्वान् विसर्जयामास । पुनर्मानवाय एवमाह स्म । हे! मानव! त्वया मां बहवः पृष्टाः । अहमपीदानीं त्वामेकं पृच्छामि । त्वं व्याकरिष्यसि मह्यमिति । आम् । भो! प्रव्रजित! मां पृच्छ । अहं व्याकरिष्यामीति । स च स्थविरवरश्चित्तयमके इमं प्रश्नमपृच्छत् । " यस्य हि चित्तमुत्पाद्यते न निरुध्यते । तस्य चित्तं निरोत्स्यते नोत्पत्स्यते । यस्य चित्तं निरोत्स्यते नोत्पत्स्यते । तस्य चित्तमुत्पद्यते न निरुध्यते इति " । स तु मानव ऊर्द्ध्वं वा अधो वा आहर्तुमशक्नुवन् भो! प्रव्रजित! किं नामेदमित्यपृच्छत् ।

स तु महास्थविर आह स्म । मानव! बुद्धमन्त्रो नामायमिति । भवन्! मह्यमिदं दातुं शक्यते? । मानव! अस्माभिर्गृहीतां प्रव्रज्यां गृह्णते दातुं शक्यते । ततश्च मानवो मातापितरावुपसङ्क्रम्याब्रवीत् । पितरौ! अयं श्रमणो बुद्धमन्त्रं जानाति । तस्य सकाशे अप्रव्रजिताय न ददाति । अहं तस्य सन्निधौ प्रव्रज्य मन्त्रमुद्ग्रहीष्यामीति । अथ तौ मातापितरावस्माकं पुत्रः प्रव्रज्यापि मन्त्रानुद्गृह्णातु । स मन्त्रानुद्गृह्य पुनरागमिष्यतीति मन्यमानौ गृहाण पुत्र! मन्त्रानिति समादिदिशतुः । स च सिग्गवः स्थविरस्तं मानवं गृहीत्वा प्रव्राजयितुमारेभे । प्रथमं द्वात्रिंशाकारप्रतिसंयुक्तकर्म्मस्थानमादिदेश । स तस्मिन् परिकर्म्म कुर्व्वन्

न चिरादेव श्रोतापत्तिफले प्रत्यष्ठायत् । ततश्च सिग्रवः स्थविरो व्यचिन्तयत् । अयं श्रमणोद्देशः श्रोतापत्तिफले प्रतिष्ठितः । नैवेदानीमेष शासनान्निवर्त्तयितुं शक्यः । यद्यहमस्मै कर्म्मस्थानं वर्द्धयित्वा कथयेयम् । एष अर्हत्त्वं प्राप्नोति । स चाऽर्हत्त्वे प्राप्ते बुद्धवचनं समुद्ग्रहीतुमुद्योगं न करोति । एष काल इममायुष्मतश्चण्डवर्ज्जिनः सकाशं प्रेषयितुमिति ।

अथ स सिग्रवस्थविरस्तस्मै एवमाह स्म । श्रमणोद्देश! त्वमिहागच्छ । त्वं चण्डवर्ज्जिनः स्थविरस्य सकाशं गत्वा बुद्धवचनं समुद्गृहाण । मद्वचनेन स्थविरस्य कुशलं च पृच्छ । एवञ्च वद । उपाध्यायो मां भवन्! तव सकाशं प्राहिणोत् । को नाम तवोपाध्याय इति उक्ते । भवन्! सिग्रवो नाम स्थविर इति वद । अहं को नामेत्युक्ते ममोपाध्यायो भवन्! युष्माकं नाम जानातीति । एवञ्चोक्ते तिष्यो नाम श्रमणोद्देशः स्थविरं तं समभिवन्द्य प्रदक्षिणीकृत्य अनुक्रमेण चण्डवर्ज्जिनः स्थविरस्य सन्निधिं प्रायात् । गत्वा चाभिवन्द्य एकमन्तं तस्थौ । अथायुष्मांश्चण्डवर्ज्जी तं श्रमणोद्देशमपृच्छत् । कुतस्त्वमागतोऽसि । उपाध्यायो मां भवन्! युष्माकं सकाशं प्राहिणोत् । को नाम तवोऽपाध्याय इति । सिग्रवो नाम स्थविरो भवन्! । अहं को नामेति । ममोऽपाध्यायस्तव नाम जानातीत्याह स्म । श्रमणोद्देश! इदानीं पात्रचीवरं प्रतिशामयेति । साधु भवन्! इति स श्रमणोद्देशः पात्रचीवरं प्रतिशाम्य परेद्यवि परिवेणं संमृज्योदकदन्तकाष्ठं चोपास्थापयत् । स च चण्डवर्जी स्थविरः सम्मार्जितस्थानं पुनः सममार्ज्जयत् । ते चोदकदन्तपावने त्यक्त्वा अपरे उदकदन्तपावने चाहारयत् । एवं सप्ताहं कृत्वा सप्तमेऽह्न्यपृच्छत् । स श्रमणोद्देशः पुनरपि पूर्वकथितक्रमेणैवाकथयत् ।

स चाऽयुष्माँश्चण्डवर्मा एष बतायं ब्रह्मेति ज्ञात्वा कस्मात्त्वमिहागतोऽसि? इत्यपृच्छत्। बुद्धवचनसमुद्ग्रहणार्थं भवन्! इति। उद्गृहाण श्रमणोद्देश! इत्यवदच्च। स तु द्वितीयदिवसात् प्रभृति बुद्धवचनं समुद्ग्रहीतुमारेभे। स च तिष्यः श्रमणोद्देश एव सन् विनयपिटकमवहाय सर्व्वं बुद्धवचनं समुदग्रहीत् सार्द्धमर्थकथाभिः। उपसम्पन्नकाले अवर्षिकः सन् त्रिपिटकधरोऽभूत्। तस्य द्वावाचार्य्योपाध्यायौ आयुष्मति मौद्गलिपुत्रतिष्ये सकलं बुद्धवचनं प्रतिष्ठाप्य आयुःपर्य्यवसाने परिनिर्वव्रतुः। स तु मौद्गलिपुत्रतिष्योपि अपरस्मिन् काले कर्म्मस्थानं वर्द्धयित्वा सकलक्लेशान् संहृत्यार्हत्वं सम्प्राप्तवान्। बहूनां भिक्षूणाञ्च धर्म्मविनयौ अवाचयत्। तदा राज्ञो बिन्दुसारस्य एकशतपुत्रा अभवन्। अशोको नाम कुमारः स्वकनीयांसं सहोदरं तिष्यकुमारं महाय शेषांश्च सर्व्वान् कुमारान् घातयामास। चत्वारि संवत्सराणि अनभिषिक्त एव राज्यमन्वशात्। चतुर्णां वर्षाणामतिक्रमेण भगवतो गौतमस्य परिनिर्वाणाद्द्वयोर्वर्षशतयोरुपर्य्यष्टादशे वर्षे सकलेऽपि जम्बुद्वीपे अनन्तया राजश्र्या एकराज्याभिषेकं प्राप्तवान्। स च राजा अभिषेकं प्राप्य त्रीण्येव संवत्सराणि बाह्यान् पाषण्डानेवपर्य्यग्रहीत्। चतुर्थे तु संवत्सरे सम्बुद्धशासने प्रससाद।

तस्य च राज्ञः पिता बिन्दुसारो नाम राजा ब्रह्मभक्तिकोऽभूत्। स हि राजा ब्राह्मणजातीयानां पाषण्डानाञ्च पण्डरङ्गपरिव्राजकादीनां षष्टिसहस्रप्रमाणानां निरन्तरं भोजनं प्रस्थापयामास। राजा अशोकः पित्रा प्रवर्तितं तद्दानं स्वेऽन्तःपुरे तथैव प्रावर्त्तयत्। अथैकदा राजा अशोकः सिंहासनारूढः सन् उपशमपरिहीनेन दुराचारेण भुञ्जनान् अशान्तेन्द्रियान् अविनीतेर्य्यापथांस्तान् परिव्राजकादीन् ददर्श। दृष्ट्वा च एवमचि-

स चाऽयुष्माँश्चण्डवर्जी एष बतायं ब्रह्मेति ज्ञात्वा कस्मात्त्वमिहागतोऽसि? इत्यपृच्छत्। बुद्धवचनसमुद्ग्रहणार्थे भवन्! इति। उद्गृहाण श्रमणोद्देश! इत्यवदच्च । स तु द्वितीयदिवसात् प्रभृति बुद्धवचनं समुद्ग्रहीतुमारेभे । स च तिष्यः श्रमणोद्देश एव सन् विनयपिटकमवहाय सर्व्वं बुद्धवचनं समुदग्रहीत् सार्द्धमर्थकथाभिः। उपसम्पन्नकाले अवार्षिकः सन् त्रिपिटकधरोऽभूत्। तस्य द्वावाचार्य्योपाध्यायौ आयुष्मति मौद्गलिपुत्रतिष्ये सकलं बुद्धवचनं प्रतिष्ठाप्य आयुःपर्य्यवसाने परिनिर्ववतुः। स तु मौद्गलिपुत्रतिष्योपि अपरस्मिन् काले कर्म्मस्थानं वर्द्धयित्वा सकलक्लेशान् संहृत्यार्हत्वं सम्प्राप्तवान् । बहूनां भिक्षूणाञ्च धर्म्मविनयौ अवाचयत् । तदा राज्ञो बिन्दुसारस्य एकशतपुत्रा अभवन् । अशोको नाम कुमारः स्वकनीयांसं सहोदरं तिष्यकुमारं महाय शेषांश्च सर्व्वान् कुमारान् घातयामास । चत्वारि संवत्सराणि अनाभिषिक्त एव राज्यमन्वशात् । चतुर्णां वर्षाणामतिक्रमेण भगवतो गौतमस्य परिनिर्वाणाद्द्वयोर्वर्षशतयोरुपर्य्यष्टादशे वर्षे सकलेऽपि जम्बुद्वीपे अनन्तया राजश्र्या एकराज्याभिषेकं प्राप्तवान् । स च राजा अभिषेकं प्राप्य त्रीण्येव संवत्सराणि बाह्यान् पाषण्डानेव पर्यग्रहीत् । चतुर्थे तु संवत्सरे सम्बुद्धशासने प्रससाद ।

तस्य च राज्ञः पिता बिन्दुसारो नाम राजा ब्रह्मभक्तिकोऽभूत् । स हि राजा ब्राह्मणजातीयानां पाषण्डानाञ्च पण्डरङ्गपरिव्राजकादीनां षष्टिसहस्रप्रमाणानां निरन्तरं भोजनं प्रस्थापयामास । राजा अशोकः पित्रा प्रवर्तितं तद्दानं स्वेऽन्तःपुरे तथैव प्रावर्त्तयत् । अथैकदा राजा अशोकः सिंहासनारूढः सन् उपशमपरिहीनेन दुराचारेण भुञ्जनान् अशान्तेन्द्रियान् अविनीतेर्य्यापथांस्तान् परिव्राजकादीन् ददर्श । दृष्ट्वा च एवमाचि-

अथ राजा अशोकः सञ्जातप्रेमबहुमान एतमायुष्मन्तं न्यग्रोधमामन्त्रयेतेति सचिवान् प्रैरयत् । तेऽतीव चिरायन्तीति पुनरपि द्वौ त्रींस्त्वरितमागच्छन्त्विति प्रैषयत् । क्षीणास्रवो न्यग्रोधः स्वप्रकृत्या गत्वा एवाऽगमत् । अथ राजा तत्र प्रतिरूपमासनं ज्ञात्वा निषीदेत्याह स । स इतश्चेतो विलोक्य नास्तीदानीमत्र अपरो भिक्षुरिति मत्वा समुच्छ्रितश्वेतच्छत्रं राजपर्यङ्कमुपसङ्क्रम्य पात्रग्रहणार्थमाकृतिं राज्ञोऽदर्शयत् पर्यङ्कसमीपमुपगच्छन्त तं दृष्ट्वा राजा एवमचिन्तयत् । अद्यैवेदानीमयं श्रमणोद्देशः अस्य गृहस्य स्वामी भविष्यतीति ।स च श्रमणोद्देशो राज्ञो हस्ते पात्रं दत्वा पर्यङ्कमभिरुह्य निषसाद ।

ततश्च राजा अशोकः स्वकृते सम्पादिताः समग्राः खाद्यभोज्यभक्तविकृतीरुपानमयत् । स तु न्यग्रोधः श्रमणोद्देशः स्वयापनमात्रमेव खाद्यभोज्यानि सम्प्रत्यैच्छत् । अथ तस्य भोजनकृत्यपर्यवसाने राजा एवमपृच्छत् । भवन्! शास्त्रा युष्माकं दत्तमववादं जानासीति । महानृप! जानाम्येकां देशनामिति । भवन्! वत्स! मह्यमपि तां कथयेति । साधु महाराज! कथयामीति । राज्ञः अनुरूपं धर्मपदे अप्रमादवर्गमनुमोदनार्थं कथयामास । अथ राजा अशोकस्तु " अप्रमादोऽमृतपदं प्रमादो मृत्योः पदमिति " श्रुत्वैव विदितं मया वत्स! पर्यवसापयेत्याऽह स । अनुमोदनापर्यवसाने स राजा वत्स! ते अष्टौ धुर्यभक्तानि ददामीत्यऽब्रवीत् ततः स न्यग्रोधः श्रमणोद्देश आह स । नृपवर! अहमेतान्युपाध्यायाय ददामीति । वत्स! कोऽयमुपाध्यायो नामेति? । यो महाराज दोषादोषान् दृष्ट्वा चोदयिता सारयिता स उपाध्याय इति । वत्स! अपराण्यष्ट ते ददामीति । महाराज! एतान्याचार्याय ददामीति । वत्स! कोऽयमाचार्यो नामेति । यस्तु महानृप! अस्मिन्सम्बुद्धशासने शिक्षणीयेषु

धर्म्मेषु प्रतिष्ठापयिता स आचार्य्य इति । साधु वत्स! अपराण्यपि ते अष्ट ददामीति । महाराज! एतानि भिक्षुसङ्घेभ्यो ददामीति । वत्स! कोऽयं भिक्षुसङ्घो नामेति । नृपश्रेष्ठ! यं निश्रित्याऽस्माकमाचार्य्योपाध्यायानाञ्च मम च प्रव्रज्योपसम्पदे अभवतां स भिक्षुसङ्घ इति । राजा प्रायशः प्रहृष्टचित्त आहस्म । वत्स! अपराण्यपि ते अष्ट ददामीति । स न्यग्रोधः श्रमणोद्देशः साध्विति सम्प्रत्यैच्छत् ।

अथ परेद्युः स न्यग्रोधः श्रमणोद्देशो द्वात्रिंशद्भिक्षून् गृहीत्वा अन्तःपुरं प्रविश्य राजमन्दिरे भोजनकृत्यं चकार । राजा अशोकः अपरेऽपि द्वात्रिंशद्भिक्षवो युष्माभिः सह श्वो भिक्षां गृह्णन्तु इति न्यवेदयत् । एतेनैवोपायेन दिवसे दिवसे वर्द्धयन् राजनिवेशने षष्टिसहस्राणां ब्राह्मणपरिव्राजकानां भक्तमुपच्छिद्य षष्टिसहस्राणां भिक्षूणां नित्यभक्तं प्रतिष्ठापयामास । अथ स न्यग्रोधः स्थविरः आत्मनि सञ्जातेनैव प्रसादेन राजानं सपरिच्छदं त्रिषु शरणेषु पञ्चसु शीलेषु च प्रतिष्ठाप्य भगवतो गौतमस्य शासने पार्थग्जनिकेन प्रसादेन निश्चलप्रसादिनं च कृत्वा प्रत्यास्थापयत् ।

पुनः स च अशोको धर्म्मराजः स्वनाम्नैव अशोकारामं नाम महाविहारं कारयित्वा षष्टिसहस्राणां भिक्षूणां निरन्तरभक्तं प्रत्यष्ठापयत् । स राजा एकदिवसमशोकारामे महादानं दत्वा षष्टिसहस्राणां भिक्षूणां मध्ये निषद्य सङ्घं चतुर्भिः प्रत्ययैः प्रवार्य्य इमं प्रश्नमपृच्छत् । भगवता गौतमेन देशिता धर्म्मा नाम कियन्तो भवन्तीति । महाराज! अङ्गवशेन नवाङ्गानि । स्कन्धवशेन चतुरशीतिधर्म्मस्कन्धसहस्राणीत्याऽऽहुः स । स राजा धर्म्मे प्रसन्न एकैकं धर्म्मस्कन्धमेकैकेन विहारेण समभ्यर्चयि-

महा यावद्ब्रह्मलोकान्महान्तं रत्नयराशीं दद्यात् स तु बुद्धशासने दायादसङ्ख्यां न गच्छति। भवन्! कथं बुद्धशासने दायादो भवतीति?। महाराज! यः कश्चिद्धनी वा दारिद्रो वा औरसं पुत्रं बुद्धशासने प्रव्राजयेत् महाराज! अयं दायादः शासनस्येति। एवञ्चोक्ते राजा अशोकः एवमचिन्तयत्। अहं हि एवंरूपं परित्यागं कृत्यापि नैव शासनस्य दायादभावं प्राप्तम्। ॥ तु शासने दायादभावं प्रार्थयन् इतश्चेतश्च विलोकयामास। ददर्श च स राजा अविदूरे स्थितं महेन्द्रं नाम कुमारम्। दृष्ट्वा च राज्ञः अशोकस्य एतद्भूत्। किन्वहं तिष्यकुमारस्य प्रव्रजितकालात् प्रभृति इमं कुमारं यौवराज्ये प्रतिष्ठापयितुकामोऽस्मि। अपि च यौवराज्यादपि प्रव्रज्यैव श्रेयसी। तदनन्तरं राजा अशोको महेन्द्रं कुमारमामन्त्र्य एवमाह स्म। वत्स! एवं प्रव्रजितुं शक्ष्यसीति। महेन्द्रः किल कुमारस्तिष्यकुमारस्य प्रव्रजितकालात्प्रभृति प्रकृत्या प्रव्रज्यायामभिरत. राज्ञः अशोकस्य वचनं समाकर्ण्य अतीव प्रमुदितोऽब्रवीत्। देव! प्रव्रजामि। मां प्रव्राज्य त्वं बुद्धशासने दायादो भवेति।

तदा राजदुहिता सङ्घमित्रा नाम कुमार्यपि तत्स्थाने स्थिता। तस्या एव भर्ता अग्निब्रह्मा नाम कुमारो युवराजेन तिष्यकुमारेण सहैव प्रव्रजितः। तामवलोक्य राजा अशोक एवमाह स्म। हे दुहितः! त्वमपि प्रव्रजितुं शक्ष्यसीति। साधु तात! शक्नोमीति। अथ राजा अशोकः पुत्रदुहित्रोरभिलाषं ज्ञात्वा प्रहृष्टचित्तः भिक्षुसङ्घेभ्य एतदब्रवीत्। भवन्तः! पूर्यमिमौ दारकौ प्रव्राज्य मां बुद्धशासने दायादं कुरुतेति। अथ भिक्षुसङ्घो राज्ञस्तद्वचनं सम्प्रतीप्य महेन्द्रं कुमारं मौद्गलिपुत्रतिष्येण स्थविरेणोपाध्यायेन महादेवेन स्थविरेणाचार्य्येण प्राव्राजयत्। मध्यान्तिकेन

स्थविरेणाचार्येण उपसमपादयच । तदा महेन्द्रः कुमारः परिपूर्णविंशवर्ष एवाऽभूत् । स च तस्मिन् उपसम्पदा सीमामण्डल एव सार्द्धं प्रतिसंविद्भिरर्हत्त्वञ्च प्राप्त । राजदुहितुः सङ्घमित्राया आचार्य्या आयुपाली नाम स्थविरा । उपाध्याया धर्म्मपाली नाम स्थविरा चाऽभूत् । तस्मिन् काले सङ्घमित्रा अष्टादशवर्षा आसीत् । सा च प्रव्रज्यायाः कर्तव्यं तस्मिन् सीमामण्डल एव मस्तकं प्रापयत् । तयोर्महेन्द्रसङ्घमित्रयोः प्रव्रजितकाले राजा अभिषेकात् षड्वर्षोऽभूत् ।

अथ महेन्द्रः स्थविर उपसम्पन्नकालात् प्रभृति स्वोपाध्यायस्य सकाशे धर्म्मविनयञ्च पर्य्यापयन् द्वे सङ्गीती समारूढं सार्थकथं सकलं त्रिपिटकं स्थविरवादञ्च त्रयाणां संवत्सराणामन्तरे उदग्रहीत् । स्वोपाध्यायस्यान्तेवासिनां सहस्रमात्रभिक्षूणां प्रधानश्चाभूत् । आसीच्च तदा राजा धर्म्माशोकोऽभिषेकान्नववर्षः । राज्ञो धर्म्माशोकस्य अभिषेकादष्टमे वर्ष एव कौन्तपुत्रतिष्यः स्थविरो व्याध्युपशमनार्थं भिक्षाटनेन व्रतेन पर्य्यटन् घृतप्रस्थमलब्ध्वा व्याधिबलेन परिक्षीणायुःसंस्कारः अप्रमादेनावदत् । अन्तरीक्षे पर्य्यङ्केण निषद्य तेजःकापिणं समुत्पाद्य परिनिरवात् । राजा धर्म्माशोकस्तां प्रवृत्तिं श्रुत्वा तस्मिन् कलेवरे साधु च सत्कारसम्मानादिभिः आदाहनं कारयामास । अथ स राजा मयि राज्यं कारयति एवं भिक्षूणां प्रत्ययैर्दुर्लभो मा भवतादिति नगरे चतुर्षु द्वारेषु पुष्करिणीः कारयित्वा विविधैर्भेषज्यैश्च प्रापूरयत् ।

तदा किल*पाटलिपुत्रनामधेये नगरे चतुर्षु द्वारेषु चत्वारि शतसहस्राणि सभायां शतसहस्रमिति दिवसे दिवसे पञ्चशतसहस्राणि कार्षापणानि राज्ञो धर्म्माशोकस्य समुत्पद्यन्ते । ततश्च राजा न्यग्रो-

* वर्त्तमाननाम पाटना ।

धस्य स्थविरस्य दिवसे दिवसे शतसहस्रं व्यसृजन् । भगवतो गौतमस्य चैत्यसमर्चनार्थं शतसहस्रम्, धर्म्मस्य शतसहस्रम्, तत्तु शतसहस्रं धर्म्मधराणां बहुश्रुतानां चतुःप्रत्ययार्थं सम्प्रादात् । सङ्घेभ्यः शतसहस्रम्, चतुर्षु नगरद्वारेषु भैषज्यार्थं शतसहस्रमिति । एवं बुद्धशासने महाँल्लाभसत्कारः प्रवर्त्ततेस्म । तीर्थकाः परिहीनलाभसत्कारा ग्रासाच्छादनमात्रमप्यलब्ध्वा लाभसत्कारान् प्रार्थयन्तो बुद्धशासने प्रवव्रजुः । ते स्वानि स्वानि दृष्टिगतानि व्याजह्रुः । अयं धर्म्मः अयं विनय इति दीपयामासुः । तेऽपि तीर्थका आचार्य्योपाध्याययोः सकाशे प्रव्रज्यामलब्ध्वा स्वयमेव केशान् मुण्डयित्वा काषायाणि निवस्य विहारेषु विचरन्त उपोषितमपि प्रवारणमपि सङ्घकर्म्मापि प्रविविशुः । भिक्षवस्तैः सार्द्धमुपोषितं न चक्रुः । तदा मौद्गलिपुत्रतिष्यः स्थविर उत्पन्नमिदानीमधिकरणम्, तत्त्वचिरमेव क्रूरतरं भविष्यति । एतद्धाधिकरणमेषां मध्ये वसता व्युपशमयितुमशक्यमिति विचिन्त्य महेन्द्रस्य गणान्निर्य्याय यथासुखं विहर्तुमहोगङ्गपर्व्वतमगमत् ।

तेऽपि तीर्थका भिक्षुसङ्घैर्धर्म्मे विनयेन शास्तृशासनेन निगृह्यमाणा अपि धर्म्मविनयानुकूलायां प्रतिपत्त्यामसन्दधतो बुद्धशासने नैकविधमर्बुदं मलं कण्टकञ्च समुत्पादयामासुः । केचिदग्निं जुहुवाञ्चक्रुः । केचित् पञ्चतापांस्तेपुः । केचित् सवितरमनुपर्य्यावर्त्तयन् । केचिद्धर्म्मं विनयञ्च भेत्तुमुद्योगं चक्रुः । तदा भिक्षुसङ्घास्तैः सार्द्धमुपोषितं वा प्रवारणं वा न चक्रुश्च । अशोकारामेऽपि सप्तसंवत्सराण्युपोषितकर्म्म प्रोचिच्छेद । राज्ञे धर्म्माशोकाय तदर्थमारोचयामासुः । अथ राजा धर्म्माशोक एकं सचिवमामन्त्र्य एवमाज्ञापयत् । भवन् ! त्वं विहारं गत्वा अधिकरणमुपशम्य उपोषितं कारय । स तु सचिवो राजानं प्रतिप्रष्टुमशक्नुवन् अपरानम-

त्यानुपगम्य एवमाह स । भवन्तः! राजा विहारं गत्वा अधिकरणमुपशम्य उपोषितं कारयितुं मां प्राहिणोत् । कथमाधिकरणमुपशाम्यत इत्यपृच्छत् । तेऽब्रुवन् । वयमेवं संरुक्षयामः । यथा हि प्रत्यन्तमुपशमयन्तश्चौरान् घ्नन्ति। तथैव ये उपोषितं न कुर्वन्ति तान् मारयितुकामो भविष्यति राजेति । अथ सोऽमात्यो विहारं गत्वा भिक्षुसङ्घान् सन्निपात्य एवमब्रवीत् । अहं राज्ञा उपोषितं कारयितुं प्रेषितः । इदानीं भवन्त उपोषितं कुरुतेति। अथ भिक्षवः अब्रुवन् । भवन्! वयं तीर्थकैः समनुपोषितं न कुर्म्म इति ।

अथ सोऽमात्यः प्रधानासनात् प्रभृति भिक्षूणामसिना शीर्षाणि छेत्तुमारेभे । ददर्श च तिष्यो नाम स्थविर एवं विरुद्धाचारं तं सचिवम्। क एष तिष्यः स्थविरः? इति । राज्ञो धर्म्माशोकस्य कनीयान् भ्राता तिष्यकुमारो नाम । तं किल राजा कृताभिषेकः सन् यौवराज्ये प्रत्यष्ठापयत्। स युवराजस्तिष्यकुमार एकदा वनभ्रमणार्थं गतः। ददर्श स युवराजो महान्त मृगयूथं विततया क्रीडया क्रीडन्तम् । दृष्ट्वा च तस्यैतदभूत् । इमे तृणभक्षका मृगा एवं क्रीडन्ति । इमेऽपि श्रमणा राजकुलाल्लब्धानि प्रणीतानि भोजनानि भुक्त्वा मृदुकासु शय्यासु शयानाः किं वामनापं क्रीडनं न क्रीडयिष्यन्तीति । स युवराजस्तदागम्य इमं स्वं वितर्कं राज्ञे अशोकाय निवेदयामास । अथ राजा धर्म्माशोक एवमचिन्तयत् । एतेन युवराजेन अस्थाने कुकृत्यमुत्पादितम् । तस्माद्धि केनोपायेन तं संज्ञपयिष्यामीति । एकदा स राजा केनाचित् कारणेन कुपित इव भूत्वा इहागच्छ तिष्य! त्वं सप्तदिवसान् राज्यं सम्प्रतीच्छ। सप्ताहातिक्रमे त्वां घातयिष्यामीति मरणभिया संतर्ज्य तदर्थं समज्ञापयत् । स खलु युवराजः सप्तमेऽहनि मां मारयिष्यतीति

यथारुचि नाश्नासीत् नामुङ्क नास्वाप्सीत् अतिरूक्षशरीरोऽभूच्च। ततश्च स राजा धर्म्माशोकस्तमपृच्छत्। कस्मात्त्वं तिष्य! एवं रूपो जात? इति। मरणभिया देव!। रे! त्वं नाम परिच्छिन्नमरणं सम्पश्यन् कस्मान्न क्रीडसि? । ममार्य्या भिक्षव आश्वासप्रश्वासोपनिबद्धं मरणं प्रेक्षमाणाः कथं क्रीडिष्यन्तीति? ततः प्रभृति युवराजो बुद्धशासने अतीव प्रसन्नः। स च पुनरेकदिवसं मृगयां यातः सन् अटव्यामनुविचरन् यवनमहाधर्म्मरक्षितं नाम स्थविरमन्यतरेण हस्तिना शालशाखया वीज्यमानं निषण्णं ददर्श। समवलोक्य च जातप्रमोदो व्यचिन्तयत्। कदा नु अहमपि अयं महास्थविर इव प्रव्रजिष्यामि। स्याच्च मे सोपि दिवस! इति। स तु स्थविरस्तस्याभिप्रायं ज्ञात्वा तस्य पश्यत एवाकाशमुत्पत्य गत्वा अशोकारामे पुष्करिण्यामुदकतले स्थित्वा चीवरश्चोत्तरप्रावरणञ्च व्योम्न्यवलम्ब्य स्नातुमारेभे। युवराजस्तस्य स्थविरस्यानुभावं दृष्ट्वा पुनरतीव प्रसन्नोऽभूत्। अद्यैव प्रव्रजिष्यामीति प्रतिनिवृत्य राज्ञे धर्म्माशोकाय तदर्थं समारोचयत्। देव! अहं प्रव्रजिष्यामीति।

अथ राजा धर्म्माशोकः अनेकधा याचित्वापि तं निवर्तयितुं न शशाक। पुनः स राजा अशोकाराममार्गमलङ्कारयित्वा युवराजं मङ्गलवेशं ग्राहयित्वा महता परिवारेण विहारमनैषीत्। युवराजः किल प्रव्रजिष्यतीति बहवो भिक्षवः पात्रचीवराणि प्रत्यपादयन्। स युवराजः प्रधानगृहं गत्वा महाधर्म्मरक्षितस्य स्थविरस्य सकाशे सार्द्धं पुरुषशतसहस्रेण प्राव्राजीत्। तदनु प्रव्रजितानां पुरुषाणां गणना नाम नास्ति। युवराजो राज्ञो धर्म्माशोकस्याभिषेकाच्चतुर्थे वर्षे प्रव्रजितः। अथापरो राज्ञो भागिनेयः सङ्घमित्रायाः कुमार्य्या भर्ता अग्निब्राह्मणो नामास्ति। तं प्रतीत्य सङ्घमित्रा एकमेव पुत्रं प्रसूता। स चाऽग्निब्राह्मणोपि युवराजः

प्रव्रजित इति श्रुत्वा राजानमुपगम्य एवमब्रवीत्। देव! अहमपि प्रव्रजिष्यामीति। स त्वनुज्ञातो राज्ञा तत्र गत्वा तस्मिन्नेव दिवसे प्राव्राजीत्। एवं महद्भिः क्षत्रियपरिच्छदैः सार्द्धं प्रव्रजितो राज्ञो धर्म्माशोकस्य कनीयान् भ्राता तिष्यस्थविरो नाम।

स च स्थविरस्तदृष्ट्वा अचिन्तयत्। राजा भिक्षून् मारयितुं तं प्राहिणोत्। अद्धा अस्यैव सचिवस्य दुर्गृहीतमेतद्भविष्यतीति। स तु गत्वा तस्यासन्ने आसने निषण्णः। स च सचिवः स्थविरं संज्ञाय शस्त्रं पातयितुमशक्नुवन् गत्वा राज्ञे व्यजिज्ञपत्। देव! अहमुपोषितं कर्तुमनिच्छतामेतावतां भिक्षूणां शीर्षाण्याच्छिनदम्। अथाऽस्यैव तिष्यस्थविरस्य परिपाटी सम्प्राप्ता। इदानीं किन्नु करोमीति। राजा धर्म्माशोकस्तच्छ्रुत्वा रे! किं त्वं मया भिक्षून् घातयितुं प्रेषितः? इति जगाद। तदास्य सपदि सकलशरीरे दाहः समुदपद्यत। स च राजा सत्वरमेव विहारं गत्वा समभिवन्द्य स्थविरान् भिक्षून् एवमपृच्छत्। भवन्तः! अयममात्यो मया अननुज्ञात एव एवमकार्षीत्। कस्य न्विदं पापं भविष्यतीति। केचिदाहुः स्म। तव वचनेनैव कृतत्वात् तवैव पापमिति। केचिदाहुः स्म। युवयोरुभयोरेतत् पापमिति। अपरे अब्रुवन्। महाराज! किन्त्वयं गत्वा भिक्षून् घातयतु इति एवंरूपं चित्तं तवाभूदिति। भवन्तः नाऽभूत्। सामग्रीसङ्घ उपोषितं करोतु इति अहं कुशलाभ्याशयेन प्रैषयम्। यदि तव कुशलाभ्याशयो भवेत् नास्ति तव पापम्। अमात्यस्यैवैतत् पापमिति।

तदा राजा संशयमापन्न एवमाह स्म। अस्ति नु भवन्तः! कश्चिद्भिक्षुर्ममैतं संशयं छित्वा बुद्धशासनमुद्योतयितुं समर्थ इति। महानृप! मौद्गलिपुत्रतिष्यो नामैकः स्थविरोऽस्ति। स इमं संशयं छित्वा बुद्ध-

यथारुचि नाश्नासीत् नामुङ्क्त नास्वाप्सीत् अतिरूक्षशरीरोऽभूच्च। ततश्च स राजा धर्म्माशोकस्तमपृच्छत्। कस्मात्त्वं तिष्य! एवं रूपो जातः? इति। मरणभिया देव!। रे! त्वं नाम परिच्छिन्नमरणं सम्पश्यन् कस्मान्न क्रीडसि? । ममार्य्या भिक्षव आश्वासप्रश्वासोपनिबद्धं मरणं प्रेक्षमाणाः कथं क्रीडिष्यन्तीति? ततः प्रभृति युवराजो बुद्धशासने अतीव प्रसन्नः । स च पुनरेकदिवसं मृगयां यातः सन् अटव्यामनुविचरन् यवनमहाधर्म्मरक्षितं नाम स्थविरमन्यतरेण हस्तिना शालशाखया वीज्यमानं निषण्णं ददर्श । समवलोक्य च जातप्रमोदो व्यचिन्तयत् । कदा नु अहमपि अयं महास्थविर इव प्रव्रजिष्यामि । स्यात्स मे सोपि दिवस! इति । स तु स्थविरस्तस्याभिप्रायं ज्ञात्वा तस्य पश्यत एवाकाशमुत्पत्य गत्वा अशोकारामे पुष्करिण्यामुदकतले स्थित्वा चीवरचोत्तरप्रावरणञ्च व्योम्न्यवलम्ब्य स्नातुमारेभे । युवराजस्तस्य स्थविरस्यानुभावं दृष्ट्वा पुनरतीव प्रसन्नोऽभूत् । अद्यैव प्रव्रजिष्यामीति प्रतिनिवृत्त्य राज्ञे धर्म्माशोकाय तदर्थं समारोचयत् । देव! अहं प्रव्रजिष्यामीति ।

अथ राजा धर्म्माशोक अनेकधा याचित्वापि तं निवर्तयितुं न शशाक। पुनः स राजा अशोकाराममार्गमलङ्कारयित्वा युवराजं मङ्गलवेशं प्रापयित्वा महता परिवारेण विहारमनैषीत् । युवराजः किल प्रव्रजिष्यतीति बहवो भिक्षवः पात्रचीवराणि प्रत्यपादयन् । स युवराजः प्रधानगृहं गत्वा महाधर्म्मरक्षितस्य स्थविरस्य सकाशे सार्द्धं पुरुषशतसहस्रेण प्राव्राजीत् । तदनु प्रव्रजितानां पुरुषाणां गणना नाम नास्ति । युवराजो राज्ञो धर्म्माशोकस्याभिषेकाच्चतुर्थे वर्षे प्रव्रजितः । अथापरो राज्ञो भागिनेयः सङ्घमित्रायाः कुमार्य्या भर्त्ता अग्निब्रह्मणो नामास्ति। स धर्म्माशोकस्य सङ्घमित्रा एकमेव पुत्रं प्रसूता । स चाप्यग्निब्रह्मणोपि युवराजः

प्रव्रजित इति श्रुत्वा राजानमुपगम्य एवमब्रवीत् । देव! अहमपि प्रव्रजिष्यामीति । स त्वनुज्ञातो राज्ञा तत्र गत्वा तस्मिन्नेव दिवसे प्राव्राजीत् । एवं महद्भिः क्षत्रियपरिच्छेदैः सार्द्धं प्रव्रजितो राज्ञो धर्म्माशोकस्य कनीयान् भ्राता तिष्यस्थविरो नाम ।

स च स्थविरस्तद्दृष्ट्वा अचिन्तयत् । राजा भिक्षून् मारयितुं तं प्राहिणोत् । अद्धा अस्यैव सचिवस्य दुर्गृहीतमेतद्भविष्यतीति । स तु गत्वा तस्यासन्ने आसने निषण्णः । स च सचिवः स्थविरं संज्ञाय शस्त्रं पातयितुमशक्नुवन् गत्वा राज्ञे व्यजिज्ञपत् । देव! अहमुपोषितं कर्तुमनिच्छतामेतावतां भिक्षूणां शीर्षाण्यच्छिनदम् । अथाऽस्येदानीं तिष्यस्थविरस्य परिपाटी सम्प्राप्ता । इदानीं किन्तु करोमीति । राजा धर्म्माशोकस्तच्छ्रुत्वा रे! किं त्वं मया भिक्षून् घातयितुं प्रेषितः? इति जगाद । तदास्य सपदि सकलशरीरे दाहः समुदपद्यत । स च राजा सत्वरमेव विहारं गत्वा समभिवन्द्य स्थविरान् भिक्षून् एवमपृच्छत् । भवन्तः! अयममात्यो मया अननुज्ञात एवमकार्षीत् । कस्य न्विदं पापं भविष्यतीति । केचिदाहुः स्म । तव वचनेनैव कृतत्वात् तवैव पापमिति । केचिदाहुः स्म । युवयोरुभयोरेतत् पापमिति । अपरे अब्रुवन् । महाराज! किन्वयं गत्वा भिक्षून् घातयतु इति एवंरूपं चित्तं तवाभूदिति । भवन्तः नाऽभूत् । सामग्रीसङ्घ उपोषितं करोतु इति अहं कुशलाध्याशयेन प्रैषयम् । यदि तव कुशलाध्याशयो भवेत् नास्ति तव पापम् । अमात्यस्यैवैतत् पापमिति ।

तदा राजा संशयमापन्न एवमाह स्म । अस्ति नु भवन्तः! कश्चिद्भिक्षुर्ममैतं संशयं छित्वा बुद्धशासनमुद्योतयितुं समर्थ इति । महानृप! मौद्गलिपुत्रतिष्यो नामैकः स्थविरोऽस्ति । स इमं संशयं छित्वा बुद्ध-

शासनं शोधयितुं समर्थ इति । तच्छ्रुत्वा राजा धर्म्माशोकस्तदहनि एकैकपुरुषसहस्रपरिवारांश्चतुरो धर्म्मकथिकान् स्थविरांश्च एकैकपुरुषसहस्रपरिवारांश्चतुरः सचिवांश्च मौद्गलिपुत्रतिष्यं नाम स्थविरमनेतुं प्रेरयत्। तेऽपि गत्वा राजा धर्म्माशोको भवन्तमामन्त्रयतीत्याहुः स्म । मौद्गलिपुत्रतिष्यः स्थविरो नागच्छत् । द्वितीयमपि राजा धर्म्माशोको मौद्गलिपुत्रतिष्यं स्थविरमानेतुं अष्ट धर्म्मकथिकान् स्थविरांश्च अष्ट सचिवांश्च सहस्रसहस्रपरिवारान् प्रेषयत् । तेऽपि गत्वा तथैवारोचयन् । तदापि मौद्गलिपुत्रतिष्यः स्थविरो नागतः ।

अथ राजा धर्म्माशोकः स्थविरान् भिक्षून् अपृच्छत् । भवन्तः ! अहं द्विवारं मौद्गलिपुत्रतिष्यं नाम स्थविरमानेतुं महामात्यैर्भिक्षून् प्राहिणवम् । कस्मादिह मौद्गलिपुत्रतिष्यः स्थविरो नागमत् ? महाराज ! राजा आमन्त्रयतीत्युक्तत्वान्नागतः । महानृपते ! एवमुक्ते सति स्थविर आगमिष्यतीति । भवन् ! इदानीं सम्बुद्धशासनमवसीदति । अस्माकं बुद्धशासनसङ्ग्रहणकृत्यार्थं सहायो भवितुमागच्छतादिति । अथ राजा धर्म्माशोकस्तथैवोक्त्वा षोडश धर्म्मकथिकांश्च षोडश सचिवांश्च सहस्रसहस्रपरिवारं दत्वा प्रेरयामास । स राजा भिक्षूनेवमपृच्छत् । भवन्तः ! वृद्धो नु एतर्हि महास्थविर उताहो दहर इति । वृद्धो महाराज ! इदानीं महास्थविरः । भवन्तः ! स च महास्थविरो वाह्यं वा शिबिकां वा समारोक्ष्यतीति । महानृपते ! स तु महास्थविरो वाह्यं वा शिबिकां वा नाभिरोक्ष्यतीति । भवन्तः ! इदानीं कर्हि महास्थविरो वसतीति । तेऽपि भिक्षव इदानीं महाराज ! स च महास्थविर उपरि गङ्गायां वसतीत्याहुः स्म ।

अथ राजा धर्म्माशोकः सचिवेभ्योऽवदत् । भद्राः ! यूयं द्वे नौके संवाह्य तत्र महास्थविरं निधाय उभयोस्तीरयोश्चारक्षां संविधाय तं महास्थविरमिहानयतेति । अथ ते भिक्षवश्च सचिवाश्च मौद्गलिपुत्रतिष्यस्य स्थविरस्य सकाशं गत्वा राज्ञो धर्म्माशोकस्य सन्देशं समारोचयन् । स च महास्थविरस्तत् समाकर्ण्य एवमचिन्तयत् । यतश्चाऽहं प्रागेव बुद्धशासनशोधनार्थं प्राव्रजम् । अयमिदानीं कालः सम्प्राप्त इति चर्म्मखण्डं गृहीत्वा उत्तस्थौ । आयुष्मान् मौद्गलिपुत्रतिष्यः स्थविरः श्व एव पाटलिपुत्रमागमिष्यतीति राजा स्वप्ने ददर्श । स स्वप्नः कीदृक् ? । सर्व्वाङ्गधवलो हस्तिराजः समागत्य राजानं धर्म्माशोकमाशीर्षात्परामृश्य दक्षिणं हस्तमग्रहीत् ।

परेद्यू राजा धर्म्माशोकः स्वप्नाध्यायकानीत्वा अपृच्छत् । भवन्तः ! मया एवंरूपः स्वप्नो दृष्टः । किं मे भविष्यतीति । ततश्चैकोऽवोचत् । श्रमणवारणस्तु तव दक्षिणं करं ग्रहीष्यतीति । अथ राजा तावदेव महास्थविर आगत इति श्रुत्वा गङ्गातीरं समभ्यगात् । स च राजा नदीमवतीर्य्य गच्छन् जानुमात्रे उदके स्थविरं समेत्य स्वं दक्षिणं करं नावोऽवतरणार्थं मौद्गलिपुत्रतिष्याय स्थविराय सम्प्रादात् । स तु स्थविरो राज्ञो दक्षिणं करमग्रहीच्च । तद्दृष्ट्वा असिग्राहका राजपुरुषास्तस्य स्थविरस्य शीर्षं पातयिष्याम इति कोशादसिमुदतोलयन् । कस्मात् ? एतद्धि राजकुलेषु चारित्रम् । यो हि राज्ञो हस्ते गृह्णाति तस्य शीर्षमसिना पातयितव्यमिति । स राजा अशोकस्छायामेव दृष्ट्वा अब्रवीत् । अहमपि पुरा भिक्षुषु कृतापराधतया आस्वादं न विन्दामि । मा यूयमस्मिन् स्थविरे अपराधं कुरुतेति । स च स्थविरः कस्माद्राज्ञो हस्तमग्रहीदिति ? । यस्मात् स राजा स्वस्य संशयस्य प्रश्नार्थं स्थविर-

तेऽपि सर्व्वे षष्टिसहस्राण्यभवन् । अथ राजा धर्म्माशोकोऽराान् भिक्षू-
नामन्त्र्य भवन्तः! किंवादी सम्बुद्ध इत्यपृच्छन् । महाराज! अस्माकं
शास्ता सम्बुद्धो विभज्यवादीति । एवञ्चोक्तेऽपि राजा धर्म्माशोको मौद्ग-
लिपुत्रतिष्यं स्थविरमपृच्छद्विभज्यवादी भवन्! सम्बुद्ध इति । आम्
महाराज! इति स प्रत्यभाषत । ततश्च राजा धर्म्माशोकः परिशुद्धमि-
दानीं भवन्! बुद्धशासनम् । कुर्व्वन्तु भिक्षव उपोषितामिति सर्व्वमार-
क्षासंविधानं कृत्वा नगरं प्रविवेश । अथ सामग्रीभूतास्ते भिक्षव उपो-
षितञ्चक्रुः । तस्मिंस्तु सन्निपाते षष्टिशतसहस्राणि भिक्षवोऽभवन् ।
तदा मौद्गलिपुत्रतिष्यो नाम स्थविरः परवादं मर्द्दयन् कथावस्तु नाम
प्रकरणमादिदेश । ततश्चानन्तरं स चायुष्मान् मौद्गलिपुत्रतिष्यः
स्थविरः षष्टिशतसहस्रसङ्ख्यानां भिक्षूणां त्रिपिटकपर्य्याप्तिधरान् प्रभिन्न-
प्रतिसंवित्प्राप्तांस्त्रिविद्यादिगुणोपेतानेकसहस्रभिक्षून् समुच्चित्य पुरा
यथा आयुष्मान् महाकाश्यपः स्थविरश्च आयुष्मान् काकण्डपुत्रो यश-
स्थविरश्च धर्म्मञ्च विनयञ्च समगायतां तथैव धर्म्मं विनयञ्च सङ्गाय
सर्व्वं शासनमलं परिशोध्य तृतीयां धर्म्मसङ्गीतिं नवभिर्मासैश्चकार ।
धर्म्मसङ्गीत्याः पर्य्यवसाने, इयं महोर्वी ननाद ।

**इति श्रीशीलस्कन्धस्थविरस्य कृतौ सद्धर्ममकरन्दे**
**तृतीयसङ्गीतिपरिदीपनो नाम**
**त्रयोविंशोऽध्यायः ।**



# अथ चतुर्विंशोऽध्यायः ।

अथाऽयुष्मान् मौद्गलिपुत्रतिष्यः स्थविर इमां तृतीयसङ्गीतिं परिसमाप्य एवमचिन्तयत् । कस्मिन्नु भविष्यत्काले भगवतो गौतमस्य शासनं सुप्रतिष्ठितं भविष्यतीति । एवमुपपरीक्षमाणस्य तस्य एतदभूत् । प्रत्यन्तेषु सुप्रतिष्ठितं भविष्यतीति । स च तज्ज्ञात्वा तेषां तेषां भिक्षूणां भारं कृत्वा तांश्च तांश्च भिक्षूंस्तत्र तत्र प्राहिणोत् । तद्यथा क्षीणाश्रवमायुष्मन्तं मध्यन्तिकं नाम स्थविरं काश्मीरगन्धारराष्ट्रयोश्च । क्षीणाश्रवमायुष्मन्तं महादेवं नाम स्थविरं महिषमण्डले च क्षीणाश्रवमायुष्मन्तं रक्षितं नाम स्थविरं वानवासिराष्ट्रे च । क्षीणाश्रवमायुष्मन्तं यवनधर्म्मरक्षितं नाम स्थविरमपरान्तराष्ट्रे च क्षीणाश्रवमायुष्मन्तं महाधर्म्मरक्षितं नाम स्थविरं महाराष्ट्रेषु च । क्षीणाश्रवमायुष्मन्तं महारक्षितं नाम स्थविरं यवनराष्ट्रे च । क्षीणाश्रवमायुष्मन्तं मध्यमं नाम स्थविरं हिमालयप्रदेशे च । क्षीणाश्रवावायुष्मन्तौ शोणोत्तरौ नाम स्थविरौ सुवर्णभूम्यां च । स्वान्तेवासिनं क्षीणाश्रवमायुष्मन्तं महेन्द्रं नाम स्थविरं लङ्काद्वीपे च प्राहिणोत् * ।

अथ ते सर्व्वेऽपि तत्तद्दिशाभागं गच्छन्तः प्रत्यन्तेषु जनपदेषु पञ्चवर्गीया गणाश्च उपसम्पदादि कर्म्मस्वलमिति मन्यमानाः स्वं पञ्चममेव

* नेपाल । काबुल । कतक ( कटक )स्थान । तिब्बत ( टिबेट् ) । चीन । मङ्गोलिया । रशिया । सयिबिरिया ( युरोपीयान्तर्गत ) त्यापल्याण्डामालिद्वीप । काश्मीर । लिउकेनद्वीप । कोरियाद्वीप । मञ्चूरिया । सिंहल । ब्रिटिशबर्म्मा । बर्म्मा । श्याम । आसाम । भोटान । सिकिम इति एतेषु एकविंशतिस्थानेषु पुरा भगवतः शाक्यमुनेः शासनं प्रतिष्ठापितमिति नेपालादिदेशप्रचारितेषु केषुचित् पुस्तकेषु दृश्यते । एतद्विचारणीयम् ।

जग्मुः। तस्मिंस्तु समये कश्मीरगन्धारराष्ट्रयोः सस्यपाककाले अरवालो नामैको नागराजः करकवृष्टिं नाम घनवृष्टिं वर्षित्वा सकलं सस्यं समुद्रं प्रापयति। अथाऽयुष्मान् मध्यान्तिको नाम स्थविरः स्वपद्मं पाटलिपुत्रनगराद्व्योममार्गेण गत्वा हिमालये अरवालनामकस्य सरोवरस्योपरि अवततार। स तु स्थविरः अरवालनामकस्य सरोवरस्य पृष्ठे चङ्क्रम्यते। तिष्ठति निषद्यते शय्याञ्च करोति। तदा नागपुत्रा दृष्ट्वा अरवालय नागराजाय दिदिशुः। महाराज! एकश्छिन्नभिन्नवस्त्रधारी मुण्डः कषायवस्त्रधारी अस्माकमुदकं दूषयतीति। अथ सर्पराजस्तावदेव क्रुद्धः सन् ततो निष्क्रम्य तं स्थविरं समवलोक्याक्षमोऽसहमानोऽन्तरीक्षे अनेकानि भीषणानि निरमापयत्।

अथ ततस्ततो महावाता ववुः। तरवः प्रपेतुः। अद्रिकूटानि प्रपेतुः। मेघा जगर्ज्जुः। विद्युल्लताः प्रवमुः। अशन्यः फेलुः। भिन्नादिव गगना दुदकधाराः प्रपेतुः। भीषणरूपा नागकुमाराः सन्निपेतुः। दिशोऽधूम्रायन्त। प्रजज्वलुः। महरणवृष्टयश्चाभूवन्। कोऽयं मुण्डश्छिन्नभिन्नवस्त्रधारीत्यादिभिः परुषवाग्भिः स्थविरमतर्ज्जयन्। स च नागराजो यूयमेतमिमं श्रमणं गृह्णीत। बध्नीत। मर्द्दयत इति नागबलमाज्ञापयच्च। स च स्थविरः सर्व्वाणि तानि भीषणानि ऋद्धिबलेन व्यपहृत्य नागराजमेवमाहस्म।

> सदेवो यदि लोकोऽयमागत्य त्रासयेच्च माम्।
> न वै प्रतिबलः स्यान्मे जनयितुं भयभैरवम्॥
> यद्यपि त्वं महीं सर्व्वां ससमुद्रां सपर्व्वताम्।
> समुत्क्षिप्य महानाग! प्रक्षेप्स्यसि ममोपरि॥

नैव मे त्वं शक्ष्यसि जनयितुं भयभैरवम् ।
अवश्यमेव ते भूयाद्विघात उरगाधिप ॥ इति

एवञ्चोक्ते नागराजो विहतानुभावो निष्फलव्यायामो दुःखी दुर्म्मना अभूत् । स च स्थविरस्तत्कालानुरूपया धर्म्मकथया चतुरशीतिसहस्रैर्नागैः सार्द्धमरवालं नागराजं त्रिषु शरणेषु पञ्चसु शीलेषु च प्रत्यष्ठापयत् । अपरानपि बहून् हिमालयवासिनो यक्षगन्धर्वांश्च । पञ्चकोऽपि यक्षः सार्द्धं भार्य्यया पञ्चभिः पुत्रशतैः श्रोतापत्तिफले प्रतिष्ठापयामास ।

अथाऽऽयुष्मान् मध्यन्तिकः स्थविरः सर्व्वान् यक्षराक्षसानामन्त्र्य एवमाह स्म ।

मा क्रोधं जनयतेदानीमत ऊर्द्धं यथा पुरा ।
सस्यघातं न कुरुत सुखकामा हि प्राणिनः ।
मैत्रीं कुरुत सत्त्वेषु वसन्तु मनुजाः सुखम् ॥ इति ।

तेऽपि सर्व्वे साधु भवन्! इति तस्य स्थविरस्य वचनं शुश्रुवुः । यथानुशासनञ्च प्रतिपेदिरे । तस्मिन् हि दिवसे अरवालस्य नागराजस्योत्सवोऽप्यभवत् । तस्मिन्नुत्सवेऽपि नागराजः स्वीयं रत्नमयं पर्य्यङ्कमाहृत्य स्थविरस्य प्राज्ञापयत् । स च स्थविरो निषसाद रत्नमये पर्य्यङ्के । नागराजोऽपि तं स्थविरं वीजयमानः सन्निधौ तस्थौ । सपदि काश्मीरगन्धारराष्ट्रवासिनः समागता निषण्णं स्थविरं दृष्ट्वा नागराजादपि स्थविरो महर्द्धिकतर इति मत्वा स्थविरमेव ववन्दिरे । स तु स्थविरस्तेभ्य आशीविषोपमं नाम सूत्रं दिदेश । देशनायाः पर्य्यवसाने अशीत्याः प्राणिसहस्राणां धर्म्माभिसमयोऽभूत् । कुलशतसहस्रेषु मनुष्याः

प्रवव्रजुश्च । तदा काश्मीरगन्धारराष्ट्रयोर्भगवतो गौतमस्य शासनमतीव शुशुभे ।

इति काश्मीरगन्धारदेशयोर्बुद्धशासनप्रतिष्ठापनम् ।

तथाऽयुष्मान् महादेवो नाम स्थविरः स्वपञ्चमं माहिषकमण्डलं गत्वा देवदूतं नाम सूत्रमदिशत् । देशनायाः पर्य्यवसाने चत्वारिंशत्सहस्राणि प्राणिनो धर्म्मावबोधं चक्रुः । चत्वारिंशत्सहस्राणि प्राणिनः प्रवव्रजुश्च । ततःप्रभृति सर्व्वस्मिन् माहिषकमण्डले भगवतो गौतमस्य शासनं विरराज ।

इति माहिषकमण्डले बुद्धशासनप्रतिष्ठापनम् ।

तथाऽयुष्मान् रक्षितो नाम स्थविरः स्वपञ्चमं वानवासिराष्ट्रं गत्वा अन्तरीक्षे स्थित्वा अनमताग्रपर्य्यायया कथया वानवासिकान् जनान् प्रासादयत् । तस्याः कथायाः पर्य्यवसाने षष्टिसहस्राणां प्राणिनां धर्म्माभिसमयोऽभूत् । सप्तत्रिंशत्सहस्रजनाः प्रव्रज्यां लेभिरे । तत्र च पञ्च विहारशतानि प्रतिष्ठापयामासुः । ततः प्रभृति सर्व्वत्र वानवासिराष्ट्रे बुद्धशासनं प्रावर्धं ।

इति वानवासिराष्ट्रे बुद्धशासनप्रतिष्ठापनम् ।

तथाऽयुष्मान् यवनधर्म्मरक्षितो नाम स्थविरः अपरान्तराष्ट्रं गत्वा वह्निस्कन्धोपमं नाम सूत्रं दिष्ट्वा अपरान्तवासिनः प्रसाद्य सप्तत्रिंशत्सहस्रान्प्राणिनो धर्म्मामृतमपाययत् । अथ राजकुलादेव सार्द्धं षट्स्त्रीसहस्रैः पुरुषसहस्रञ्च प्राव्राजीत् । एवं तत्र सर्व्वत्र बुद्धशासनं प्रतिष्ठापयामास ।

इत्यपरान्तराष्ट्रे बुद्धशासनप्रतिष्ठापनम् ।

तथाऽयुष्मान् महाधर्मरक्षितो नाम स्थविरो महाराष्ट्रान्गत्वा महानारदकाश्यपनामकया जातककथया महाराष्ट्रीयान् जनान् प्रसाद्य चतुरशीतिसहस्राणि प्राणिनां मार्गफलेषु प्रत्यष्ठापयत्। त्रयोदशसहस्राणि च जनानां प्राव्राजयत् । एवं सकलेषु महाराष्ट्रेषु बुद्धशासनञ्च ततान ।

इति महाराष्ट्रेषु बुद्धशासनप्रतिष्ठापनम् ।

---

तथाऽयुष्मान् महारक्षितो नाम स्थविरः स्वपञ्चमं यवनराष्ट्रं गत्वा कालकारामं नाम सूत्रं दिष्ट्वा यावनान् मनुष्यान् प्रसाद्य सप्तत्रिंशत्सहस्राधिकेभ्यः शतसहस्रप्राणिभ्यो मार्गफलानि सम्पादात् । तस्य महारक्षितस्य स्थविरस्य सकाशे दशसहस्राणि च जनानां प्रवव्रजुः । एवं यवनराष्ट्रे भगवतो गौतमस्य शासनं प्रतिष्ठापयामास ।

इति यवनराष्ट्रे बुद्धशासनप्रतिष्ठापनम् ।

---

तथाऽयुष्मान् मध्यमो नाम स्थविरः सार्द्धं काश्यपगोत्रेण च स्थविरेण अलकदेवेन च स्थविरेण दुन्दुभीश्वरेण च स्थविरेण सहस्रदेवेन च स्थविरेण हिमालयप्रदेशं गत्वा धर्म्मचक्रप्रवर्त्तनं नाम सूत्रं दिष्ट्वा हिमालयवासिनो जनान् प्रसाद्य अशीतिकोटीः प्राणिनां मार्गफलेषु प्रत्यष्ठापयत् । तेऽपि पञ्च स्थविराः प्रत्येकं पञ्च राष्ट्राणि प्रसादयामासुः । एकैकस्य सकाशेऽपि जनाः शतसहस्रशः प्रवव्रजुश्च । एवं तत्र हिमालयप्रदेशे भगवतो गौतमस्य शासनं सुप्रतिष्ठितमभूत् ।

इति हिमालयप्रदेशे बुद्धशासनप्रतिष्ठापनम् ।

तथाऽयुष्मान् शोणो नाम स्थविरश्च आयुष्मानुत्तरो नाम स्थविरश्च अपरैरग्रिभिः स्थविरैः सार्द्धं सुवर्णभूमिं जग्मतुः । तदैका राक्षसी समुद्रान्निष्क्राम्य तत्र राजकुले सञ्जातमञ्जातान् दारकान् खादति स । तस्मिन्नेव दिवसे राजकुले एको दारको निर्वृत्तः । तदा मनुष्या एकं स्थविरं दृष्ट्वा अयं राक्षससहायक इति मन्यमाना आयुधहस्ताः स्थविरं हन्तुकामा गच्छन्ति स्म । स च स्थविरस्तान् मर्त्यानिवमपृच्छत् । भवन्तः ! यूयं कस्मादायुधहस्ता आगच्छथेति ? । अथ ते प्रोचुः । अस्माकं राजकुले जातमातान् दारकान् राक्षसाः खादन्ति स्म । यूयं तेषां सहाया इति । अथ स्थविर आह स्म । न वयं राक्षससहायाः । वयं श्रमणा नाम । विरता वयं प्राणातिपातात् । विरता अदत्तादानात् । विरताः कामेषु मिथ्याचारात् । विरता मृषावादात् । विरता मद्यपानात् । वयमेकभुक्ताः, शीलवन्तः, कल्याणधर्म्माण इति । सत्येव सा राक्षसी सपरिवारा समुद्रान्निरक्रामत् । अथ मनुष्यास्तां राक्षसीं समालोक्य भवन् ! अद्य राजगृहे दारको जातस्तं खादितुमेषा राक्षसी आगच्छतीति भिया रुरुवुः । अथ स तु स्थविरो राक्षसेभ्यो द्विगुणानि शरीराणि निर्म्माय सपरिवारां तां राक्षसीं तेषां शरीराणां मध्ये कृत्वा उभयेषु पार्श्वेषु पर्य्यक्षिपत् । तस्याः सपरिवारायाः मनस्येतदभूत् । अवश्यमिदं स्थानमेभिर्लब्धं भविष्यति । इदानीं वयं सर्व्वे एषां भक्ष्या भविष्याम इति मत्वा सर्व्वे राक्षसा भिया वेगेन पलाययामासुः ।

स च स्थविरस्ते यावददर्शनं गच्छन्ति तावत् पलाय्य तस्मिन् द्वीपे समन्तादारक्षां संविदधौ । तस्मिंस्तु समये सन्निपतितान् महाजनान् ब्रह्मजालं नाम सूत्रं दिष्ट्वा प्रसाद्य त्रिषु शरणेषु पञ्चसु शीलेषु च प्रत्यष्ठापयत् । तत्रापि षष्टिसहस्राणां प्राणिनां धर्म्माभिसमयोऽभूत् । कुलदा-

रकाणां पञ्चशताधिकानि त्रीणि सहस्राणि च कुलदुहितॄणां पञ्चशतातिरेकमेकसहस्रञ्च प्रव्रज्यां लेभिरे । एवं तस्यां सुवर्णभूम्यां बुद्धशासनं सुप्रतिष्ठापयामास ।

इति सुवर्णभूमौ बुद्धशासनप्रतिष्ठापनम् ।

---

तथाऽयुष्मान् महेन्द्रो नाम स्थविरः स्वोपाध्यायेन मोद्गलिपुत्रतिष्येण स्थविरेण च भिक्षुसङ्घैश्च लङ्काद्वीपगमनार्थमाराधितः सन् कालं व्यलोकयत् । नैवेदानीं कालः । षण्णां मासानामतिक्रमेण राजा मुटसीवः कालङ्करिष्यति तत्पुत्रो देवानां प्रियतिष्यो राज्यं प्राप्स्यतीति । तदा शासनं प्रतिष्ठापयितुं शक्ष्यत इति । स त्वेवमचिन्तयत् । अहं पुनरिम जनपदमागन्तुं न लप्स्य इति । स चाऽयुष्मान् महेन्द्रः स्थविर उपाध्यायञ्च भिक्षुसङ्घांश्च समभिवन्द्य सार्द्धमिष्टियेण च स्थविरेण उत्तियेन च स्थविरेण भद्रशालेन च स्थविरेण शम्बलेन च स्थविरेण षडभिज्ञाचिन्त्य महर्द्धिना सुमनेन च श्रमणोद्देशेन मण्डूकेन चोपासकेन अशोकगन्धिरकामत् । स तु महेन्द्रः स्थविरः सपरिवारः कुसुमपुरान्निर्गत्य दक्षिणगिरौ जनपदे किञ्चित् कालं चचार । व्यलोकयच्च स्वाम्नातिकान् । तत्रापि षण्मासानत्यक्रमयच्च । स च स्थविरः क्रमशो मातृनिकेतनं वैदिशनगरं सम्प्राप्तः । राजा धर्म्माशोकः कुमारकाल एव [illegible] उज्जायिनीनगरं गच्छन् वैदिशनगरं प्राप्य देवश्रेष्ठिनो दुहितरं । सा तु तदहन्येव गर्भमधत्त । सा चोज्जायिनीनगरे महेन्द्रं [illegible] सुषुवे । महेन्द्रस्य कुमारस्य चतुर्दशवर्षात्मके वयसि राजा [illegible] भिषेकं प्रापत् । तदा तु सा महेन्द्रस्य स्थविरस्य [illegible] न्यवसत् ।

मानि सुविभक्तवृन्तपत्रकिञ्जल्कानि च दृश्यन्ते। शकुनयष्ट्यां हंसकुक्कुटजीवञ्जीवकादयः शकुना नानाविधाः सजीवा इव दृश्यन्ते। अस्य राज्ञः समुद्रादपि मुक्तामणिवैदूर्य्याद्यनेकविधरत्नानि समुत्पेदिरे। लङ्कायां तु हयमुक्ता, गजमुक्ता, रथमुक्ता, आमलकीमुक्ता, वलयमुक्ता, अङ्गुलिवेष्टकमुक्ता, ककुधफलमुक्ता, प्राकृतिकमुक्ता, इत्यष्टौ मुक्ताः समुत्पेदिरे। स च राजा देवानांप्रियतिष्यस्ताश्च यष्टीस्ताश्च मुक्ता अपराणि च बहूनि रत्नानि राज्ञो धर्म्माशोकस्य प्राभृतं कृत्वा प्रैरयत्। तांश्च लब्ध्वा प्रसन्नो राजा धर्म्माशोकस्तस्य राज्ञो देवानांप्रियतिष्यस्य छत्रं चामरं खड्गं मौलिं रत्नपादुकाश्च प्रैरयत्। अभिषेकार्थमपराणि विविधानि प्राभृतानि च। तद्यथा शङ्खं, गङ्गोदकं, वर्द्धमानं, वृत्ताशकभृङ्गारं, नन्दावर्त्तं, शिबिकां, कन्यां, दर्वीं, अधौतं, वस्त्रयुग्मं, हस्तपुञ्छनं, हरिचन्दनं, अरुणवर्णमृत्तिकां, अञ्जनं, हरीतकीं, आमलकमिति। अपरं धर्म्मप्राभृतमपि प्रेषयामास। यथा—

> अहं बुद्धञ्च धर्मञ्च सङ्घञ्च शरणं गतः।
> उपासकत्वं विन्देयं शाक्यसिंहस्य शासने॥
> एतेषु च त्रिषु वस्तुषूत्तमेषु नरोत्तमः।
> प्रसाद्य चित्तं त्वमपि श्रद्धया शरणं व्रज॥ इति।

स चाऽयं राजा देवानांप्रियतिष्यो राज्ञा धर्म्माशोकेन प्रेषितैरेव अभिषेकभाण्डैः एकमासाऽभिषिक्तः संस्तदहन्यचिरश्रुतां शासनप्रवृत्तिमनुस्मरन् "श्रमणा वयं महाराज! धर्म्मराजस्य श्रावकाः" इति समाकर्ण्य आर्य्या विहागता इति सपद्यायुधं निक्षिप्य सम्मोदनीयां कथां कथयमान एकमन्तं निषसाद।

एवं निषण्णे च राजनि तानि चत्वारिंशत्पुरुषसहस्राणि समागत्य आयुष्मन्तं महेन्द्रं स्थविरं परिवव्रुः। तदा स स्थविर इतरान् षट् पुरुषान-

दर्शयत् । राजा तदवलोक्य इमे कदा आगता इत्यपृच्छत्? । नृपते! सह मयैवेति । इदानीं जम्बूद्वीपे अपरेऽपि एवंरूपाः श्रमणाः सन्ति? इति । सन्ति महाराज! इति । एतर्हि महाराज! जम्बूद्वीपः काषायवस्त्रप्रज्योतिः ऋर्षिवातप्रतिवातश्च । तस्मिन् महाराज! जम्बूद्वीपे–

त्रैविद्या ऋद्धिप्राप्ताश्च चेतःपर्य्यायकोविदाः ।
अर्हन्तः क्षीणपापाश्च बहवो बुद्धश्रावकाः ॥ इति ।

अथ राजा अपृच्छत् । भवन्तः! केनाऽऽगच्छन्निति । वयं महाराज! नैवोदकेन वा स्थलेन वा आगच्छाम । अथ राजाऽज्ञासीदेते आकाशमार्गेणागता इति । अथाऽऽयुष्मान् महामहेन्द्रः स्थविरो राज्ञो देवानांप्रियतिष्यस्य प्रज्ञाव्यक्ततादिविमर्शनार्थमासन्नमाम्रतरुमारभ्य प्रश्नमपृच्छत् । महाराज! किन्नामायं तरुरिति । भवन्! आम्रतरुरिति । महानृप! इममाम्रतरुं त्यक्त्वा अपर आम्रतरुरस्ति वा नास्तीति । सन्ति भवन्! अपरे बहव आम्रद्रुमा इति । महानृप! इमञ्चाम्रतरुमपरांश्चाम्रतरूँस्त्यक्त्वा अपरे द्रुमाः सन्ति? इति । सन्ति भवन्! इति । अपरानाम्रद्रुमांश्चानाम्रद्रुमांश्च त्यक्त्वा अस्ति अपरो द्रुम? इति । ननु भवन्! अयमेवाम्रतरुरस्तीति । अथ स च स्थविरः साधु महाराज! पण्डितस्त्वमित्याऽह स । पुनरपि स तु स्थविरो राजानमपृच्छत् । महाराज! सन्ति तव ज्ञातय? इति । सन्ति भवन्! मम बहवो ज्ञातय इति । महानृप! तांश्च ज्ञातींस्त्यक्त्वा अज्ञातयः सन्ता? इति । अज्ञातयो भवन्! ज्ञातिभ्यो बहुतराः । महाराज! तव ज्ञातींश्चाज्ञातींश्च त्यक्त्वा अन्यः कश्चिदस्ति? इति । अहं भवन् अस्मीति । साधु महाराज! आत्मैवात्मनो ज्ञातिर्नापरा इति । अथ स महामहेन्द्रः स्थविर एवं चिन्तयामास । राजा पण्डितः । शक्यते तस्य धर्म्मावबोधं कारयितुमिति चूलहस्तिपदोपमं नाम सूत्रं दिदेश । देशनायाः पर्य्यवसाने सार्द्ध चत्वारिंशत्पुरुषसहस्रैः राजा त्रिषु शरणेषु प्रतितिष्ठति स्म ।

मानि सुविभक्तवृन्तपत्रकिञ्जल्कानि च दृश्यन्ते। शकुनयष्ट्यां हंसकुक्कुटजीवञ्जीवकादयः शकुना नानाविधाः सजीवा इव दृश्यन्ते। अस्य राज्ञः समुद्रादपि मुक्तामणिवैदूर्याद्यनेकविधरत्नानि समुत्पेदिरे। लङ्कायां तु हयमुक्ता, गजमुक्ता, रथमुक्ता, आमलकीमुक्ता, वलयमुक्ता, अङ्गुलिवेष्टकमुक्ता, ककुधफलमुक्ता, प्राकृतिकमुक्ता, इत्यष्टौ मुक्ताः समुत्पेदिरे। स च राजा देवानांप्रियतिष्यस्ताश्च यष्टीस्ताश्च मुक्ता अपराणि च बहूनि रत्नानि राज्ञो धर्माशोकस्य प्राभृतं कृत्वा प्रैरयत्। तांश्च लब्ध्वा प्रसन्नो राजा धर्माशोकस्तस्य राज्ञो देवानां प्रियतिष्यस्य छत्रं चामरं खड्गं मौलिं रत्नपादुकाश्च प्रेरयत्। अभिषेकार्थमपराणि विविधानि प्राभृतानि च। तद्यथा शङ्खं, गङ्गोदकं, वर्द्धमानं, वृत्तांशकभृङ्गारं, नन्दावर्त्तं, शिविकां, कन्यां, दर्व्वी, अधोविं, वस्त्रयुग्मं, हस्तपुञ्छनं, हरिचन्दनं, अरुणवर्णमृत्तिकां, अञ्जनं, हरीतकीं, आमलकामिति। अपरं धर्म्मप्राभृतमपि प्रेषयामास। यथा–

> अहं बुद्धञ्च धर्मञ्च सङ्घञ्च शरणं गतः।
> उपासकत्वं विन्देयं शाक्यसिंहस्य शासने॥
> एतेषु च त्रिषु वस्तुषूत्तमेषु नरोत्तमः।
> प्रसाद्य चित्तं त्वमपि श्रद्धया शरणं व्रज॥ इति।

स चाऽयं राजा देवानांप्रियतिष्यो राज्ञा धर्म्माशोकेन प्रेषितैरेव अभिषेकभाण्डैः एकमासाऽभिषिक्तः संसदहन्यचिरश्रुतां शासनप्रवृत्तिमनुस्मरन् "श्रमणा वयं महाराज! धर्म्मराजस्य श्रावका" इति समाकर्ण्य आर्य्या विहागता इति सपद्यायुधं निक्षिप्य सम्मोदनीयां कथां कथयमान एकमन्तं निषसाद।

एवं निषण्णे च राजनि तानि चत्वारिंशत्पुरुषसहस्राणि समागत्य आयुष्मन्तं महेन्द्रस्थविरं परिवव्रुः। तदा स स्थविर इतरान् षट्पुरुषान-

दर्शयत् । राजा तदवलोक्य इमे कदा आगता इत्यपृच्छत्? । नृपते! सह मयैवेति । इदानीं जम्बूद्वीपे अपरेऽपि एवंरूपाः श्रमणाः सन्ति? इति । सन्ति महाराज! इति । एतर्हि महाराज! जम्बूद्वीपः काषायवस्त्रप्रज्योतिः ऋषिवातप्रतिवातश्च । तस्मिन् महाराज! जम्बूद्वीपे–

त्रैविद्या ऋद्धिप्राप्ताश्च चेतःपर्य्यायकोविदाः ।
अर्हन्तः क्षीणपापाश्च बहवो बुद्धश्रावकाः ॥ इति ।

अथ राजा अपृच्छत् । भवन्तः! केनाऽऽगच्छन्निति । वयं महाराज! नैवोदकेन वा स्थलेन वा आगच्छाम । अथ राजाऽज्ञासीदेत आकाशमार्गेणागता इति । अथाऽयुष्मान् महामहेन्द्रः स्थविरो राज्ञो देवानांप्रियतिष्यस्य प्रज्ञाव्यक्ततादिविमर्शनार्थमासन्नमाम्रतरुमारभ्य प्रश्नमपृच्छत् । महाराज! किन्नामायं तरुरिति । भवन्! आम्रतरुरिति । महानृप! इममाम्रतरुं त्यक्त्वा अपर आम्रतरुरस्ति वा नास्तीति । सन्ति भवन्! अपरे बहव आम्रद्रुमा इति । महानृप! इमञ्चाम्रतरुमपरांश्चाम्रतरूँस्त्यक्त्वा अपरे द्रुमाः सन्ति? इति । सन्ति भवन्! इति । अपरानाम्रद्रुमांश्चानाम्रद्रुमांश्च त्यक्त्वा अस्ति अपरो द्रुम? इति । ननु भवन्! अयमेवाम्रतरुरस्तीति । अथ स च स्थविरः साधु महाराज! पण्डितस्त्वमित्याऽऽह स । पुनरपि स तु स्थविरो राजानमपृच्छत् । महाराज! सन्ति तव ज्ञातय? इति । सन्ति भवन्! मम बहवो ज्ञातय इति । महानृप! तांश्च ज्ञातींस्त्यक्त्वा अज्ञातयः सन्ता? इति । अज्ञातयो भवन्! ज्ञातिभ्यो बहुतराः । महाराज! तव ज्ञातींश्चाज्ञातींश्च त्यक्त्वा अन्यः कश्चिदस्ति? इति । अहं भवन् अस्मीति । साधु महाराज! आत्मैवात्मनो ज्ञातिर्नापरा इति । अथ स महामहेन्द्रः स्थविर एवं चिन्तयामास । राजा पण्डितः । शक्यते तस्य धर्म्मावबोधं कारयितुमिति चूलहस्तिपदोपमं नाम सूत्रं दिदेश । देशनायाःपर्य्यवसाने सार्द्धं चत्वारिंशत्पुरुषसहस्रै राजा त्रिषु शरणेषु प्रतितिष्ठति स्म ।

अथ तत्क्षण एव राज्ञो भक्तमाहरत् । राजा धर्म्म शृण्वन्नेव एव-मज्ञासीत् । एतेषामस्मिन् काले भोजनं नार्हमिति । अपृष्ट्वा भोक्तुमपि नार्हमिति विचिन्त्य मुहुर्त्तं भवन्तो! भक्तमित्यपृच्छत् । महाराज! अस्मिन् काले अस्माकं भोजनं नार्हमिति । कस्मिन् काले भवन्! अर्हमिति? । महाराज! अरुणोद्गमनात् प्रभृति यावन्मध्याह्नकालादिति । भवन्! गच्छामो नगरमिति । अलं महाराज! वयमिह वत्स्याम इति । यदि यूयं वसथ अयं दारको गच्छतु इति । महानृप! अयं दारक आगतफलो विज्ञातशासनः प्रव्रज्यापेक्ष इदानीं प्रव्रजिष्यतीति । तस्माद्धि भवन्! श्वो रथं प्रेषयिष्यामि, तमभिरुह्यागच्छतेत्युक्त्वा समभिवन्द्य प्रायात् ।

अथाऽयुष्मान् महामहेन्द्रोऽचिरप्रयाते राजनि सुमनं श्रमणोद्देशमा-मन्त्रयामास । आगच्छ सुमन! त्वमिदानीं धर्म्मश्रवणार्थं कालं घोषयेति । भवन्! कियत्स्थानं श्रावयन् घोषयामीति । सकलं लङ्काद्वीपमिति । साधु भवन्! इति सुमनःश्रमणोद्देशोऽभिज्ञापादकं चतुर्थं ध्यानं समापद्य ततश्चोत्थाय समाहितेन चित्तेन सकलं लङ्काद्वीपं श्रावयंस्त्रिवारं धर्म्मश्र-वणार्थं कालमजूघुषत् । राजा तं शब्दं श्रुत्वा स्थविराणां सकाशे दूतान् प्राहिणोत् । किं भवन्तः! अस्ति कश्चिन् उपद्रव? इति । न हि भो! अ-स्माकमुपद्रवः । धर्म्मश्रवणार्थं कालं घोषयाम इति । सुमनस्य श्रमणो-द्देशस्य शब्दं श्रुत्वा भूम्या देवाः शब्दं शुश्रुवुः । एतेनैवोपायेन यावद्ब्रह्म-लोकाच्छब्दोऽभ्युद्गतः । तेन च शब्देन महादेवतासन्निपातो बभूव । स च स्थविरो देवतासन्निपातं दृष्ट्वा समचित्तपर्य्यायं नाम सूत्रं देशयामास । देशनायाः पर्य्यवसाने असङ्ख्यानां देवतानां धर्म्माभिसमयोऽभूत् । अथ तस्या निशाया अतिक्रमेण राजा स्थविराणां गमनार्थं रथं प्रैरयत् ।

सारथिरेकान्ते रथं निधाय तेभ्यः स्थविरेभ्य एवमारोचयत् । भवन्तः ! रथ आहृतः । अभिरोहत रथे, गमिष्याम इति ।

अथ स्थविर आहस । भो ! वयं रथं नारोहामः । त्वं गच्छ । वयं पश्चादागमिष्याम इति । स च स्थविरः सपरिवारो व्योमवर्त्मना अनुराधपुरं गत्वा प्राचीनदिशायां प्रथमचैत्यस्थानादवरुरोह । राजा देवानांप्रियतिष्योऽपि सारथिं प्रेष्य अन्तर्निवेशने मण्डपं सर्जयतेति सचिवानाज्ञापयत् । सपदि सचिवाः सर्व्वे प्रहृष्टमनसोऽतीव प्रासादिकं मनोरमं मण्डपं सर्जयामासुः । पुनरपि राजा एवमचिन्तयत् । अतीतेऽपि दिवसे शीलविभागं कथयमानः स्थविर उच्चशयनमहाशयनानि नार्हन्तीत्याऽह स्म । तस्मान्निषत्स्यन्ति न्वार्य्या उच्चशयने न निपत्स्यन्तीति राजा संशयमापद्यत । एवं चिन्तयतस्तस्य स सारथिर्नगरद्वारं सम्प्राप्तः । ददर्श स ततः प्रथमतरं समागत्य कायबन्धनं बध्वा चीवराणि प्रावृतवतश्च स्थविरान् । दृष्ट्वा चाऽतीव प्रसन्नः समागत्य स्थविरा देवा ! आगता इति राज्ञे न्यवेदयत् । अथ राजा एवमपृच्छत् । भद्र ! तेऽपि स्थविरा रथमारूढा ? इति । नारूढा देव ! इति । अपि च मम पश्चान्निष्क्रम्य प्रथमतरमागत्य प्राचीनद्वारे तस्थुरिति ।

अथ राजा तेऽपि स्थविरा रथं नारूढा इति श्रुत्वा इदानीमार्य्या उच्चशयनानि न प्रतीच्छन्तीति विचिन्त्य भद्राः ! यूयं भूम्यास्तरणान्याऽसनानि प्रज्ञापयतेति चोक्त्वा प्रतिमार्गं जगाम । तेऽपि सचिवा भूम्यामासनं प्रज्ञप्य उपरि विचित्रास्तरणानि च प्राज्ञपयन् । राजा प्रतिमार्गं गत्वा स्थविरान् समभिवन्द्य महामहेन्द्रस्य स्थविरस्य हस्तात् पात्रं गृहीत्वा महत्या पूजया सत्कारेण च स्थविरान्नगरं प्रावेशयत् । पुना राजभवनं प्रावेशयच्च । स तु स्थविर आसनमवलोक्याऽस्माकं

भगवतो गौतमस्य शासनं सकले लङ्काद्वीपे पृथिवीवत्प्रसृतं निश्चलं प्रतिष्ठास्यतीति विचिन्तयन्नेव निषसाद । अथ राजा तांश्च स्थविरान् प्रणीतैः खाद्यैर्भोज्यैः स्वहस्तेन भोजयामास । ततश्च राज्ञा अनुलादेवीप्रमुखाः पञ्चशतस्त्रियः स्थविरेभ्यः समभिवादनं पूजासत्कारञ्च कुर्व्वन्तु इति समानीता एकमन्तं निषण्णाः । अथ महेन्द्रः स्थविरः सपरिजनस्य राज्ञो धर्म्मरत्नवृष्टिं वर्षयन् प्रेतवस्तु विमानवस्तु सत्यसंयुक्तञ्च दिदेश । ता अपि पञ्चशतास्त्रियः स्थविरस्य धर्मदेशनां श्रुत्वा श्रोतापत्तिफलं लेभिरे ।

येऽपि मर्त्याः पुनरत्र दिवसे मिश्रकाद्रौ स्थविरान् ददृशुः । ते तत्र तत्र स्थविराणां गुणान् कथयामासुः । तद्गुणकथनमाकर्ण्य महाजना राजाङ्गने सन्निपत्य महान्तं निर्घोषं चक्रुश्च । अथ राजा अपृच्छत् । क एष शब्द इति । नागरिका देव ! स्थविरान् द्रष्टुं न लभामह इति रुवन्तीति । तदा राजा एवमचिन्तयत् । यदि ते इह प्रवेक्ष्यन्ति इहावकाशोऽपि न भविष्यतीति । गच्छत यूयं हस्तिशालायां वालुकामाकीर्य्य पञ्चवर्णानि कुसुमानि च वस्त्रैर्वितानञ्च बद्ध्वा मङ्गलहस्तिस्थाने स्थविरस्याऽऽसनमपि प्रज्ञापयतेत्यवदत् । आमात्यास्तथा चक्रुः । अथ महामहेन्द्रः स्थविरस्तत्र गत्वा निषद्य देवदूतं नाम सूत्रं दिदेश । देशनायाः पर्य्यवसाने सहस्रजनाः श्रोतापत्तिफले प्रतितस्थुः । ततश्च हस्तिशालाऽपि अतिसम्बाधेति दक्षिणद्वारि नन्दनोद्याने आसनानि प्राज्ञापयन् । स च स्थविरस्तत्राऽपि निषद्य आशीविषोपमं नाम सूत्रं दिदेश । देशनायाः पर्य्यवसाने सहस्रप्राणिनः श्रोतापत्तिफलं प्रतिलेभिरे । इत्थमागतदिवसाद्द्वितीये दिवसे पञ्चशतोत्तराणां द्विसहस्राणां प्राणिनां धर्म्माभिसमयोऽभूत् । अथ स्थविराणां दर्शनार्थमागतागतैर्महाजनैः सह मोदमानस्य तस्य स्थविरस्य तत्रैव सायं जातम् । अथ स्थविरः कालं संलक्ष्य गच्छाम

इदानीं मिश्रकाद्रिमिति चोक्त्वा उदतिष्ठत् । अथ सचिवा अब्रुवन् । कुत्र भवन्तो ! गच्छत ? । भवन्तः ! तत्र गन्तुमिदानीमकालः । इदमेव नन्दनवनं नामोद्यानमार्य्याणां निवसनार्थमर्हम् । अलं गत्वेति । पुनरपि राज्ञो वचनेनाब्रुवन् । भवन्तः ! राजा एवमाह स्म । इदं मेघवनं नामोद्यानं मम पैतृकम् । नगरान्नातिदूरं नात्यासन्नं गमनागमनसम्पन्नं च । अत्र स्थविरा वासं कुर्व्वन्तु इति । ऊषुश्च ते स्थविरा मेघवन उद्याने तां रजनीमिति । अथ राजा निशाया अपगमे स्थविरस्य सकाशं समेत्य सुखशयनादीन् प्रथमं पृष्ट्वा भवन्तः ! युष्माकमारामोप्यर्हतीत्य पृच्छच्च । अथ स्थविर आह स्म । महाराज ! भगवता गौतमेन भिक्षूणामारामोऽनुज्ञातः । तस्मादस्माकमारामोऽर्हतीति । तच्छ्रुत्वा प्रसन्नो राजा सुवर्णभृङ्गारं गृहीत्वा महामहेन्द्रस्य स्थविरस्य पाणावुदकमपातयत् । तस्मै च महामेघवनं नामोद्यानं समभ्यर्पयामास । सहैवोदकपतनेन इयं महोर्व्वी प्राकम्पत ।

इदं लङ्काद्वीपे बुद्धशासनप्रतिष्ठापनम् ।

---

इति श्रीशीलस्कन्धस्थविरस्य कृतौ सद्धर्मकरन्दे
सम्बुद्धशासनप्रतिष्ठापरिदीपनो नाम
चतुर्विंशोध्यायः ।



# अथ पञ्चविंशोऽध्यायः ।

एवं प्रतिष्ठिते बुद्धशासने बहवः क्षत्रियब्राह्मणादयो नागरिकास्त्रिषु शरणेषु च पञ्चसु शीलेषु च प्रतिष्ठिता बहूनि कुशलकर्माणि सञ्चिक्युः । तदा लङ्काद्वीपेऽनेकशतसहस्रक्षीणाश्रवैर्भिक्षुभिर्भिक्षुकीभिश्च समलङ्कृतः प्राभूत्। अनुराधपुरनामके नगरे च जम्बुद्रोणिनामके नगरे च पुलस्तिपुरनामके नगरे च मलयराष्ट्रे च रोहणजनपदे महाग्रामनामके नगरे च सर्वेष्वपि नगरजनपदग्रामनिगमादिषु बुद्धशासनमतीव निर्मलं परिशुद्धं विरराज । तस्मिन् काले जम्बूद्वीपे च लङ्काद्वीपे च त्रिविधा-पडभिज्ञाद्यनेकगुणगणसमुपलक्षिता महाक्षीणाश्रवा अर्हन्तो भगवतो गौतमस्य प्रशस्तप्रवरोदारपरमगम्भीरविचित्रनिपुणधर्मं सार्थकथं त्रिपिटकञ्च मुखपाठवशात् प्रवर्त्तयन्ते स्म ।

एवं च गच्छति काले भगवतो गौतमस्य परिनिर्व्वाणाच्चतुःपञ्चाशदुत्तरचतुःशतसंवत्सरेषु अतिक्रान्तेषु वृत्तग्रामण्यभयो नाम कुमारः श्रीलङ्कायां राज्याभिषेकेनाऽभिषिक्तः । स च राजा वृत्तग्रामण्यभयः सम्बुद्धशासने अतीव प्रसन्नः । सश्रद्धो गुणवांश्च । स राजा धर्म्मेण च शान्त्या च लोकान्पर्यपालयत् । तदा क्षीणाश्रवा अर्हन्त एवमचिन्तयन् । इदानीं महामतयो बहुश्रुतास्त्रिविद्यापडभिज्ञादिगुणोपेताः क्षीणाश्रवा अर्हन्तो भगवतो गौतमस्य सार्थकथं सकलं त्रिपिटकं धारणवशाद्देवावयन्ति । अनागतेऽपि काले तादृशा ज्ञानवन्तो बहुश्रुताः स्मृतिसम्पन्नाः क्षीणाश्रवा अर्हन्तो न भविष्यन्ति । तादृशां महाज्ञानवतां बहुश्रुतानामभावाज्जिनशासनस्य हानिरपि दृश्यते । तस्माद्-

विंश्यति काले जिनशासनस्याभिवृद्धये अस्मिन्नेव काले उद्योगं कारयितुं युक्तमिति । सपदि राजाऽपि वृत्तग्रामण्यभयो महाविहारं जगाम । सङ्घोपि तदर्थं राज्ञे वृत्तग्रामण्यभयाय न्यवेदयत् । अथ राजा एवमपृच्छत् । किं भवन्तः मया कर्त्तव्यमिति । महाराज! मण्डपकारापणादीनि सर्व्वाणि तदुपकरणानि त्वयैव कर्त्तव्यानीति । राजा तत् सर्व्वं यथानुरूपं कारयितुं संप्रत्यैच्छत् । अथ राजा गृहं गत्वा सचिवानामन्त्र्य एवमाह स्म । भद्राः! अहं बुद्धशासनसङ्ग्रहं कर्तुकामोऽस्मि । यूयं मत्सहाया भवतेति ।

अथ ते सचिवा राज्ञे वृत्तग्रामण्यभयाय एवं प्रोचुः । देव! यदस्माभिरेतदर्थं कार्य्यम् । तत् सर्व्वं करिष्याम इति । अथ राजा वृत्तग्रामण्यभयो लङ्काद्वीपवासिनां सर्व्वेषां भिक्षुसङ्घानां अनुराधपुरनामके नगरे महाविहारे सन्निपातं कारयित्वा तेभ्यो भिक्षुभ्य एवमाह स्म । भवन्तः! इदानीं यूयं भगवतो गौतमस्य सार्थकथं त्रिपिटकं मुखपाठेन प्रवर्तयन्ते । भविष्यति काले तादृशा बुद्धिमन्तो न भविष्यन्ति । तस्मादहं भगवतो गौतमस्य सार्थकथं त्रिपिटकं पुस्तकेषु लेखयितुकामोऽस्मि । यथा तद्भवन्तः कर्तुमिच्छन्ति तथा कुरुत अहं तस्मिन् सहायो भवामि अथ महास्थविरा आहुः स्म । साधुर्महाराज! तवाभिप्रायः । अनागतेऽध्वनि पापबहुलत्वात् पापोत्सन्नत्वाद्भगवतो गौतमस्य सार्थकथं सकलं प्रवचनं मुखपाठेन धर्तुं न शक्यते । तस्मात् पुस्तकारूढं कर्तुं समयोऽयमिति । कथं कुर्म्मो भवन्तः? इति । यथा पुरा महाकाश्यपादयो महास्थविरास्त्रिषु वारेषु समगायन् एवमेव सङ्गाय पुस्तकेषु लेखितुमर्हथेति । कुत्र भवन्तः! तां सङ्गीतिं करिष्यथेति । महाराज! अलोकनामिकायां गुहायां करिष्यामः । अथ राजा साधु भवन्तः! यन्मया कर्त्तव्यं तत् सर्व्वं करिष्यामीति प्रतिशुश्राव ।

ततश्च महास्थविरा भगवतो गौतमस्य शासनं सुस्थिरं भविष्यतीति प्रहृष्टाः सत्वरमेव सार्थकथासु त्रिपिटकपर्य्याप्तिषु विशारदांस्त्रिविद्यापड-भिज्ञाद्यनेकगुणोपेतान् प्रासंविदः क्षीणाश्रवान् सहस्रं भिक्षून् समुच्चित्य अवशेषान् भिक्षूंस्तत्र तत्र प्रेषयामासुः ।

अथ तेऽपि क्षीणाश्रवा महास्थविराः सार्द्धं क्षीणाश्रवसहस्रेणालोक-गुहामाजग्मुः । तत्रापि तेन राज्ञा धृतश्रामण्यभयेन कारिते महार्घे मण्डपे निषद्य तत्साहाय्येन सकलं सार्थकथं त्रिपिटकं पुरा महाकाश्यपादि-वशिगणैः सङ्गीतिकृताकारेण समगायन् । तेऽपि क्षीणाश्रवा राज्ञा धृत-श्रामण्यभयेन दत्तेषु धवलाकारपर्णेषु लिखित्वा पुस्तकारूढं चक्रुः । तस्मिंस्तु धर्म्मसङ्गीते पुस्तकारूढे पर्य्यवसाने महान् भूमिचालोऽभूत् । तानि च पुस्तकानि यथा प्रथमं लिखितानि तथैव अनूनानधिकाक्षरपदं पुनःपुनर्लेखयित्वा सकलेऽपि लङ्काद्वीपे जम्बुद्वीपे च सगौरवं समहं प्रवर्त्तयामासुः ।

एवं गच्छति च काले भगवतो गौतमस्य परिनिर्व्वाणात्रिपञ्चाश-दुत्तरनवशतसंवत्सरेषु अतिक्रान्तेषु महानामो नाम राजा लङ्कायाम-भिषिक्तः । स च राजा रविरिव महाप्रतापः त्रिविक्रम इव महाविक्रमः कृशानुरिव महातेजा गुरुरिव महाज्ञानी धनद इव धनवांश्चाभूत् । स तु राजा त्रिषु वस्तुषु निश्चलश्रद्धो लोकशासनसंरक्षणे सततमुद्योग-वान् धार्मिको धर्म्मरतश्चाभवत् । तदा जम्बूद्वीपे मगधेषु जनपदेषु मध्यमण्डले बोधिद्रुमराजस्य समीपग्रामे सङ्ग्रामस्य नाम राज्ञः पुरोधसः केशिनो नाम ब्राह्मणस्यैकः पुत्रोऽभूत् । स च तरुणः सन् विद्याशिल्पकलानां वेत्ता त्रिषु वेदेषु पारज्ञतो विज्ञातसमयः सर्व्ववाद-विशारदश्चासीत । स तु वादार्थी जम्बूद्वीपे विचरन् विहारमेकमागम्य

रात्रौ पातञ्जलमतं सम्पूर्णपदं सुपरिमण्डलं [illegible] । [illegible]
नाम स्थविरस्तच्छ्रुत्वा एवमचिन्तयन् । अयं [illegible]
मर्हे इति । स च स्थविर एवमाह स्म । कोऽत्र [illegible]

अथ स मानव एवमपृच्छत् । किं त्वं [illegible] ।
जनामि मानव ! अहमिति । स मानवः [illegible]
दपृच्छत् । स च स्थविरः सर्व्वं प्रतिव्याहरत् । [illegible]
स मानव एवमाह स्म । भवन् ! त्वं [illegible] ।
स्थविरः अभिधर्म्मे प्रश्नमकार्षीत् । स मानव[illegible]
वन् कस्यैष मन्त्र इत्यपृच्छत् । स तु स्थविर एष [illegible]
ब्रवीत् । देहि मह्यमेनमिति । त्वं मव्रज्य एतं गृहाण मानव ! [illegible] ।
अथ स मानवो मन्त्रार्थी प्रव्रज्य सकलं त्रिपिटकं [illegible] । [illegible]
यनमार्ग इति तद्ग्रहीच्च । बुद्धस्येव घोषोऽस्यास्तीति [illegible]
नाम्ना प्रतीतश्चाभूत् ।

तदा स च बुद्धघोषो नाम स्थविरस्तस्मिन्नेव विहारे वसन् [illegible]
दयं नाम व्याकरणञ्च धर्म्मसङ्गिणीप्रकरणस्य अर्थशालिनी[illegible]
चकार । तथा परित्तार्थकथां कर्तुमारेभे तद्दृष्ट्वा [illegible]
स्थविर एवमाहस्म । भद्र ! भगवतो गौतमस्य प्रवचने [illegible]
नीतम् । नास्तीहार्थकथा स्थविरवादाश्च । तथाऽप्युपना [illegible]
नीतं सङ्गीतित्रयमारूढं सम्बुद्धदेशितं महाकाश्यपादीनां [illegible]
सङ्गीतं कथामार्गञ्च समीक्ष्य सिंहलभाषया कृता [illegible]

* तद्व्याकरणमस्मिन् काले सर्वथा लुप्तप्रायमिह कुत्रचित् [illegible]
एतत्पुस्तकं धर्मसङ्गिणीनामकस्य प्रकरणस्य एका अर्थकथेति [illegible]

नामके नगरे आचार्य्यबुद्धदत्तस्थविरेण विनयविनिश्चयो नाम ग्रन्थ उत्तरविनिश्चयो नाम ग्रन्थो रूपारूपविभागो नाम ग्रन्थोऽभिधर्म्मावतारो नाम ग्रन्थश्च कृतः । तथा बुद्धदत्तनाम्ना अपरेण स्थविरेण बुद्धवंशस्य मधुरार्थविलासिनी नाम अर्थकथा कृता । मधुरार्थविलासिनी नाम बुद्धवंशार्थकथाऽपि महाबुद्धदत्तस्थविरेणैव कृतेति केचिद्वदन्ति ।

जम्बूद्वीपे आचार्य्येणानन्दस्थविरेण सप्तानामभिधर्म्मार्थकथानां सप्त मूलटीकाः कृताः । लङ्काद्वीपासन्ने द्रविडराष्ट्रे पदरतीर्थे आचार्य्यधर्म्मपालस्थविरेण इत्युक्तकस्य अर्थकथा उदानार्थकथा चर्य्यापिटकार्थकथा स्थविरगाथाया अर्थकथा विमानवस्तुनामकस्य विमलविलासिनी नाम अर्थकथा प्रेतवस्तुनामकस्य विमलविलासिनी नाम टीका अर्थकथा विशुद्धिमार्गस्य परमार्थमञ्जूषा नाम टीका दीर्घनिकायार्थकथाया लीनार्थप्रकाशनी नाम टीका मध्यमनिकायार्थकथाया लीनार्थप्रकाशिनी नाम टीका संयुक्तनिकायार्थकथाया लीनार्थप्रकाशिनी नाम बुद्धवंशार्थकथायाः परमार्थदीपनी नाम टीका अभिधर्म्ममूलटीकानां लीनार्थवर्णना नामानुटीका नेत्त्यर्थकथायाष्टीका चेतामे द्वादश ग्रन्थाः कृताः ।

जातकार्थकथाया लीनार्थप्रकाशनी नाम टीकापि आचार्य्यधर्म्मपालस्थविरेणैव कृतेति केषाञ्चिन्मतम् । लङ्काद्वीपे आचार्य्यमहानामस्थविरेण प्रतिसंभिदामार्गस्य सद्धर्म्मप्रकाशिनी नाम अर्थकथा कृता । तथा लङ्काद्वीपे आचार्य्येण उपसेनस्थविरेण महानिर्देशस्य सद्धर्म्मस्थितिर्नाम अर्थकथा [illegible] नामरूप- [illegible] च कृतः ।

* केचित्तु एष अनुरुद्धस्थविरः काञ्चीपुरनिवासीति वदन्ति ।

लङ्काद्वीप आचार्य्यशारिपुत्रमहास्वामिनाम्ना स्थविरेण समन्तप्रासादिकाया नाम विनयार्थकथायाः सारार्थदीपनी नाम टीका विनयसङ्ग्रहो विनयसङ्ग्रहटीका अङ्गोत्तरनिकायार्थकथायाः सारार्थमञ्जूषा नाम टीका अभिधर्मार्थसङ्ग्रहसिंहलार्थव्याख्या च चान्द्रपञ्चिकाटीका च कृता ।

एवं लङ्काद्वीपे तेषु तेषु जनपदेषु तत्तत्काले अपरैरपि नानाचार्य्यवर्य्यैर्धर्म्मविनययोरनेकग्रन्था नानाविधाः सुप्रशस्ता व्याकरणालङ्कृतिछन्दोग्रन्थाश्च प्रायो विरचिताः । तेऽप्यत्र मया न दर्शिताः । लङ्काद्वीपो हि प्रशस्तग्रन्थकृद्भिर्बहुभिराचार्य्यवर्य्यैर्विभूषितोऽभूदिति ।

॥ शिवम् ॥

**इति श्रीशीलस्कन्धस्थविरस्य कृतौ सद्धर्ममकरन्दे**
**पुस्तकलिपिपरिदीपनो नाम**
**पञ्चविंशोऽध्यायः**



# ग्रन्थकृत्प्रार्थना ।

एतत्सद्धर्मपूर्णञ्जिनवरचरितं श्रद्धया भक्तिनम्रः
श्रोता यः श्रावयेद्यः प्रतिदिनमनिशं शुद्धसेवाभिषक्तः ।
त्यक्त्वा क्लेशान्समग्रानखिलकलिबलान्मारपञ्चं जित्वा
पारं संसारसिन्धोर्व्रजति स परमं सर्वविघ्नोपशान्तम् ॥१॥
सन्तः सन्तु निरापदः सुकृतिनो धर्मे स्थिता मानवाः
भूमीपा दशराजधर्मनिरताः शासत्वजस्रं महीम् ।
वर्षन्त्वम्बुधरो धरामभिकिरन्शस्याभिसंवृद्धये
मैत्रीं सर्व्वजनाः परस्परमलं संवर्द्धयन्त्वादरात् ॥ २ ॥



# उपसंहारः ।

मैत्री साधुषु, दीनजन्तुषु दया, क्षान्तिः परं शत्रुषु
संवृत्ता हृदि यस्य चेन्द्रियदमः पुण्योद्भवादग्रजः ।
शिक्षारक्षणसंयमादिगुणवान्सद्धर्मविद्धैनयः
सोऽयं श्रीसुमनोमहायतिवरो बन्धुर्विदां सद्गुरुः ॥ १ ॥

प्रेयो यस्य भवेत्तरां प्रियतरं श्रेयश्च सौम्योदयं
शिष्योन्मीलनसत्क्रियादिषु पटुर्वक्ता यतीनां हितः ।
धर्म्मज्ञो यतिवृन्दवन्दितपदाम्भोजः सुवाणीर्गुरु-
र्नैताऽयं प्रियरत्ननामविदितः सौभाग्यसंवर्द्धितः ॥ २ ॥

गायन्तीव दिवौकसो दिवि गुरोः कीर्त्तिं सुरेन्द्रम्प्रति
भूमौ यस्य सरस्वतीविलसितां सत्कीर्तिमालां भृशम् ।
वर्षे भारतनामके सुवितत: श्रीतर्कवाचस्पति-
स्तारानाथसमाह्वयः क्षितिसुराचार्य्यः सदग्रेसरः ॥ ३ ॥

यस्मिन्नेष कृपां चकार मधुरां विद्वद्वरेण्यश्चिरं
यैवासीदनुरूपलब्धिसुरसा बोधप्रयत्नोपगा ।
एभिर्यो गुरुभिः समुन्नतिपरैः संशिक्षितो वर्द्धितः
साम्बुद्धे वचने पृथक्प्रवितते गीर्वाणवाण्यादिषु ॥ ४ ॥

सार्वज्ञे रसरामवेदयुगलैर्युक्ते समाने मधौ
मासस्याद्यदले दिने शरमितेऽथो मुक्तिमार्गास्पदे ।
लङ्कायां यतिवृन्दसन्निवसतौ श्रीशैलबिम्बाभिधे
ह्यारामे निवसन्मुनीन्द्रसदनालङ्कारसम्भूषिते ॥ ५ ॥

शीलस्कन्धसमाह्वयो यतिवरो ग्रन्थं नवग्रामजः
शाके वेदधरागजेन्दुविमिते भानौ वृषे संस्थिते।
ग्राणैषीन्मकरन्दसंज्ञकमिमं सद्धर्मपूर्वं परं
मासैर्द्विफलितैर्भवाब्धितरणे नौकायमानोऽस्त्वयम् ॥ ६ ॥

यावज्जगत्त्रयविभोर्विभवैकदृष्टिः
शिष्टैर्विभाति नितरां तनुभृत्प्रतिष्ठा।
तावद्भवोदधिसमुत्तरणैकदेष्टा
भूयान्मुनीन्द्रचरितैरधिवासितोऽयम् ॥ ७ ॥

यत्किंचिदत्र कुहचित्स्खलितं प्रमादाद्-
भ्रान्त्यापि तत्सहृदयैः कृपया विशोध्यम्।
को वेत्ति सर्वमपि कुत्र च मानुषाणां
विद्यावतामपि हि न स्खलितं जगत्याम् ? ॥ ८ ॥

इति ॥

